## सूक्तम् २५–२१६.

गृत्समद ऋषिः । ब्रह्मणस्पतिर्देवता । जगती छन्दः ॥

**इन्धा॑नो अ॒ग्निं व॑नवद्वनुष्य॒तः कृ॒तब्र॑ह्मा शूशुवद्रा॒तह॑व्य॒ इत् ।**
**जा॒तेन॑ जा॒तमति॒ स प्र स॑र्सृते॒ यंयं॑ यु॒जं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥१॥**

इन्धा॑नः । अ॒ग्निम् । व॒न॒व॒त् । व॒नु॒ष्य॒तः । कृ॒तऽब्र॑ह्मा । शू॒शु॒व॒त् । रा॒तऽह॑व्यः । इत् ।
जा॒तेन॑ । जा॒तम् । अति॑ । सः । प्र । स॒र्सृ॒ते॒ । यम्ऽय॑म् । यु॒जम् । कृ॒णु॒ते । ब्रह्म॑णः । पतिः॑ ॥ १ ॥

**वी॒रेभि॑र्वी॒रान्व॑नवद्वनुष्य॒तो गोभी॑ र॒यिं प॑प्रथ॒द्बोध॑ति॒ त्मना॑ ।**
**तो॒कं च॒ तस्य॒ तन॑यं च वर्धते॒ यंयं॑ यु॒जं॑ कृणु॒ते ब्रह्म॑ण॒स्पतिः॑ ॥२॥**

वी॒रेभिः॑ । वी॒रान् । व॒न॒व॒त् । व॒नु॒ष्य॒तः । गोभिः॑ । र॒यिम् । प॒प्र॒थ॒त् । बोध॑ति । त्मना॑ ।
तो॒कम् । च॒ । तस्य॑ । तन॑यम् । च॒ । व॒र्ध॒ते॒ । यम्ऽय॑म् । यु॒जम् । कृ॒णु॒ते । ब्रह्म॑णः । पतिः॑ ॥ २ ॥

---

### भाषायाम्.

१. यंयं [ यजमानं ] ब्रह्मणस्पतिर्युजं कृणुते ( =स्वकीयं मित्रं करोति ) [ स सः ] अग्निं समिन्धानः ( =यज्ञार्थमग्निं प्रज्वलितं कुर्वन् ) [ यजमानो ] वनुष्यतो वनवत् ( =शत्रून् विजेतुं शक्नोति ) [ स स ] कृतब्रह्मा ( =कृतस्तोत्रो ) रातहव्यः ( =दत्तहविष्कश्च सन् ) शूशुवत् ( =प्रवृद्धो भवितुं शक्नोति ) [ स स च ] जातेन जातम् अति प्र सर्सृते ( =पुत्रेणोत्पादितं पौत्रम् अतीत्य भृशं प्रसरति=पौत्रमपि पश्यंश्चिरकालं जीवेत् ) ॥

२. यंयं [ यजमानं ] ब्रह्मणस्पतिर्युजं कृणुते ( =स्वकीयं मित्रं करोति ) [ स स ] वीरेभिः ( =वीरैः शूरैः स्वकीयैः पुत्रादिभिर् ) वीरान् वनुष्यतः ( =शूरान् शत्रून् ) वनवत् ( =जेतुं शक्नोति ) [ स स ] गोभी रयिं ( =धनं ) पप्रथत् ( =विस्तारयति ) [ स स ] त्मना बोधति ( =स्वयं तं रयिं जानाति अनुभवति ) । तस्य [ तस्य ] तोकं च तनयं च ( =पुत्रादीनि अपत्यानि पुत्रादीनां चापत्यानि पौत्रसंतानानि च ) वर्धते ( =वर्धयति=प्रकर्षं नयति ) ॥

## सूक्त २५-२१६.

ऋषि-गृत्समद. देवता-ब्रह्मणस्पति. वृत्त-जगती.

१. ज्या ज्या [यजमाना]ला ब्रह्मणस्पति [आपला] मित्र करितो [तो तो] अग्नीला प्रज्वलित करणारा [यजमान] हिंसेच्छू [शत्रूं]चा पराजय करूं शकतो, [तो तो] [यजमान] स्तोत्रें म्हणून [आणि] हव्यें देऊन उत्कर्षाप्रत पावूं शकतो, [आणि] तो तो यजमान पौत्राच्या पलीकडे जगूं शकतो.

२. ज्या ज्या [यजमाना]ला ब्रह्मणस्पति [आपला] मित्र करितो [तो तो] शूर पुत्रांच्या योगानें शूर शत्रूंस जिंकूं शकतो, [तो तो] गाईंनीं संपत्तीची वृद्धि करितो, [आणि] [तिला] स्वतः अनुभवितो; त्याच्या मुलांला आणि नातवांला ब्रह्मणस्पति वाढवितो.

## HYMN 25-216.

To *Brahmaṇaspati.* By *Gritsamada.* Metre—*Jagati.*

1. Every one whom Brahmaṇaspati makes [his] friend shall, having kindled Agni, conquer the enemies, [and] shall, having chanted hymns [and] offered oblations, grow prosperous, [and] shall prolong his life beyond his son's son.

2. Every one whom Brahmaṇaspati makes [his] friend shall vanquish hostile heroes with [his own] heroes, [and] shall extend [his] wealth with cows and enjoy [it] himself, and [Brahmaṇaspati] prospers his children and grandchildren.

---

१. ब्रह्मणस्पतीचा प्रसाद झाल्यापासून काय लाभ आहे तें यांत सांगितलें आहे. पुढच्या तीन मंत्रांतहि हेंच सांगितलें आहे.

२. 'गाईंनीं' इ०. म्हणजे त्याला गाई मिळतात, आणि त्यांच्या योगानें त्याची संपत्ति वाढते.

'स्वतः अनुभवितो.'=' बोधति त्मना.' अक्षरशः ' स्वतः जाणतो.'

सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रीँरभि वष्ट्योजसा ।
अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ३ ॥

सिन्धुः । न । क्षोदः । शिमीऽवान् । ऋघायतः । वृषाऽइव । वध्रीन् । अभि । वष्टि । ओजसा ।
अग्नेःऽइव । प्रऽसितिः । न । अह । वर्तवे । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ३ ॥

तस्मा अर्षन्ति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति ।
अनिभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ४ ॥

तस्मै । अर्षन्ति । दिव्याः । असश्चतः । सः । सत्वऽभिः । प्रथमः । गोषु । गच्छति ।
अनिभृष्टऽतविषिः । हन्ति । ओजसा । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ४ ॥

---

## भाषायाम्.

३. यंयं [यजमानं] ब्रह्मणस्पतिर्युजं कृणुते (=स्वकीयं मित्रं करोति) [स स] शिमीवान् (=उपासनाकर्मयुक्तो यजमानः) सिन्धुर्न क्षोदः (=नदः कूलं यथा) [अथवा] वृषा वध्रीनिव (=सेचनसमर्थः=वीर्यवान् पुरुषो यथा वीर्यरहितान् पुरुषांस्तथा) ओजसा (=तेजसा=पराक्रमेण) ऋघायतः अभि वष्टि (=शत्रून् हन्तुमभितः कामयते=हन्तुं समर्थो भवति) [स सः] अग्नेः प्रसितिरिव वर्तवे न ह [भवति] (=अग्नेर्ज्वाला यथा वारयितुं नैव शक्यते तथा न वारयितुं शक्यो भवति)॥

वध्रयो निष्पिष्टमुष्का निर्वीर्या बलीवर्दाः । तान् यथा वृषा सेचनसमर्थः सवीर्यो वृषभोभिभवति तद्वच्छत्रूनभिभवतीत्यर्थः॥ इति सायणः॥

४. यंयं [यजमानं] ब्रह्मणस्पतिर्युजं कृणुते (=स्वकीयं मित्रं करोति) तस्मै [तस्मै] दिव्या असश्चतः (=द्युसंबन्धिन्यो नद्यः मेघोदकरूपा नद्यः) अर्षन्ति (=प्राप्नुवन्ति) स [स] सत्वभिः (=शूरैर्वीरैः) प्रथमो गोषु गच्छति (=सर्वेभ्यो मनुष्येभ्यः प्रथमं गाः प्राप्नोति) [सस च] अनिभृष्टतविषिः (=अबाधितबलः सन्) ओजसा (=पराक्रमेण) हन्ति (=शत्रून हिनस्ति)॥

३. ज्या ज्या [ यजमाना]ला ब्रह्मणस्पति [आपला मित्र करितो [तो तो ] उपासनावान् [ यजमान ] [आपल्या] शत्रूंला, जसा एकादा नद कांठाला [ अथवा ] वीर्यवान् पुरुष जसा नपुंसकांला जिंकितो तसा, शौर्यानें जिंकितो, [ आणि ] अग्नीची ज्वाला जशी [हठवितां येत नाहीं] तसा हठविला जात नाहीं.

3. Every worshipper whom Brahmaṇaspati makes [ his ] friend, beats with [ his ] valour [ his ] enemies even as a river [its] bank, even as a brave hero beats those that are emasculated, and is irresistible like a flame of Agni.

४. ज्या ज्या [ यजमाना]ला ब्रह्मणस्पति [ आपला ] मित्र करितो त्या [ त्या ] [यजमाना]साठीं दिव्य नद्या धांवून येतात, तो [तो] [ सर्वां ] अगोदर शूर पुत्रांच्या योगेंकरून गाईंप्रत पावतो, तो तो अबाधितबल [ होत्साता ] पराक्रमानें [शत्रूंचें ] हनन करितो.

4. For every one whom Brahmaṇaspati makes [his] friend, the heavenly rivers flow, he is the first to attain to cows, he kills [ the enemy ] with his might, being of power that is uninjured.

---

४. ' दिव्य नद्या ' म्हणजे मेघोदकें.

तस्मा इद्विश्वे धुनयन्त सिन्धवोऽच्छिद्रा शर्म दधिरे पुरूणि ।
देवानां सुम्ने सुभगः स एधते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥५॥४

तस्मै । इत् । विश्वे । धुनयन्त । सिन्धवः । अच्छिद्रा । शर्म । दधिरे । पुरूणि ।
देवानाम् । सुम्ने । सुऽभगः । सः । एधते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ५ ॥ ४ ॥

## भाषायाम्.

५. यंयं [ यजमानं ] ब्रह्मणस्पतिर्युजं कृणुते ( =स्वकीयं मित्रं करोति ) तस्मै इत् ( =तस्मा एव ) विश्वे सिन्धवः (=सर्वा अपि नद्यो ) धुनयन्त ( =प्रवहन्ति ) । [ तस्मा एव ] पुरूणि ( =बहूनि ) अच्छिद्राणि ( =संततानि ) शर्म ( =शर्माणि =सुखानि ) दधिरे ( =धीयन्ते=दीयन्ते ) । स [ एव ] देवानां सुम्ने (=देवानां तद्दत्ते सुखे=प्रसादे ) सुभगः ( =सुभाग्यशाली ) [ सन् ] एधते ( =वर्धते ) ॥

## सूक्तम् २६–२१७.

गृत्समद ऋषिः । ब्रह्मणस्पतिर्देवता । जगती छन्दः ॥

ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयन्तमभ्यसत् ।
सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनम् ॥१॥

ऋजुः । इत् । शंसः । वनवत् । वनुष्यतः । देवऽयन् । इत् । अदेवऽयन्तम् । अभि । असत् ।
सुप्रऽअवीः । इत् । वनवत् । पृत्ऽसु । दुस्तरम् । यज्वा । इत् । अयज्योः । वि । भजाति । भोजनम् ॥ १ ॥

## भाषायाम्.

१. ऋजुः शंस इत् ( =आर्जवयुक्तः=ऋतकारी स्तोतैव ) वनुष्यतो वनवत् (=शत्रून् जेतुं शक्नोति) । देवयन् इत् अदेवयन्तम् अभि असत् (=देवानिच्छन्मनुष्य एव देवाननिच्छन्तम् अभिभूयात्) । सुप्रावीरित् (=सुरक्षणवानेव=ब्रह्मणस्पत्यादिभिः संरक्षितो मनुष्य एव ) दुष्टरं ( =दुःखेन तरीतुं जेतुं शक्यं शत्रुं ) पृत्सु ( =संग्रामेषु )

५. ज्या ज्या [ यजमाना]ला ब्रह्मणस्पति [ आपला ] मित्र करितो त्यासाठींच सर्व नद्या वाहतात, [ त्यालाच ] पुष्कळ अक्षय सुखें देण्यांत येतात, [ तो तोच ] देवांच्या कृपेंत [ राहून ] सौभाग्यशाली [ होत्साता ] वाढतो.

5. For every one whom Brahmaṇaspati makes [his] friend, all the rivers flow, [ to him ] are given many uninterrupted blessings, he prospers, fortunate in the favour of the gods.

---

## सूक्त २६–२१७.

ऋषि–गृत्समद. देवता–ब्रह्मणस्पति. वृत्त–जगती.

१. खरा स्तोताच शत्रूंला जिंकूं शकेल, देवेच्छु [ जन]च अदेवेच्छु [ जनां]चा पाडाव करूं शकेल, चांगला रक्षिलेला [जन]-च दुस्तर शत्रूला संग्रामांत जिंकूं शकेल, यजन करणारा मनुष्यच यजन न करणाऱ्या मनुष्याचें धन उपभोगील.

## Hymn 26–217.

To *Brahmaṇaspati*. By *Gṛitsamada*. Metre–*Jagatī*.

1. None but the honest praiser shall conquer the enemies, none but the god-loving man shall defeat the godless man, none but the well-protected man shall conquer the invincible man in battles, none but the sacrificing man shall enjoy the wealth of the unsacrificing one.

---

१. यांत देवोपासनेचें फळ सांगितलें आहे.

'यजन न करणाऱ्या' इ॰ म्हणजे नास्तिकाचें धन देवभक्तासच मिळेल, दुसऱ्यास मिळणार नाहीं.

यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये ।
हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आ वृणीमहे ॥ २॥

यजस्व । वीर । प्र । विहि । मनायतः । भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये ।
हविः । कृणुष्व । सुऽभगः । यथा । अससि । ब्रह्मणः । पतेः । अवः । आ । वृणीमहे ॥ २ ॥

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥३

सः । इत् । जनेन । सः । विशा । सः । जन्मना । सः । पुत्रैः । वाजम् । भरते । धना । नृऽभिः ।
देवानाम् । यः । पितरम् । आऽविवासति । श्रद्धाऽमनाः । हविषा । ब्रह्मणः । पतिम् ॥ ३ ॥

---

वनवत् (=हिंसात्) । यज्वा इत् (=यजनकर्तैव अयज्योर्भोजनम् (=यजनहीनस्य धनं) वि भजाति (=विशेषेण भजेत) ॥

---

## भाषायाम्.

२. हे वीर (=शूर पुत्र), यजस्व (=ब्रह्मणस्पतेर्यजनं कुरु) [अपि च] मनायतः प्र विहि (=शीघ्रं प्रवर्तमानान् शत्रून् प्रकर्षेण युद्धार्थं गच्छ) । वृत्रतूर्ये (=संग्रामे) मनो भद्रं कृणुष्व (=धार्ष्ट्ययुक्तं कुरु) । हविः कृणुष्व सुभगो यथाससि (=येन सौभाग्यशाली भवेस्तथा ब्रह्मणस्पतेरर्थे हविः सिद्धं कुरु) । [वयं] ब्रह्मणस्पतेरवः (=संरक्षणम्) आ वृणीमहे (=प्रार्थयामहे) ॥

मनायतो मन इव शीघ्रं प्रवर्तमानान् हिंसकान् । यद्वा अभिमन्यमानान् शत्रून् । इति सायणः ॥

३. श्रद्धामनाः (=श्रद्धा मनसि यस्य स) यो [यजमानो] देवानां पितरं (=देवपितृभूतं) ब्रह्मणस्पतिं हविषा आविवासति (=परिचरति) स इत् (=स एव) जनेन (=सर्वेण लोकेन) [वाजं धना च भरते=धनानि संपादयति] स [एव] विशा (=आत्मीयेन बन्धुजनेन) [वाजं धनानि च भरते] स [एव] जन्मना (=स्वकी-

२. हे वीरा, तूं यजन कर [ आणि ] वेगवान् शत्रूंवर चालून जा. विजय मिळविण्याविषयीं मन धैर्ययुक्त कर. सुभाग्यवान् होण्यासाठीं हवि सिद्ध कर. आम्ही ब्रह्मणस्पतीची कृपा याचितों.

३. जो कोण श्रद्धाळु अंतःकरणानें हवि अर्पण करून देवांचा पिता जो ब्रह्मणस्पति त्याची सेवा करील तोच लोकांच्या योगेंकरून, तोच आपल्या प्रजेच्या योगेंकरून, तोच आप्तांच्या योगेंकरून, तोच पुत्रांच्या योगेंकरून [ आणि ] तोच शूर योद्ध्यांच्या योगेंकरून अन्न [ आणि ] संपत्ति यांजप्रत पावेल.

2. Perform worship, o hero, attack the violent [enemies]. Make thy mind valorous for victory. Offer an oblation that thou mayest be fortunate. We implore the protection of Brahmanaspati.

3. He who, with faith in his heart, worships with oblation Brahmáṇaspati, the father of the gods—he alone attains to food [and] riches by the people, he [ alone ] by his kin, he [alone] by his relations, he [alone] by his sons [and] warriors.

---

२. यांत जो वीर सांगितला आहे तो सूक्तवक्त्याचा पुत्र किंवा दुसरा कोणी पुत्राप्रमाणें मानिलेला मनुष्य असावा. अथवा सूक्तकर्ता कवि यजमानास बोलत आहे असें समजावें. त्याला स्तोता म्हणतो कीं, तूं ब्रह्मणस्पतीचें स्तवन कर म्हणजे तो संग्रामांत यश मिळविणारें धैर्य देईल.

३. 'श्रद्धाळु अंतःकरणानें' ='श्रद्धामनाः'. विश्वास ठेवून भक्ति केली तर सफल होते ही जी समजूत ती अलिकडची आहे असें जें कितीएक लोक म्हणत असतात, तें म्हणणें बरोबर नाहीं असें या मंत्रावरून सिद्ध होतें.

**यो अस्मै हव्यैर्घृतवद्भिरविधत्प्र तं प्राचा नयति ब्रह्मणस्पतिः ।**
**उरुष्यतीमंहसो रक्षती रिषोंऽहोश्चिदस्मा उरुचक्रिरद्भुतः ॥४॥५॥**

यः । अस्मै । हव्यैः । घृतवत्ऽभिः । अविधत् । प्र । तम् । प्राचा । नयति । ब्रह्मणः । पतिः ।
उरुष्यति । ईम् । अंहसः । रक्षति । रिषः । अंहोः । चित् । अस्मै । उरुऽचक्रिः । अद्भुतः ॥ ४ ॥ ५ ॥

येर्जनैः ) स [ एव च ] पुत्रैर्नृभिः ( =पुत्रद्वारा इतरैः शूरैर्द्वारा च ) वाजम् ( =अन्नं धना (=धनानि च ) भरते ( =संपादयति =प्राप्नोति ) ॥

## भाषायाम्.

४. यो घृतवद्भिर्हव्यैः ( =आज्येनोपेतैर्हविर्भिर् ) अस्मै ( =तस्मै ब्रह्मणस्पतये ) अविधत् (=परिचरति ) तं [ यजमानं ] ब्रह्मणस्पतिः प्राचा प्र नयति (=ऋजुना मार्गेण प्रणयति=प्रकृष्टफलं प्रापयति ) । [ अपि च ] ईम् अंहसः उरुष्यति (=पापाद्रक्षति ) रिषः अंहोश्चित् रक्षति ( =हिंसकादारिद्र्याच्च रक्षति ) । अस्मै (=तस्मै यजमानाय ) [ ब्रह्मणस्पतिर् ] उरुचक्रिः ( =धनादेः प्रभूतस्य कर्ता) अद्भुतः (=महांश्च ) [ भवति ] ॥

अंहोश्चित् उरुचक्रिः दुःखात् मोचनकर्तेति पाश्चात्याः केचित् ॥

---

## सूक्तम् २७–२१८.

गृत्समदस्य पुत्रः कूर्म ऋषिः । गृत्समद एव वा । आदित्यो देवता । त्रिष्टुप् छन्दः ॥

**इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।**
**शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥१॥**

इमाः । गिरः । आदित्येभ्यः । घृतऽस्नूः । सनात् । राजऽभ्यः । जुह्वा । जुहोमि ।
शृणोतु । मित्रः । अर्यमा । भगः । नः । तुविऽजातः । वरुणः । दक्षः । अंशः ॥ १ ॥

४. जो कोण घृतयुक्त हव्यांच्या योगेंकरून ब्रह्मणस्पतीची सेवा करितो त्याला ब्रह्मणस्पति चांगल्या मार्गानें घेऊन जातो, त्याला तो पापापासून रक्षितो, हानीपासून आणि दारिद्र्यापासून रक्षितो. त्यासाठीं तो पुष्कळ पराक्रम करणारा आणि आश्चर्यकृत्यकारी [होतो].

4. Brahmaṇaspati leads by the right path him who may serve him with oblations mixed with clarified butter. He preserves him from distress, he saves him from harm and need. For him he is the performer of great deeds, [and is] wonderful.

## सूक्त २७–२१८.

ऋषि—गृत्समदाचा पुत्र कूर्म, अथवा गृत्समदच. देवता—आदित्य. वृत्त—त्रिष्टुभ्.

## HYMN 27–218.

To the *Âdityas*, i.e. the sons of *Aditi*. By *Kûrma* the son of *Gṛitsamada*, or by *Gṛitsamada* himself. Metre–*Trishṭubh*.

१. ह्या घृतस्रावी स्तुति आदित्यराजांप्रत मी नित्य जिह्वेनें अर्पण करितों. मित्र, अर्यमा, भग, प्रबळ वरुण, दक्ष, [आणि] अंश [हे] आमचें ऐकोत.

1. I always offer with [my] tongue these praises from which clarified butter is dropping, to the kings, the sons of Aditi. May Mitra, Aryamâ, Bhaga, mighty Varuṇa, Daksha [and] Aṃs'a hear us.

---

१. आदित्य (अदितीचे पुत्र) म्हणजे कोण कोणते देव समजावयाचे त्याविषयीं सू. १४ मं. ३ आणि टीप पहा.

'दक्ष' आणि 'अंश' याविषयीं सू. २१८ मं. १ आणि सू. १९२ मं. ४ आणि टीप पहा.

'घृतस्रावी स्तुति'=' घृतस्नूः गिरः' म्हणजे ज्यांजपासून तूप गळत आहे. हें वास्तविक म्हटलें म्हणजे हवीचें विशेषण आहे. पण स्तुतिहि हवीप्रमाणें अर्पण करण्यांत येत आहेत म्हणून, अथवा स्तुतीबरोबर हविसुद्धा अर्पण केलें असेल म्हणून, त्या विशेषणाचा प्रयोग केला आहे.

ह्या सूक्ताचा शांतिसूक्तांत, आणि तुळापुरुषांत पाठ म्हणण्याचा प्रचार आहे.

**इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त ।**
**आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २॥**

इमम् । स्तोमम् । सऽक्रतवः । मे । अद्य । मित्रः । अर्यमा । वरुणः । जुषन्त ।
आदित्यासः । शुचयः । धारऽपूताः । अवृजिनाः । अनवद्याः । अरिष्टाः ॥ २

**त आदित्यास उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः ।**
**अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति॥ ३॥**

ते । आदित्यासः । उरवः । गभीराः । अदब्धासः । दिप्सन्तः । भूरिऽअक्षाः ।
अन्तरिति । पश्यन्ति । वृजिना । उत । साधु । सर्वम् । राजऽभ्यः । परमा । चित् । अन्ति ॥ ३ ॥

१. घृतस्नूः (=घृतप्रस्राविणीर्) इमा गिरः (=स्तुतिरूपा वाचो) राजभ्य आदित्येभ्यः (=राजभूतेभ्योदितिपुत्रेभ्यः) सनात् (=सदा) जुह्वा (=जिह्वया) जुहोमि (=प्रयच्छामि) । मित्रः अर्यमा भगः तुविजातः (=प्रबलजातः=प्रबलो) वरुणः दक्षः अंशः [एते देवाः प्रत्येकं] नः शृणोतु (=अस्मान् शृणोतु=अस्माकं स्तोत्राणि शृणोतु) ॥

## भाषायाम्.

२. सक्रतवः (=समानकर्माणो) मित्रः, अर्यमा, वरुणः [इत्येते] शुचयः (=दीप्तिमन्तो) धारपूताः (=उदकधाराभिरिव पूताः शोधिता) अवृजिनाः (=निष्पाप) अनवद्याः (=निर्दोषा) अरिष्टाः (=अहिंसिता) आदित्यासः (=अदितेः पुत्रा) अद्य इमं मे स्तोमम् (=इदं मम स्तोत्रं) जुषन्त (=सेवन्ताम्) ॥

३. उरवः (=महान्तो) गभीराः (=गाम्भीर्योपेता) अदब्धासः (=स्वयम् अहिंसिता) दिप्सन्तः (=हिंसितुमिच्छन्तः=अन्येषां हिंसाकरणसमर्था) भूर्यक्षाः (=बहुनयनास्) ते (=पूर्वोक्ता आदित्या) वृजिना उत साधु (=वृजिनानि साधूनि च=जनैः कृतानि यानि पापानि पुण्यानि च तानि) अन्तः पश्यन्ति (=कानि पापानि कानि पुण्यानि भवन्तीति जानन्ति) । राजभ्यस् [तेभ्यः] सर्वं परमा चिद् अन्ति (=सर्वाणि परमाण्यपि अन्तिकानि समीपानि=यानि कान्यपि वस्तूनि दूरे स्थितानि तान्यपि सर्वाणि समीपतराणि) [भवन्ति] ॥

२. समानपराक्रम [ जे ] मित्र, अर्यमा [ आणि ] वरुण [ते] आज हें माझें स्तोत्र सेवोत. तेजस्वी, निर्मल, निष्पाप, निर्दोष, हानिरहित [ असे जे ] अदितीचे पुत्र [ ते माझें स्तोत्र सेवोत ].

३. ते जे महान्, गंभीर, अक्षय, क्षयकारी, पुष्कळ डोळ्यांचे अदितीचे पुत्र ते वाईट [कोणतें] आणि बरें [ कोणतें ] तें पाहत असतात. [ या आदित्य]राजांला सर्व कांहीं अत्यंत दूर असलेलेंहि समीपच [ होय ].

2. May Mitra, Aryamâ, [and] Varuṇa, of the same valour, hear to-day this my hymn—they the bright, the pure, the sinless, the stainless [and] the perfect sons of Aditi.

3. Those sons of Aditi great, deep, themselves unharmed [but] harming [the enemy], distinguish between that which is wrong and that which is right. To those kings every thing is near that is even most distant.

**धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।**
**दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥ ४ ॥**

धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाः ।
दीर्घऽधियः । रक्षमाणाः । असुर्यम् । ऋतऽवानः । चयमानाः । ऋणानि ॥ ४ ॥

**विद्यामादित्या अवसो वो अस्य यदर्यमन्भय आ चिन्मयोभु ।**
**युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्याम् ॥५॥६**

विद्याम् । आदित्याः । अवसः । वः । अस्य । यत् । अर्यमन् । भये । आ । चित् । मयःऽभु ।
युष्माकम् । मित्रावरुणा । प्रऽनीतौ । परि । श्वभ्राऽइव । दुःऽइतानि । वृज्याम् ॥ ५ ॥ ६ ॥

---

## भाषायाम्.

४. आदित्यास् ( =तेदितेः पुत्रा ) जगत् स्थाः ( =जङ्गमं स्थावरं च भूतजातं ) धारयन्तः ( =स्थापयन्तः ) विश्वस्य भुवनस्य देवा गोपाः ( =सर्वस्य लोकस्य दीप्तिमन्तो रक्षितारो ) दीर्घधियः ( =दीर्घबुद्धयः ) असुर्यं रक्षमाणाः ( =? बलस्य रक्षितार ) ऋतावानः ( =सत्यवन्त ) ऋणानि चयमानाः ( =ऋणान्यपगमयन्तश् ) [ च भवन्ति ] ॥

५. हे आदित्याः, हे अर्यमन्, यत् वः ( =युष्माकम् ) [ अवो ] भये आ चित् ( =भयेपि ) मयोभु (=सुखयितृ) [ भवति ] अस्य अवसो विद्यां ( =तद् रक्षणं लभेय ) । हे मित्रावरुणा ( =मित्रावरुणौ ), युष्माकं प्रणीतौ ( =युवयोः प्रणयने प्रकृष्टे नयने सति ) श्वभ्रेव दुरितानि परि वृज्यां ( =स्थातुमयोग्यानि गर्तवन्ति स्थलानीव पापानि परित्यजेयम् ) ॥

४. [ ते ] अदितीचे पुत्र स्थावर-जंगमातें धारण करणारे, सकळ भुवनाचे देदीप्यमान रक्षक, दीर्घ बुद्धि असलेले, बलाचें संरक्षण करणारे, सत्यवंत [ आणि ] ऋण फेडणारे [ होत ].

4. The Âdityas [ are ] the supporters of the moveable and the immoveable [ world ], the divine preservers of every creature, possessed of far-reaching wisdom, protectors of the power, full of truth, ] and] repayers of debts.

५. हे आदित्य हो, हे अर्यमा, जो तुमचा आधार भयप्रसंगांतहि सुखकारक [ होतो ] तो तुमचा आधार मला मिळो. हे मित्रावरुण हो, तुमच्या आश्रयाखालीं मी खळगे [ टाळिल्या]-प्रमाणें पापें टाळीन असें करा.

5. O sons of Aditi, o Aryaman, may I obtain that help of yours which is a source of comfort even in danger. O Mitra and Varuṇa, may I under your guidance avoid sins like pits.

---

४. 'बळाचें रक्षण करणारे'=' असुर्यं रक्षमाणाः'. सायणाचार्य 'असुर्य' म्हणजे येथें उदक असा अर्थ करितात. कितीएक पाश्चात्य 'देवसमूह' अथवा 'देवजाति' असा अर्थ करितात. हा शेवटील अर्थ संभवतो, कारण कीं असुर म्हणजे 'बळवान् होत्साता देव' हा अर्थ वेदांत प्रसिद्ध आहे. आम्हीं अर्थ अक्षरशः दिला आहे.

सुगो हि वो अर्यमन्मित्र पन्था अनृक्षरो वरुण साधुरस्ति ।
तेनादित्या अधि वोचता नो यच्छता नो दुष्परिहन्तु शर्म ॥ ६ ॥

सुऽगः । हि । वः । अर्यमन् । मित्र । पन्थाः । अनृक्षरः । वरुण । साधुः । अस्ति ।
तेन । आदित्याः । अधि । वोचत । नः । यच्छत । नः । दुःऽपरिहन्तु । शर्म ॥ ६ ॥

पिपर्तु नो अदिती राजपुत्राति द्वेषांस्यर्यमा सुगेभिः ।
बृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः ॥ ७ ॥

पिपर्तु । नः । अदितिः । राजऽपुत्रा । अति । द्वेषांसि । अर्यमा । सुऽगेभिः ।
बृहत् । मित्रस्य । वरुणस्य । शर्म । उप । स्याम । पुरुऽवीराः । अरिष्टाः ॥ ७ ॥

---

## भाषायाम्.

६. हे अर्यमन्, हे मित्र, हे वरुण, वः (=युष्माकं) पन्थाः (=मार्गः) सुगः (=सुगम्यः) अनृक्षरः (=कण्टकरहितः) साधुः (=ऋजुश्) [च] अस्ति । हे आदित्याः, तेन [पथा] नः अधि वोचत (=अस्माकम् अधिवक्तारो भवत) । नः (=अस्मभ्यं) दुष्परिहन्तु शर्म (=विनाशयितुमशक्यं सुखं प्रयच्छत) ॥

७. राजपुत्रा (=राजान आदित्याः पुत्रा यस्याः सा) अदितिः अर्यमा [च] सुगेभिः (=सुगम्यैर्मार्गैः) नो द्वेषांसि अति पिपर्तु (=शत्रूनतिक्रम्यास्मान् पारयतु तद्रहितं देशं प्रापयतु)। मित्रस्य वरुणस्य [च] शर्म (=आश्रयः) बृहत् (=महान्) [भवति]। [वयं] पुरुवीराः (=वीर्योपेतबहुपुत्रैरुपेता) अरिष्टाः (=अहिंसिताः सन्तस्) [तच्छर्म=तमाश्रयम्] उप स्याम (=उपगता भवेम=लभेमहि)॥

६. हे अर्यमा, हे मित्रा, हे वरुणा, तुमचा मार्ग सुगम्य, निष्कंटक [ आणि ] सरळ आहे. तर हे आदित्य हो, त्या मार्गानें तुम्ही आमचे कैवारी व्हा. आम्हांला अक्षय सुख द्या.

७. राजे आदित्य जिचे पुत्र होत ती अदिति, आणि अर्यमा, हे चांगल्या मार्गांनीं आम्हांला द्वेष्ट्यांच्या पार पाडोत. मित्राचा आणि वरुणाचा जो आश्रय तो मोठा होय; वीर्यवान् पुष्कळ पुत्रांनीं संपन्न आणि हानिरहित होत्साते आम्ही [ त्या आश्रया]प्रत पावूं असें ते करोत.

6. O Aryaman, o Mitra, o Varuṇa, safe and thornless and straight is your path. Be our champions therewith, o Âdityas. Give us indestructible happiness.

7. May Aditi the mother of the kings, and may Aryamâ carry us by safe roads across the enemies. Great is the support of Mitra and Varuṇa. May we, blessed with many brave sons [and] free from harm, possess that support.

**ति॒स्रो भूमी॑र्धा॒रय॒न् त्रीँरु॒त द्यून्त्रीणि॑ व्र॒ता वि॒दथे॑ अ॒न्तरे॑षाम् ।**
**ऋ॒तेना॑दित्या॒ महि॑ वो महि॒त्वं तद॑र्यमन्वरुण मित्र॒ चारु॑ ॥ ८ ॥**

ति॒स्रः । भूमीः॑ । धा॒रय॑न् । त्रीन् । उ॒त । द्यून् । त्रीणि॑ । व्र॒ता । वि॒-द॒थे । अ॒न्तः । ए॒षा॒म् ।
ऋ॒तेन॑ । आ॒दि॒त्याः॒ । महि॑ । वः॒ । म॒हि॒ऽत्वम् । तत् । अ॒र्य॒म॒न् । वरु॑-ण॒ । मि॒त्र॒ । चारु॑ ॥ ८ ॥

**त्री रो॑च॒ना दि॒व्या धा॑रयन्त हिर॒ण्ययाः॒ शुच॑यो॒ धार॑पूताः ।**
**अस्व॑प्नजो अनिमि॒षा अद॑ब्धा उरु॒शंसा॑ ऋ॒जवे॒ मर्त्या॑य ॥ ९ ॥**

त्री । रो॒च॒ना । दि॒व्या । धा॒र॒य॒न्त॒ । हि॒र॒ण्ययाः॑ । शुच॑यः । धार॑ऽपूताः । अस्व॑प्नऽजः । अ॒नि॒ऽमि॒षाः । अद॑ब्धाः । उ॒रु॒ऽशंसाः॑ । ऋ॒जवे॑ । मर्त्या॑य ॥ ९ ॥

---

## भाषायाम्.

८. [आदित्यास्] तिस्रो भूमीः (=त्रीन् लोकान्) उत त्रीन् द्यून् (=त्रीन् द्युलोकान्) [च] धारयन् (=धारयन्ति)। विदथे अन्तः (=यज्ञे) एषां (=तेषां) व्रता (=व्रतानि) त्रीणि [सन्ति]। हे आदित्याः, ऋतेन (=सत्यरूपेण यज्ञेन) वो महित्वं महि (=युष्माकं महत्त्वं महत्) [भवति]। हे अर्यमन्, हे वरुण, हे मित्र, तद् [वो महित्वं] चारु (=सर्वोत्कृष्टं) [भवति]॥

तिस्रो भूमीः। अत्र भूमिशब्दो लोकत्रये वर्तते। यो द्वितीयस्यां तृतीयस्यां पृथिव्यामित्यत्र यथा पृथिवीशब्दः। भूम्यन्तरिक्षस्वर्गास्त्रीन् लोकान् आदित्या धारयन्। वृष्टिप्रदानादिना धारयन्ति। उत अपि च द्यून् दीप्तान् तत उपरितनान् महरादिकानपि त्रीन् लोकान् धारयन्ति।......। अपि चैषामादित्यानां विदथे यज्ञेऽन्तर्मध्ये त्रीणि व्रता सवनत्रयनिष्पाद्यानि त्रीणि कर्माणि सन्ति। यद्वा एषां लोकानामन्तर्मध्ये विदथे यज्ञे निमित्तभूते सति एषामादित्यानां त्रीणि कर्माणि रसादानधारणविसर्जनलक्षणानि सन्ति। इति सायणः॥

९. हिरण्ययाः (=हिरण्यवच्छोभमानाः) शुचयः (=तेजस्विनो) धारपूताः (=उदकधाराभिः शोधिता इव निर्मला) अस्वप्नजः (=स्वापरहिता) अनिमिषाः (=निमेषरहिता) अदब्धाः (=अहिंसिता) उरुशंसाः (=प्रभूतस्तोत्रा) [आदित्यास्] त्री

८. [ आदित्य ] तीन भूलोकांला आणि तीन द्युलोकांला धारण करितात. यज्ञांत जीं त्यांचीं कामें तीं तीन आहेत. हे आदित्य हो, सत्याच्या योगानें तुमचा महिमा मोठा आहे. हे अर्यमा, हे वरुणा, हे मित्रा, तो महिमा सर्वोत्तम [ आहे ].

8. Three earths and three heavens do they support. Three are their deeds in the sacrifice. Through truth, o Âdityas, is your greatness great. That [ greatness ] o Aryaman, o Varuṇa, o Mitra, [ is ] excellent.

९. सुवर्णमय, कांतिमान्, शुद्ध, न निजणारे, अनिमेष, अहिंसित, बहुस्तुत [ असे जे आदित्य, ते ] पुण्यवान् मर्त्यासाठीं तीन दिव्य लोकांला धारण करितात.

9. The Âdityas, golden, bright, pure, never sleeping, unwinking, perfect, praised by many, support the three heavenly regions for the righteous mortal.

---

८. 'तीन भूलोक आणि तीन द्युलोक'. सायण म्हणतात तीन भूलोक म्हणजे भूमि, अंतरिक्ष आणि स्वर्ग हे; आणि तीन द्युलोक म्हणजे त्याच्याहि वरचे जे महरादि तीन लोक ते होत. तीन कामें म्हणजे काय याविषयीं सायणाचार्य निश्चयानें सांगत नाहींत; तीन सवनांमध्यें करावयाचीं जीं कर्में तीं असतील अथवा रस घेणें, धारण करणें आणि सांडणें हीं तीन कर्में असतील असें ते म्हणतात.

'सत्याच्या योगानें'='ऋतेन.' म्हणजे सत्यरूप जो यज्ञ त्याच्या योगेंकरून, आर्यलोक यज्ञाला सत्य असें म्हणत असत.

९. 'न निजणारे'='अस्वप्नज:'. न निजणारे हें देवांचें विशेषण उत्तम शोभतें. कारण देव जर निजतील तर त्यांच्या हातून जगताचें सर्वदा व्हावयाचें जें कल्याण तें होणार नाहीं. आणि वस्तुतः खरेंच आहे कीं सूर्यादिक जे ( आणि तेच देव ) ते कधींहि निजत नाहींत, सर्वदा मार्गक्रमण करीत असतात.

'अनिमेष.' म्हणजे डोळ्यांचीं पातीं एकमेकांस न लावणारे. हेंहि देवांचें एक योग्य विशेषण आहे. त्यांचे डोळे सदैव उघडेच असतात, लवत नाहींत.

त्वं विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्ताः ।
शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा॥ १०॥७

त्वम् । विश्वेषाम् । वरुण । असि । राजा । ये । च । देवाः । असुर ।
ये । च । मर्ताः ।
शतम् । नः । रास्व । शरदः । विऽचक्षे । अश्याम । आयूंषि । सुऽधितानि । पूर्वा ॥ १० ॥ ७ ॥

न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा।
पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम् ॥११॥

न । दक्षिणा । वि । चिकिते । न । सव्या । न । प्राचीनम् । आदित्याः । न । उत । पश्चा ।
पाक्या । चित् । वसवः । धीर्या । चित् । युष्माऽनीतः । अभयम् ।
ज्योतिः । अश्याम् ॥ ११ ॥

---

दिव्या रोचना (=त्रीणि द्युसंबन्धीनि रोचमानानि स्थानानि=द्युलोकस्य त्रीन् भागान्) ऋजवे मर्त्याय (=ऋजुकर्मणे पुण्यवते मरणधर्मणे मनुष्याय ) धारयन्त (=धारयन्ति)॥

---

## भाषायाम्.

१०. हे असुर (=प्रबल) वरुण, ये च देवा येच मर्ताः (=मर्त्याः) [सन्ति] [तेषां] विश्वेषां त्वं राजासि । नः (=अस्मभ्यं) विचक्षे शतं शरदो रास्व (=दर्शनाय शतं वर्षाणि देहि=शतं वर्षाणि अस्मान् जीवय ) । पूर्वा सुधितानि (=पुरातनानि सुष्टु हितानि=पुरातनात्कालात् सुष्टु प्रकल्पितानि शतसंवत्सरलक्षणानि ) आयूंषि अश्याम (=प्राप्नुयाम )॥

११. न दक्षिणा वि चिकिते (=मया दक्षिणे भागे न दृश्यते किमपि ) न सव्या (=वामभागेपि न किमपि ) [ वि चिकिते=दृश्यते ] । हे आदित्याः, न प्राचीनं नोत पश्चा (=न पुरतो न पश्चादपि ) [दृश्यते=द्रष्टुं शक्नोमि ] । हे वसवः (=साधवः), पाक्या चित् धीर्या चित् (="अज्ञानोपि कातरोपि ") युष्मानीतः (=युष्मत्कथारा सन्नहम्) अभयं ज्योतिः (=भयरहितं प्रकाशं=" सौरं तेजः आन्तरं वा ज्ञानरहिता) ") अश्यां (=प्राप्नुयाम् )॥

१०. हे प्रबळ वरुणा, जे देव आणि मर्त्य या सर्वांचा तूं राजा आहेस. आम्ही शंभर वर्षे पाहूं असें तूं कर. पूर्वीपासून नेमिलेलें जें आयुष्य त्याजप्रत आम्ही पावूं असें कर.

१०. Thou, o mighty Varuṇa, art the king of all, [ of those ] that are gods and [ of those ] that are mortals. Give us a hundred years to see, may we attain to the life-times anciently appointed.

११. मला उजवीकडे दिसत नाहीं, डावीकडे [ दिसत ] नाहीं, हे आदित्य हो, पुढें [दिसत] नाहीं आणि मागेंहि [ दिसत ] नाहीं. हे साधूंनो, मी जरी मूढ आणि जरी भितरा आहें तरी तुम्ही जर मला मार्ग दाखवाल तर मी निर्भय प्रकाशाप्रत पावेन.

11. Not to the right do I see nor to the left, neither in front, o sons of Aditi, nor behind. Guided by you may I attain the light that is free from fear, though [ I am ] ignorant, o good [ gods ], [and] though [ I am ] timid.

१०. कृत, त्रेत, आणि द्वापर या युगांत मनुष्यांचें आयुष्य अथवा जीवित शंभर वर्षांवर नसे असें दाखविण्याला प्रमाण जर पाहिजे असेल तर तें या मंत्रांत आहे. शंभर वर्षे जगणें म्हणजे शिकस्त झाली अशी प्राचीन लोकांची अवस्था या ऋचेवरून उघड दिसून येते.

११. ऋषि म्हणतो, 'मला मार्ग, पुढें किंवा इकडे तिकडे दिसत नाहीं, आणि प्रकाश कसा प्राप्त करून घ्यावा तेंहि कळत नाहीं. तर हे देवहो, तुम्ही माझा हात धरून मला चालवा म्हणजे अंधकाराच्या पलीकडे मी जाईन.'

यांत जो प्रकाश सांगितला तो ज्ञानरूप प्रकाश होय असें दिसतें.

यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयन्ति पुष्टयश्च नित्याः ।
स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥
यः । राजऽभ्यः । ऋतनिऽभ्यः । ददाश । यम् । वर्धयन्ति । पुष्टयः । च । नित्याः ।
सः । रेवान् । याति । प्रथमः । रथेन । वसुऽदावा । विदथेषु । प्रऽशस्तः ॥ १२ ॥
शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ १३ ॥
शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः । सुऽवीरः ।
नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदित्यानाम् । भवति । प्रऽनीतौ ॥ १३ ॥

---

## भाषायाम्.

१२. य ऋतनिभ्यः (=ऋतनेतृभ्यः=यज्ञरूपस्य सत्यस्य नायकेभ्यो) राजभ्य [आदित्येभ्यो] ददाश (=हविर्ददाति) यं च पुष्टयः (=पोषका) नित्याः (=शाश्वताश्च) [आदित्या] वर्धयन्ति स रेवान् (=धनवान्) वसुदावा (=धनदाता) विदथेषु प्रशस्तः (=सभासु स्तुतः सन्) प्रथमो रथेन याति (=रथमास्थितः सर्वेभ्यः पूर्वं गच्छति) ॥

१३. य आदित्यानां प्रणीतौ भवति (=प्रणयने भवति=आदित्यैर्दर्शितमार्गो भवति) [स यजमानः] शुचिः (=तेजस्वी) अदब्धः (=केनाप्यहिंसितो) वृद्धवयाः (=प्रभूतान्नः) सुवीरः (=शोभनवीर्योपेतपुत्रपौत्रादिभिरुपेतः सन्) सूयवसा अपः (=शोभनयवसयुक्तानि जलानि) उप क्षेति (=तेषां समीपे निवसति=सुयवसयुक्तानां नद्यादीनां तीरेषु निवसति) । [अपि च] तम् अन्तितो नकिर्न दूराद् (=तं न समीपे नापि दूराद्वा कुत्रापि) [केपि] घ्नन्ति (=हिंसन्ति) ॥

१२. जो [ कोणी ] सत्यनायक [आदित्य]राजांला हवि देतो, आणि ज्याला पोषक [ आणि ] शाश्वत [ आदित्य] वाढवितात, तो धनवान्, उदार [आणि] सभेंत नावाजिलेला [ असा होत्साता ] प्रथम रथांत बसून जातो.

12. He who has sacrificed to the kings the leaders of Truth, and whom the nourishing [and] eternal [ Âdityas ] promote, is the first to go in a chariot, being wealthy, bounteous [and] renowned in assemblies.

१३. जो आदित्यांच्या कृपेंत असतो तो तेजस्वी, दुःखरहित, अन्नसंपन्न [ आणि ] चांगल्या वीर्यसंपन्न पुत्रपौत्रांनीं भरलेला असा होऊन जेथें पुष्कळ चांगलें गवत आहे अशा पाण्याजवळ वास करितो, [ आणि ] त्याला [कोणी] जवळून मारीत नाहींत [ आणि ] दूरूनहि [ मारीत ] नाहींत.

13. He who is under the guidance of the Âdityas lives on the banks of waters having good grass, being brilliant, unhurt, affluent with food and blessed with many good heroes, [and ] [ enemies ] do not kill him from near, nor from afar.

---

१२. 'सत्यनायक' ='ऋतनिम्यः.' म्हणजे यज्ञरूप सत्याचा प्रतिपाळ करणारे; आर्यधर्माचें संरक्षण करणारे.

१३. 'ज्यावर आदित्यांची कृपा होते त्याला उत्तम नद्या प्राप्त होतात आणि त्यांच्या कांठावर गवत, धान्य वगैरे पुष्कळ मिळतें आणि तेथें त्याला राहावयास जागा मिळते.' आर्यलोक जसजसे आर्यावर्तांत येऊं लागले तसतसे ते उत्तम नद्यांच्या तीरांवर शहरें वसविण्याचे प्रयत्न करूं लागले; आणि ते प्रयत्न कोळी इत्यादिक जे अनार्यजन त्यांनीं निरर्थक करूं नयेत म्हणून ते आपल्या देवांची प्रार्थना करीत, आणि आदित्यादिक देवांची सेवा केली म्हणजे ते प्रयत्न व्यर्थ जाणार नाहींत असें समजत असत. त्याचें एक उत्तम उदाहरण या मंत्रांत आहे. आर्यलोकांचीं गुरें पुष्कळ असत त्यांस खावयास गवत पाहिजे म्हणून 'सूयवसा अपः' असें म्हटलें आहे.

**अदि॑ते॒ मित्र॒ वरु॒णोत मृ॒ळ यद्वो॑ व॒यं च॑कृ॒मा कच्चि॒दागः॑ ।**
**उ॒र्वश्या॒मभ॑यं॒ ज्योति॑रिन्द्र॒ मा नो॑ दी॒र्घा अ॒भि न॑श॒न्तमि॑स्राः ॥ १४**

अदि॑ते । मित्र॑ । वरु॑ण । उ॒त । मृ॒ळ । यत् । व॒: । व॒यम् । च॒कृ॒म । कत् । चि॒त् । आगः॑ ।
उ॒रु । अ॒श्याम् । अभ॑यम् । ज्योति॑: । इ॒न्द्र॒ । मा । न॒: । दी॒र्घाः । अ॒भि । न॒श॒न् । तमि॑स्राः ॥ १४ ॥

**उ॒भे अ॑स्मै पीपयतः स॒मीची॑ दि॒वो वृ॒ष्टिं सु॒भगो॒ नाम॒ पुष्य॑न् ।**
**उ॒भा क्षया॑वा॒जय॑न्याति पृ॒त्सूभा॒वर्धौ॑ भवतः सा॒धू अ॑स्मै ॥ १५ ॥**

उ॒भे इति॑ । अ॒स्मै । पी॒प॒य॒तः॒ । स॒मीची॒ इति॑ स॒म्ऽई॒ची । दि॒वः । वृ॒ष्टिम् । सु॒ऽभगः॑ । नाम॑ । पुष्य॑न् ।
उ॒भा । क्षयौ॑ । आ॒ऽजय॑न् । या॒ति॒ । पृ॒त्ऽसु । उ॒भौ । अर्धौ॑ । भ॒व॒तः॒ । सा॒धू इति॑ । अ॒स्मै ॥ १५ ॥

---

**भाषायाम्.**

१४. हे अदिते, हे मित्र, उत (=अपि च) हे वरुण, यत् कत् चित् (=यत् किंचित्) व आगः (=युष्माकमपराधं) चकृम (=कृतवन्तः स्मः) तत् मृळ (=क्षमस्व) । हे इन्द्र, उरु (=विस्तीर्णम्) अभयं (=भयरहितं) ज्योतिः (=प्रकाशम्) अश्यां (=प्राप्नुयाम्) । दीर्घास्तमिस्रा नो माभि नशन् (=दीर्घा निशा अस्मान् मा प्राप्नुयुः) ॥

१५. [य आदित्यानां प्रणीतौ भवति] अस्मै (=तस्मै) उभे समीची (=संगच्छमाने उभे द्यावापृथिव्यौ) पीपयतः (=प्याययतः=कामान् वर्धयतः) [स] सुभगः (=सुभाग्यशाली) दिवो वृष्टिं नाम पुष्यन् (=द्युलोकस्य वर्षणं=द्युलोकाज्जातां मेघवृष्टिं प्राप्नुवन्) । उभा क्षयौ आजियन् पृत्सु याति (=उभौ निवासौ भूलोकस्वर्गलोकलक्षणौ जयन् युद्धेषु गच्छति) । अस्मै (=तस्मै) उभौ अर्धौ (=उभावपि अर्धभागौ (=।"जगतो भागौ चराचरात्मकौ मर्त्यामर्त्यात्मकौ वा") साधू भवतः (=सुलभौ भवतः) ॥

१४. हे अदिती, हे मित्रा, आणि हे वरुणा, आम्हीं कांहीं तरी तुमचा अपराध केला असेल, त्याची तुम्ही क्षमा करा. हे इन्द्रा, भयरहित जो विस्तीर्ण प्रकाश त्याप्रत मला पावूं दे. लांब लांब रात्री आम्हांप्रत न येओत.

१५. [ ज्यावर आदित्यांची कृपा असते ] त्याचे मनोरथ द्यावापृथिवी ह्या दोघीहि पूर्ण करितात; तो सुभाग्यशाली [ मनुष्य ] द्यूच्या वृष्टीला पावतो आणि तो उभयलोकांला जिंकणारा होत्साता लढाईंत जातो; त्याला दोन्ही भाग सुगम होतात.

14. O Aditi, o Mitra, and o Varuṇa, pardon us whatever fault we have committed against you. May I obtain, o Indra, the broad light free from fear. May long nights never come upon us.

15. [ He who is under the guidance of the Âdityas ], to him both the worlds afford nourishment; he a fortunate man receives the rain of heaven, [and] he goes into battles, winning both places of residence; to him both the halves become accessible.

---

१४. 'अदिति' कोण याविषयीं सू. ७२ मं. ९ आणि टीप पहा.

१५. 'उभय लोकांला' म्हणजे भूलोक आणि द्युलोक या दोघांला. 'दोन्ही भाग' ='उभौ अर्धौ.' हे दोन भाग कोणते तें स्पष्ट समजत नाहीं. सायण काय अर्थ करितात तो भाष्यंत पहा.

या वो माया अभिद्रुहे यजत्राः पाशा आदित्या रिपवे विचृत्ताः ।
अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम ॥ १६ ॥

याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः ।
रिपवे । विऽचृत्ताः ।
अश्वीऽइव । तान् । अति । येषम् । रथेन । अरिष्टाः । उरौ । आ ।
शर्मन् । स्याम ॥ १६ ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ १७ ॥ ८ ॥

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । वि-
दम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । वि-
दथे । सुऽवीराः ॥ १७ ॥ ८ ॥

---

## भाषायाम्.

१६. हे यजत्राः (=पूजनीया) आदित्याः, या वो मायाः पाशाश् [ च ] अभि-द्रुहे (=अभिद्रोहं कुर्वते) रिपवे विचृत्ताः (=प्रसारितास्) तान् अश्वीव (=अश्वी कश्चिद् यथा तथा) रथेन अति येषम् (=अतिक्रम्य गच्छेय)। अरिष्टाः (=अहिं-सिता) [ वयं ] [ व ] उरौ शर्मन् आ (=उरुणि शर्मणि=विस्तीर्णे आश्रयस्थाने) स्याम ॥

१७. हे वरुण, मघोनः (=धनवतो) भूरिदाव्नः (=प्रभूतस्य दातुः) प्रियस्य आपेः (=ज्ञातेः) शूनं (=मम दारिद्र्यं) माहम् आ विदं (=माहं तस्य विज्ञापनं करवाणि)। हे राजन् [ वरुण ], सुयमात् रायः (=सुष्ठु नियम्याद्धनात्) माहम् अव स्थां (=मा विहीनः स्याम्)। सुवीराः (=शोभनवीर्योपेतपुत्रादिभिरुपेता) [ वयं ] विदथे (=यज्ञे) बृहद् वदेम (=तव महत् स्तोत्रं ब्रूयाम) ॥

एतदुक्तं भवति अस्मदीयाः पुत्रादयः क्षुधिता इति धनप्रभुसमीपेऽभिधाय याच-मानो मा भूवमिति ॥

१६. हे पूज्य आदित्य हो, तुमच्या ज्या माया [ आणि ] [जे] पाश द्वेष करणाऱ्या शत्रूसाठीं पसरिलेले [ असतात], त्यांस मी घोड्यावर बसून [ तरून गेल्या]प्रमाणें रथानें तरून जाईन असें करा. कोणाचाहि उपद्रव न पोंहचतां आम्ही [ तुमच्या ] मोठ्या आश्रयाखालीं राहूं असें करा.

१७. हे वरुणा, श्रीमान् [ आणि ] उदार जो प्रिय आप्त त्याला मी आपलें दैन्य न सांगावें असें कर. हे राजा [ वरुणा ], ज्यावर सहज अधिकार चालवितां येतो अशा धनापासून मी पृथक् न होईन असें कर. चांगल्या वीरांनीं युक्त होत्साते यज्ञांत आम्ही तुझी मोठी स्तुति गाऊं असें कर.

16. O adorable Âdityas, may I with the chariot safely cross over, like one mounted on a horse, those your schemes [and] snares which [are] spread for the spiteful enemy. May we, free from harm, be under [your] wide protection.

17. May I never tell, o Varuṇa, my poverty to a rich [and] bounteous dear relation. May I never be, o king, without controllable wealth. May we, accompanied by brave sons, chant great praises [of thee] in the sacrifice.

---

१७. 'दैन्य' इ०. अद्यापिहि समजूत अशी आहे कीं, आपला कितीहि वाईट वेळ आला तरी आपलें दैन्य आपल्या सग्यांपुढें सांगावयाचें नाहीं, परक्या पुढें सांगितलें तरी चिंता नाहीं.

'ज्यावर सहज अधिकार चालवितां येतो'='सुयमात्.' म्हणजे जें अखंड, स्थिर, अचल, हुकुमांत राहणारें धन तें.

## सूक्तम् २८-२१९.

कूर्मो गृत्समदो वा ऋषिः । वरुणो देवता । त्रिष्टुप् छन्दः ॥

**इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना ।**
**अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥१॥**

इदम् । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । सन्ति । अभि ।
अस्तु । मह्ना ।
अति । यः । मन्द्रः । यजथाय । देवः । सुऽकीर्तिम् । भिक्षे । वरुणस्य ।
भूरेः ॥ १ ॥

**तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः ।**
**उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥ २ ॥**

तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः ।
उपऽअयने । उषसाम् । गोऽमतीनाम् । अग्नयः । न । जरमाणाः ।
अनु । द्यून् ॥ २ ॥

---

### भाषायाम्.

१. कवेः (=मेधाविनः) स्वराजः (=स्वयं राजमानस्य =स्वतन्त्रराज्यकर्तुर्) आदित्यस्य [ वरुणस्य ] इदं (=मया कृतं) [ स्तोत्रं भवति ] । [ स ] मह्ना (=स्वमहिम्ना) विश्वानि सन्ति (=सर्वाणि भूतानि) अभि अस्तु (=अभिभवतु) । यो यजथाय (=यष्ट्रे पुरुषाय=तदर्थम्) अति मन्द्रः (=अतिशयेन हर्षयिता) देवः (=देदीप्यमानो) [ वरुणस्तस्य ] भूरेः (=महतो वरुणस्य) सुकीर्तिं भिक्षे (=शोभनां स्तुतिं याचे) ॥

२. हे वरुण, स्वाध्यः (=शोभनध्यानास्) तुष्टुवांसः (=त्वां स्तुतवन्तो वयं) सुभगासः (=शोभनभाग्याः सन्तस्) तव व्रते स्याम (=तव कर्मणि भवेम=त्वदर्थं यज्ञादि कर्म कुर्वन्तो भवेम) । गोमतीनाम् उषसाम् उपायने (=गवादिधनवतीनामुषसामुपागमने सति) अग्नयो न (=यथा कर्मार्थमग्नयः समिध्यन्ते तथा) अनु द्यून् जरमाणाः (=दिनेदिने स्तुवन्तः=प्रतिदिनमुषःकाले स्तोत्रं कुर्वन्तो वयं) [ सुभगास्तव व्रते स्याम ] ॥

## सूक्त २८–२१९.

ऋषि–कूर्म अथवा गृत्समद. देवता–वरुण. वृत्त–त्रिष्टुभ्.

१. मेधावी [ आणि ] स्वतंत्र राज्यकारी जो आदित्य त्याचें हें [ स्तोत्र ] [ होय ]. तो [ आपल्या ] मोठेपणानें सकळ विश्वाला जिंकितो. जो देदीप्यमान [वरुण] उपासकाला अत्यंत हर्षकारक [होय], त्या महान् वरुणाची प्रशंसा मी याचितों.

२. हे वरुणा, चांगलें ध्यान करणारे आणि स्तुति करीत राहणारे असे जे आम्ही ते तुझ्या सेवेंत सुभाग्यसंपन्न राहूं असें तूं कर. गोसंपन्न उषांचें आगमन होतांच जसे अग्नि [पेटविले जातात त्या]-प्रमाणें प्रतिदिनीं स्तव करणारे [जे आम्ही ते तुझ्या सेवेंत सुभाग्यसंपन्न राहूं असें तूं कर].

## HYMN 28–219.

To *Varuṇa*. By *Kūrma* or *Gṛitsamada*. Metre—*Trishṭubh*.

1. This [ hymn ] [ is ] for the wise son of Aditi, the independent king. May he by his greatness overpower all things. I seek the high commendation of that great Varuṇa, who is the great divine gratifier of the sacrificer.

2. May we, full of great devotion [ and ] having chanted thy praises, be happy in thy service—we who at the approach of the bountiful Ushases sing hymns from day to day even as fires [are kindled].

---

१. 'महान् वरुणाची प्रशंसा याचितों.'=' भूरेर्वरुणस्य सुकीर्तिं भिक्षे.' म्हणजे मोठा जो वरुण त्याणें हें फार चांगलें स्तोत्र केलें अशी मला शाबासकी द्यावी असें इच्छितों.

तव॑ स्याम पु॒रुवी॑रस्य॒ शर्म॑न्नुरु॒शंस॑स्य वरुण प्रणेतः ।
यू॒यं नः॑ पुत्रा अदितेरदब्धा अ॒भि क्ष॑मध्वं॒ युज्या॑य देवाः ॥ ३ ॥
तव॑ । स्या॒म॒ । पु॒रु॒ऽवी॑रस्य । शर्म॑न् । उ॒रु॒ऽशंस॑स्य । व॒रु॒ण॒ । प्र॒ने॒त॒रिति॑ प्रऽनेतः ।
यू॒यम् । नः॒ । पु॒त्राः॒ । अ॒दि॒तेः॒ । अ॒द॒ब्धाः॒ । अ॒भि । क्ष॒म॒ध्व॒म् । यु॒ज्या॑य । दे॒वाः॒ ॥ ३ ॥
प्र सी॑मादि॒त्यो अ॑सृजद्विध॒र्ता ऋ॒तं सिन्ध॑वो॒ वरु॑णस्य यन्ति ।
न श्रा॑म्यन्ति॒ न वि मु॑चन्त्ये॒ते वयो॒ न प॑प्तू रघु॒या परि॑ज्मन् ॥४॥
प्र । सी॒म् । आ॒दि॒त्यः । अ॒सृ॒ज॒त् । वि॒ऽध॒र्ता । ऋ॒तम् । सिन्ध॑वः । वरु॑णस्य । य॒न्ति॒ ।
न । श्रा॒म्य॒न्ति॒ । न । वि । मु॒च॒न्ति॒ । ए॒ते । वयः॑ । न । प॒प्तुः॒ । र॒घु॒ऽया । परि॑ऽज्मन् ॥ ४ ॥

---

## भाषायाम्.

३. हे वरुण, हे प्रणेतः (=प्रकर्षेण नेतर्नायक) पुरुवीरस्य (=बहुवीरोपेतस्य=बहून् वीर्योपेतान् पुत्रपौत्रादीन् ददत) उरुशंसस्य (=प्रभूतस्तोत्रस्य) तव शर्मन् (=शर्मणि सुखे) स्याम। हे अदब्धाः (=अहिंसिता) अदितेः पुत्राः (=आदित्याः), हे देवाः (=देदीप्यमानाः), यूयं युज्याय (=सख्याय) नः (=अस्मान्) अभि क्षमध्वम् (=अपराधकृतः सहध्वम्) ॥

४. विधर्ता (=जगतो धारक) अदित्यः (=अदितेः पुत्रो वरुणः) सी (=तान् वक्ष्यमाणान् सिन्धून् नदान्) प्रासृजत् (=प्रकर्षेण सृष्टवान्)। [ते] सिन्धवः (=ता नद्य) ऋतं यन्ति (=सत्यं यथा तथा गच्छन्ति)। एते [सिन्धवो] न श्राम्यन्ति (=श्रान्तिं न प्राप्नुवन्ति) न वि मुचन्ति (=उपरता न भवन्ति) [अपि तु] परिज्मन् (=परिज्मनि=भूम्यां) वयो न (=पक्षिण इव) रघुया पप्तुः (=शीघ्रम् उत्पतन्ति) ॥

३. हे श्रेष्ठ नायका वरुणा, बहुवीरसंपन्न आणि बहुस्तोत्रसंपन्न असा जो तूं, त्या तुझ्या आश्रयाखालीं आम्हांस राहूं दे. हे अदितीचे देदीप्यमान [ आणि ] क्षतिरहित पुत्र हो, तुम्ही आम्हांला क्षमा करून आमचे मित्र व्हा.

3. May we, o Varuṇa, o excellent leader, be under thy protection—thou, who givest numerous brave sons and who art offered exceeding praise. Do you, o divine and perfect sons of Aditi, pardon us for [your] friendship.

४. [ जगाचा ] धर्ता असा जो अदितीचा पुत्र वरुण तो नद्यांचे प्रवाह सोडितो. वरुणाच्या नद्या यथासत्य वाहतात. त्या [ नद्या ] थकत नाहींत, थांबत नाहींत; त्या पृथिवीवर पक्ष्यांप्रमाणें वेगानें धांवतात.

4. [ Varuṇa ], the great supporter, the son of Aditi, sends forth the rivers. The rivers of Varuṇa flow truthfully. They do not tire, they do not stop, they flow on earth swiftly like birds.

---

३. ‘ बहुवीरसंपन्न ’ आणि ‘ बहुस्तोत्रसंपन्न. ’ म्हणजे उपासकाला पुष्कळ वीर्यवान् पुत्र देणारा, आणि ज्याला बहुत लोक स्तवितात असा.

‘ क्षतिरहित. ’ म्ह. ज्यांला कोणी उपद्रव करूं शकत नाहींत असे.

४. ‘ वरुणाच्या नद्या यथासत्य वाहतात ’=‘ ऋतं सिन्धवो वरुणस्य यन्ति. ’ म्ह. मेघोदकरूप ज्या नद्या सोडितो, त्या सतत वाहतात, सरळ रस्त्यानें नित्य जात असतात, आज आहेत आणि उद्यां नाहींत अशा होत नाहींत.

**वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।**
**मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥**
॥ ५ ॥ ९ ॥

वि । मत् । श्रथय । रशनाम्ऽइव । आगः । ऋध्याम । ते । वरुण । खाम् । ऋतस्य ।
मा । तन्तुः । छेदि । वयतः । धियम् । मे । मा । मात्रा । शारि । अपसः । पुरा । ऋतोः ॥ ५ ॥ ९ ॥

**अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय ।**
**दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे ॥ ६ ॥**

अपो इति । सु । म्यक्ष । वरुण । भियसम् । मत् । सम्ऽराट् । ऋतऽवः । अनु । मा । गृभाय ।
दामऽइव । वत्सात् । वि । मुमुग्धि । अंहः । नहि । त्वत् । आरे । निऽमिषः । चन । ईशे ॥ ६ ॥

---

## भाषायाम्.

५. हे वरुण, रशनाम् इव आगो मत् वि श्रथय ( =रज्जुमिवं पापं मत्सकाशात् शिथिलीकुरु=विमोचय ) । ते (=तव ) ऋतस्य खाम् ऋध्याम ( =सत्यस्य नदीं लभेमहि ) [अपि च] धियं वयतो मे (=कर्म संतन्वतो मम) तन्तुः (="कर्मसंततिर्") मा छेदि ( =छिन्ना मा भूत् ) अपसो मात्रा ( =कर्मणः शरीरं=यज्ञस्य शरीरम् अभिषवणादिका क्रिया ) ऋतोः पुरा ( =समाप्तिकालात् पूर्वं ) मा शारि ( =शीर्णा विकला मा भूत् ) ॥

६. हे वरुण, भियसं (=भयं ) मत् (=मत्सकाशात् ) अपो सु म्यक्ष (=सुष्ठु यथा तथापगमय ) । हे सम्राट् ( =सम्यग्राजमान ), हे ऋतावः (=सत्यवन् ) [ वरुण ], [ त्वं ] मा अनु गृभाय ( =माम् अनुगृहाण ) । वत्साद् दामेव ( =गोवत्साद् यथा रज्जुं विमुञ्चन्ति तथा ) [ मत् ] अंहो वि मुमुग्धि ( =पापं मत्सकाशादपगमय ) । हि (=यस्मात् कारणात् ) त्वद् आरे (=त्वत्सकाशाद् दूरे=त्वदपेक्षया ) [ कोपि ] निमिषश्चन नेशे ( =निमेषस्यापि नेश्वरो भवति ) ॥

५. पाश सोडून टाकिल्याप्रमाणें मजपासून पाप सोडून घे. हे वरुणा, आम्हांस तुझ्या सत्याचा प्रवाह प्राप्त करून दे. मी कर्म-[रूप वस्त्र] विणीत असतां माझा तंतु तुटूं देऊं नको. समाप्तिकाळापूर्वीं [माझ्या] उपासनेचें अंग क्षीण होऊं देऊं नको.

६. हे वरुणा, मजपासून भय अगदी काढून टाक. हे साम्राज्यकर्त्या, हे सत्यवान् [वरुणा], तूं मजवर कृपा कर. वत्साचें दावें [दूर केल्या]प्रमाणें तूं माझें पाप दूर कर. कांकीं, तुझ्या शिवाय कोणी एका निमिषाचाहि धनी नाहीं.

5. Remove from me [all] sin like a cord. May we, o Varuna, obtain the stream of thy truth.* May the thread never be broken when I am weaving my cloth [of sacrifice]. May the body of my work never be broken before the time.

6. Remove altogether fear from me, o Varuna! Be kind to me, o Universal king, o truthful one! Remove the sin from me even as the cord from a calf. For, without thee no one is the master of even a twinkling of an eye.

---

५. 'तुझ्या सत्याचा प्रवाह प्राप्त करून दे.'=' ऋध्याम ते ऋतस्य खाम्.' म्हणजे वरुणाचें जें सर्व सत्य तें प्राप्त करून दे. अखंड सत्याची प्राप्ति होओ.

या मंत्राचें तात्पर्य असें दिसतें कीं, वरुणाची उपासना चालली असतांना अनार्य लोकांनीं वगैरे विघ्न करूं नये.

मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर भ्रीणन्ति ।
मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥ ७ ॥

मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः । कृण्वन्तम् । अ-सुर । भ्रीणन्ति ।
मा । ज्योतिषः । प्रऽवसथानि । गन्म । वि । सु । मृधः । शिश्रथः । जीवसे । नः ॥ ७ ॥

नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम ।
त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥ ८ ॥

नमः । पुरा । ते । वरुण । उत । नूनम् । उत । अपरम् । तुविऽजा-त । ब्रवाम ।
त्वे इति । हि । कम् । पर्वते । न । श्रितानि । अप्रऽच्युतानि । दुःऽदभ । व्रतानि ॥ ८ ॥

---

## भाषायाम्.

७. हे असुर (=बलवन्) वरुण, ये [वधाः] (=शस्त्राणि) ते इष्टौ (=तव प्रेषणे सति=त्वया प्रेषिता) एनः कृण्वन्तं (=पापं कुर्वन्तं) भ्रीणन्ति (=हिंसन्ति) [तैर्] वधैः (=शस्त्रैर्) मा नो [वधीः] (=अस्मान् मा वधीः)। [वयं] ज्योतिषः प्रवसथानि (=प्रकाशात् प्रवासान्) मा गन्म (=मा गच्छेम)। जीवसे नः (=अस्माकं जीवनाय) मृधः (=शत्रून्) वि षु शिश्रथः (=सुष्ठु पृथक् कुरु=अस्मत्सकाशादपगमय)॥

८. हे वरुण, ते (=तुभ्यं) पुरा (=पूर्वम्) उत नूनम् (=अपि चेदानीं) [तथा] हे तुविजात (=प्रबलत्वेन सह प्रादुर्भूत), अपरम् (=अपरस्मिन्नपि काले) ब्रवाम (=उच्चारयाम)। हे दूळभ (=दुःखेन हिंस्य), त्वे श्रितानि व्रतानि पर्वते न अप्रच्युतानि हि कं (=त्वयि स्थितानि यानि कर्माणि तानि पर्वते स्थितानीव च्युतिरहितानि) [भवन्ति]॥

७. हे बलवान् वरुणा, पाप करणाऱ्याला तुझ्या आज्ञेवरून जीं शस्त्रें मारितात त्यांहीं तूं आम्हांस [ मारूं ] नको. तूं आम्हांस प्रकाशापासून भटकूं देऊं नकोस. आम्हीं जगावें म्हणून तूं शत्रूंचा अगदी नाश करून टाक.

7. Do not [ kill ] us, o Varuṇa, with those weapons which at thy bidding strike him who commits sin. May we never go to regions far removed from light. Remove [our] enemies that we may live.

८. हे प्रबला, [ आम्हीं ] तुला पूर्वीं नमस्कार [केला] आणि आतां [ करितों ] आणि पुढेंहि करूं. कारण कीं, हे क्षतिहीन [वरुणा ], तुझ्या ठायीं अर्पिलेलीं [ जीं ] कर्में [तीं] पर्वताच्या ठायीं ठेविल्याप्रमाणें अचल [ होत ].

8. We [chanted] thy hymn before and [we chant it] now and, o mighty one, we will chant it in future. For those works [which are] offered to thee, o thou impossible to harm, [are] unshakeable as if placed on a mountain.

---

७. 'पाप करणाऱ्याला...मारितात.' ='एनः कृण्वन्तं भ्रीणन्ति.' जो मनुष्य पाप करितो त्याला शासन करणें हें वरुणाचें काम होय असें वेदांत सांगितलें आहे. सू. २४ मं. ८ आणि सू. २५ मं. १ पहा.

'तुझ्या आज्ञेवरून' ='ते इष्टौ'. या ठिकाणीं सायणांनीं 'इष्टौ एनः' हे शब्द एकत्र घेऊन 'यज्ञांत पाप' असा अर्थ केला आहे तो चिंत्य दिसतो. त्यापेक्षां त्यांनीच सू. ६२ मं. ३ यांत केलेला 'इष्टौ' याचा 'प्रेरणेवरून' असा जो अर्थ, तो अधिक योग्य आहे.

या मंत्रांत जो प्रकाश सांगितला, तो ज्ञानरूप होय यांत संशय नाहीं. आणि त्यापासून भटकूं नये म्हणजे अज्ञानामुळें अपराध अथवा पाप करूं नये असा अभिप्राय आहे.

८. नमस्कार=नमः म्हणजे येथें नमस्कारयुक्त स्तोत्र असें समजावयाचें आहे.

'तुझ्या ठायीं अर्पिलेलीं जीं कर्में' 'त्वे श्रितानि व्रतानि.' म्ह. वरुणास अनुलक्षून केलेलीं जीं यजनादिक कर्में तीं. अथवा पाप्याला दंड करणें आणि पुण्यवंतावर अनुग्रह करणें इत्यादिक जीं कामें वरुण करीत असतो तीं. तीं पर्वताच्या गुणांप्रमाणें अचल होत, असें तात्पर्य.

परं ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम्।
अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि॥९॥
परा। ऋणा। सावीः। अध। मत्ऽकृतानि। मा। अहम्। राजन्।
अन्यऽकृतेन। भोजम्।
अविऽउष्टाः। इत्। नु। भूयसीः। उषसः। आ। नः। जीवान्।
वरुण। तासु। शाधि॥ ९॥
यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह।
स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान्१०
यः। मे। राजन्। युज्यः। वा। सखा। वा। स्वप्ने। भयम्। भी-
रवे। मह्यम्। आह।
स्तेनः। वा। यः। दिप्सति। नः। वृकः। वा। त्वम्। तस्मात्।
वरुण। पाहि। अस्मान्॥ १०॥

---

## भाषायाम्.

९. अध (=अपि च) मत्कृतानि ऋणा (=ऋणानि) परा सावीः (=परा सु-व=अपगमय)। हे राजन् [वरुण], अहम् अन्यकृतेन [धनेन] मा भोजं (=भोगं मा लभेयम्)। हे वरुण, अव्युष्टा इत् [या] भूयसीः उषसः (=अद्यु-नाप्यनुदिता याः प्रभूता उषासः सन्ति=आगामिनो दिवसा भवन्ति) तासु नो जीवान् आ शाधि (=तासु अस्मान् जीवतोनुशिष्टान् कुरु=तासु वयं यथा जीवेम तथाज्ञापय)॥

१०. हे राजन्, यो मे युज्यो वा सखा वा (=यो मम पित्रादिर्वा बान्धवादिर्वा) स्वप्ने भयं भीरवे मह्यम् आह (=स्वप्ने दृष्टं भयकरं किमपि वस्तु कातराय मह्यं विवृणोति) यः स्तेनो वा वृको वा नो दिप्सति (=चौरो वा हिंसको वास्मान् हिंसितु-मिच्छति) तस्माद् [भयात् स्तेनाद्वृकाच्च] हे वरुण, त्वमस्मान् पाहि॥

९. मी केलेलीं ऋणें काढून टाक; हे राजा, मी दुसऱ्यानें मिळविलेल्या धनावर पोट न भरावें असें कर. हे वरुणा, अजून उगवल्याच नाहींत अशा [ ज्या ] पुष्कळ उषा त्यांप्रत आम्ही जीवंतपणीं पावूं असें कर.

9. And remove the debts contracted by me. May I never feed on the gains of another, o king [ Varuṇa ]! Order, o Varuṇa, that we shall be alive on the numerous Ushases that have not yet shone.

१०. हे राजा [ वरुणा], जो माझा सगा अथवा मित्र स्वप्नांत [ पाहिलेलें ] भय मज भितऱ्याला घालील, अथवा जो चोर कींवा हिंसक आमची हानि करूं इच्छील, त्यापासून, हे वरुणा, तूं आम्हांला रक्ष.

10. Whatever relation or friend of mine tells me, a timid one, of an ill omen [ seen ] in a dream, or whatever thief or wolf desires to hurt me—from him save us thou, o Varuṇa!

---

९. ऋणांत राहूं नये, परान्न भक्षण करूं नये आणि पुष्कळ जगण्याची इच्छा करणें, हें जसें आतां इष्ट आहे तसेंच वेदकालींहि असे असें या ऋचेवरून दिसून येतें.

१०. 'स्वप्नांत पाहिलेलें भय मज भितऱ्याला घालितो '=' स्वप्ने भयं भीरवे मह्यमाह.' म्हणजे एकादें अनिष्ट मी स्वप्नांत पाहिलें असेल आणि त्याचा अर्थ भयप्रद आहे असें माझे सगे सोयरे सांगतील, तर त्या भयापासून मला रक्ष.

**माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।**
**मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥११॥१०**

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ११ ॥ १० ॥

## भाषायाम्.

११. हे वरुण, मघोनः (=धनवतो) भूरिदाव्नः (=प्रभूतस्य दातुः) प्रियस्य आपेः (=ज्ञातेः) शूनं (=मम दारिद्र्यं) माहम् आ विदं (=माहं तस्य विज्ञापनं करवाणि)। हे राजन् [वरुण], सुयमाद् रायः (=सुष्ठु नियम्याद्धनात्) माहम् अव स्थां (=मा विहीनः स्याम्)। सुवीराः (=शोभनवीर्योपेतपुत्रादिभिरुपेता) [वयं] विदथे (=यज्ञे) बृहद् वदेम (=तव महत् स्तोत्रं ब्रूयाम) ॥

## सूक्तम् २९–२२०.

कूर्मो गृत्समदो वा ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः ॥

**धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः ।**
**शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥१॥**

धृतऽव्रताः । आदित्याः । इषिराः । आरे । मत् । कर्त । रहसूःऽइव । आगः ।
शृण्वतः । वः । वरुण । मित्र । देवाः । भद्रस्य । विद्वान् । अवसे । हुवे । वः ॥ १ ॥

## भाषायाम्.

१. हे धृतव्रताः (=धृतकर्माण) इषिराः (=गमनशीलास्त्वराशीला) आदित्याः (=अदितेः पुत्रा इन्द्रादयः), रहसूरिव मत् आगः आरे कर्त (=व्यभिचा-

११. हे वरुणा, श्रीमान् [आणि] उदार जो प्रिय आप्त त्याला मी आपलें दैन्य न सांगावें असें कर. हे राजा [वरुणा], ज्यावर सहज अधिकार चालवितां येतो अशा धनापासून मी पृथक् न होईन असें कर. चांगल्या वीरांनीं युक्त होत्साते यज्ञांत आम्ही तुझी मोठी स्तुति गाऊं असें कर.

11. May I never tell, o Varuṇa, my poverty to a rich [and] bounteous dear relation. May I never be, o king, without controllable wealth. May we, accompanied by brave sons, chant great praises [of thee] in the sacrifice.

## सूक्त २९-२२०.

ऋषि-कूर्म अथवा गृत्समद.
देवता-विश्वे देव. वृत्त-त्रिष्टुभ्.

१. हे कर्मधारक, हे वेगवंत आदित्य हो, व्यभिचारिणीप्रमाणें [माझें] पाप मजपासून दूर करा. हे वरुणा, हे मित्रा, हे देव हो, [तुम्हांपासून होणारें] कल्याण जाणणारा जो मी, तो तुम्हां [स्तोत्र] ऐकणाऱ्यांस तुमच्या प्रसादासाठीं येथें बोलावितों.

## HYMN 29-220.

To *Vis've Devas.* By *Kūrma* or *Gṛitsamada.* Metre—*Trishṭubh.*

1. O swift sons of Aditi, o supporters of the rite, remove the sin away from us, even as a woman giving secret birth to a child. O Varuṇa, o Mitra, o gods, I who know [your] blessing invoke for your protection you who hear.

१. 'व्यभिचारिणी स्त्रीप्रमाणें' म्हणजे व्यभिचारिणी स्त्री गर्भिणी राहिल्यानंतर गर्भ पाडून जसा दूर टाकिते त्याप्रमाणें आमचें पातक दूर नेऊन टाकून दे. हा अर्थ सायणास अनुसरून केला आहे. आणि तो योग्य दिसतो. याजवरून व्यभिचारादिक पापें आणि गर्भपातरूप जो लाज राखण्याचा राक्षसी उपाय तो जसा प्रस्तुत काळीं चालू आहे तसाच वेदकाळींहि प्रसिद्ध होता असें सिद्ध होतें.

यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत ।
अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च ॥ २ ॥
यूयम् । देवाः । प्रऽमतिः । यूयम् । ओजः । यूयम् । द्वेषांसि । सनु-
तः । युयोत ।
अभिऽक्षत्तारः । अभि । च । क्षमध्वम् । अद्य । च । नः । मृळयत ।
अपरम् । च ॥ २ ॥
किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन ।
यूयं नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात ॥ ३ ॥
किम् । ऊं इति । नु । वः । कृणवाम । अपरेण । किम् । सनेन ।
वसवः । आप्येन ।
यूयम् । नः । मित्रावरुणा । अदिते । च । स्वस्तिम् । इन्द्रामरुतः ।
दधात ॥ ३ ॥

---

रिणी यथा गर्भं पातयित्वा दूरदेशे परित्यजति तद्वत् पापं मत्तः सकाशात् दूरे कुरुत ) । हे वरुण, हे मित्र, हे देवाः, भद्रस्य विद्वान् (=युष्माभिः करणीयं श्रेयो जानन्) [ अहं ] शृण्वतः (=मम स्तोत्रं शृण्वतो ) वः (=युष्मान् ) वः अवसे (=युष्माकं रक्षणाय=युष्मत्कर्तृकाय रक्षणाय ) हुवे (=आह्वयामि ) ॥

रहसूरिव । रहस्यन्यैरज्ञाते प्रदेशे सूयत इति रहसूर्व्यभिचारिणी । सा यथा गर्भं पातयित्वा दूरदेशे परित्यजति तद्वत् । इति सायणः ॥

---

## भाषायाम्.

२. हे देवाः, यूयं प्रमतिः (=प्रकृष्टा मतिः प्रसादरूपा बुद्धिर्यस्य स पालको यूयमेव ) । यूयम् ओजः (=बलं यूयमेव ) । यूयम् [ एव ] द्वेषांसि सनुतर्युयोत (=द्वेष्टॄन् शत्रून् अन्तर्हितं यथा तथा पृथक्कुरुत ) । अभिक्षत्तारः (=शत्रोरभिहिंसका ) [ यूयम् ] अभि च क्षमध्वम् (=अस्मान् सहध्वं च ) अद्य च अपरं च नो मृळयत (=अपि च अद्य दिने आगामिनि च काले अस्मभ्यं सुखयत=अस्मान् सुखयत च ) ॥

३. हे वसवः (=साधवो ) [ विश्वे देवाः ], वः अपरेण [ आप्येन ] किम् उ नु करवाम [ अथवा ] सनेन आप्येन [ किं करवाम ] (=युष्माकं यद् पुरातनकाले

२. हे देव हो, तुम्ही संरक्षक [व्हा]. तुम्ही बळ [व्हा]. तुम्ही शत्रूंला नाहींसे करा. [शत्रु]घातक [असे जे तुम्ही ते] आम्हांला क्षमा करा आणि आम्हांवर आतां आणि पुढेंहिं कृपा करा.

2. Do you, o gods, [be] the protector. [Be] you the power. Do you free us from the haters. Do you who destroy [the enemy] pardon [us]. And be kind to us now as well as in the future.

३. हे वसू हो, तुमचें पुरातन आप्तपण आणि अर्वाचीन आप्तपण घेऊन काय करावयाचें आहे? हे मित्र आणि वरुण हो, हे अदिती, हे इंद्र आणि मरुत् हो, तुम्ही आमचें कल्याण करा [म्हणजे झालें].

3. What now shall we do, o good [gods], with your future [friendship], what with your ancient friendship? Do you good to us, o Mitra and Varuṇa and o Aditi, o Indra and Maruts!

---

३. 'तुमचें आमचें जुनें सख्य आहे आणि अजून झालें तरी सख्य आहेच अशी ख्याति आहे; ती घेऊन काय करावयाची आहे? तुम्हीं आमचें कल्याण केलें म्हणजे झालें.'

इये देवा यूयमिदापयः स्थ ते मृळत नाधमानाय मह्यम् ।
मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वापिषु श्रमिष्म ॥४॥
इये । देवाः । यूयम् । इत् । आपयः । स्थ । ते । मृळत । नाधमानाय । मह्यम् ।
मा । वः । रथः । मध्यमऽवाट् । ऋते । भूत् । मा । युष्मावत्ऽसु । आपिषु । श्रमिष्म ॥ ४ ॥
प्र व एको मिमय भूर्यागो यन्मा पितेव कितवं शशास ।
आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥५
प्र । वः । एकः । मिमय । भूरि । आगः । यत् । मा । पिताऽइव । कितवम् । शशास ।
आरे । पाशाः । आरे । अघानि । देवाः । मा । मा । अधि । पुत्रे । विम्ऽइव । ग्रभीष्ट ॥ ५ ॥

---

प्रसिद्धं सख्यं यद्यागामिनि काले भवितव्यं सख्यं तेन किं करवाम ?=तद्गृहीत्वा किं करवाम ? ) । हे मित्रावरुणा (=मित्रावरुणौ ), हे अदिते च, हे इन्द्रामरुतः, यूयं नः ( =अस्मभ्यं ) स्वस्ति दधात (=स्वस्ति कुरुत=कल्याणं प्रयच्छत ) ॥
कल्याणकरणमेव युष्माकं सख्यस्य प्रयोजनमिति भावः ॥

---

## भाषायाम्.

४. इये देवाः ( =हे इन्द्रादयो देवाः ), यूयम् इत् आपयः स्थ ( =यूयमेव बान्धवाः स्थ ) । ते [यूयम् ] ( =अतः कारणाद्यूयं ) नाधमानाय मह्यं मृळत (=अभिमतफलं याचमानाय मह्यं स्तोत्रे=मां स्तोतारं सुखयत ) । ऋते (=अस्माकं यज्ञे ) वो रथो मध्यमवाट् मा भूत् ( =मन्दगमनेन वाहको=मन्दगतिर्मा भवतु ) । युष्मासु आपिषु (=युष्मत्सदृशेषु बन्धुषु सत्सु ) [ वयं ] मा श्रमिष्म (=श्रान्ता मा भूम ) ॥

५. [ हे देवाः ], यत् ( =यस्मात् ) पिता कितवम् इव मा शशास ( =यथा कश्चित् पिता कैतवकारिणं स्वकीयं पुत्रमनुशास्ति शोभनं मार्गं प्रवर्तयति तथा मां शशास पापमार्गात्परावर्तयत ) [ तस्मात् ] व एकः ( =युष्माकं मध्य एकोऽहं युष्माभिः सर्वैरनुशिष्ट एकोऽहं ) भूरि आगः ( =मम प्रभूतं पापं) प्र मिमय ( =प्रकर्षेण, हिंसितवानस्मि ) । हे देवाः, [ युष्मदीयाः] पाशा आरे ( =दूरे ) [ सन्तु ] अघानि

४. हे देव हो, तुम्हीच [आमचे] बांधव आहां. तर तुम्ही मज याचकावर कृपा करा. तुमचा रथ [आमच्या] यज्ञांत मंदगामी न होओ. तुम्हांसारिखे बांधव असतांना आम्हांला कष्ट न होओत.

५. [हे देव हो], ज्यापेक्षां [एकादा] बाप दुर्व्यसनी [पुत्रा]ला [उपदेश करितो] तसे तुम्ही मला उपदेश करिते झालां, त्यापेक्षां तुम्हां सर्वांमुळें मी एकटा पुष्कळ पापाचा नाश करिता झालों आहें. [तर] हे देवं हो, पाश दूर [होओत], पापें दूर [होओत]. पिल्लाच्या समक्ष पक्ष्याला [धरिल्या]प्रमाणें तुम्ही मला धरूं नका.

4. You alone, o gods, are our relations. Be ye therefore kind to me, a suppliant. May your chariot never be slow in [our] sacrifice. May we never tire when we have relations like you.

5. I a single one belonging to you [who are many] have destroyed much sin, since you have instructed me even as a father [instructs] a profligate [son]. Away with fetters, away with sins, o gods! Do not seize me as [they seize] a bird before [its] young.

---

५. पहिल्या अर्धाचा अर्थ कठिण आहे. सायणाप्रमाणें केलेल्या अर्थाचा भाव असा आहे कीं 'हे देव हो, तुम्हीं सर्वं देव मिळून मज एकट्यावर कृपा करून एकादा बाप आपल्या दुर्व्यसनी पुत्राला उपदेश करितो तसा मला उपदेश केला त्यामुळें मी आपल्या सर्व पापांचा नाश केला; तर मजपासून पाश सोडावा.'

अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥६॥

अर्वाञ्चः । अद्य । भवत । यजत्राः । आ । वः । हार्दि । भयमानः । व्ययेयम् ।
त्राध्वम् । नः । देवाः । निऽजुरः । वृकस्य । त्राध्वम् । कर्तात् । अवऽपदः । यजत्राः ॥ ६ ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥७॥११

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ७ ॥ ११ ॥

---

(=पापानि) [च] आरे (=दूरे) [सन्तु] । अधि पुत्रे विम् इव (=बाले संनिहिते सति पक्षिणं यथा=बालस्य समीपे वर्तमानं पक्षिणं यथा व्याधा गृह्णन्ति तद्वत्) मा (=मां) मा अभीष्ट (=मा गृह्णीध्वं=मा हिंसत) ॥

---

## भाषायाम्.

६. हे यजत्राः (=यजनीया देवाः), [यूयम्] अद्य अर्वाञ्चो भवत (=अस्मदभिमुखा भवत)। भयमानः (=बिभ्यदहं) वो हार्दि आ व्ययेयं (=युष्माकं हृदयसंबन्धि रक्षणम् आभिमुख्येन प्राप्नुयाम्)। हे देवाः, वृकस्य निजुरः (=हिंसकस्य निहननात्) नस्त्राध्वम् । हे यजत्राः, कर्तात् अवपदः (=यस्मिन् अवपदनीयं तस्माद् गर्तात्=कर्ते अवपदः=गर्ते अवपतनात्) [अस्मान्] त्राध्वं (=पालयत) ॥

७. हे वरुण, मघोनः (=धनवतो) भूरिदाव्नः (=प्रभूतस्य दातुः) प्रियस्य आपेः (=ज्ञातेः) शूनं (=मम दारिद्र्यं) माहम् आ विदं (=माहं तस्य विज्ञापनं करवाणि। हे राजन् [वरुण], सुयमात् रायः (=सुष्ठु नियम्याद्धनात्) माहम् अव स्थां (=मा विहीनः स्याम्)। सुवीराः (=शोभनवीर्योपेतपुत्रादिभिरुपेता) [वयं] विदथे (=यज्ञे) बृहद् वदेम (=तव महत् स्तोत्रं ब्रूयाम) ॥

६. हे पूजनीय [ देव ] हो, तुम्ही आज आम्हांकडे तोंड करा. भ्यालेला जो मी त्या मला तुमच्या कृपेला शरण जाऊं द्या. हे देव हो, तुम्ही हिंसकाच्या हननापासून आम्हांला रक्षा, हे पूजनीय [देव] हो, तुम्ही आम्हांला खळग्यांत पडूं देऊं नका.

६. O worshipful [gods], do you turn yourselves in this direction. May I, who am terrified, take shelter under thy brave protection. Save us, o gods, from the harm of the wolf, save [ us ], o adorable ones, from falling into the pit.

७. हे वरुणा, श्रीमान् [आणि] उदार जो प्रिय आप्त त्याला मी आपलें दैन्य न सांगावें असें कर. हे राजा [ वरुणा ], ज्यावर सहज अधिकार चालवितां येतो अशा धनापासून मी पृथक् न होईन असें कर. चांगल्या वीरांनीं युक्त होत्साते यज्ञांत आम्ही तुझी मोठी स्तुति गाऊं असें कर.

7. May I never tell, o Varuṇa, my poverty to a rich [ and ] bounteous dear relation. May I never be, o king, without controllable wealth. May we, accompanied by brave sons, chant great praises [ of thee ] in the sacrifice.

## सूक्तम् ३०–२२१.

गृत्समद ऋषिः । प्र हि क्रतुमित्येषेन्द्रासोमदेवताका । सरस्वति त्वमस्मानित्यर्धर्चः सारस्वतः । यो नः सनुत्य इत्येषा बार्हस्पत्या । अन्या मारुती । शिष्टा ऐन्द्र्यः ॥ जगती छन्दः ॥

**ऋतं देवाय कृण्वते सवित्र इन्द्रायाहिघ्ने न रमन्त आपः ।**
**अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसाम् ॥ १ ॥**

ऋतम् । देवाय । कृण्वते । सवित्रे । इन्द्राय । अहिऽघ्ने । न । रमन्ते । आपः ।
अहःऽअहः । याति । अक्तुः । अपाम् । कियति । आ । प्रथमः । सर्गः । आसाम् ॥ १ ॥

**यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुष उवाच ।**
**पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्यर्थम् ॥ २ ॥**

यः । वृत्राय । सिनम् । अत्र । अभरिष्यत् । प्र । तम् । जनित्री । विदुषे । उवाच ।
पथः । रदन्तीः । अनु । जोषम् । अस्मै । दिवेऽदिवे । धुनयः । यन्ति । अर्थम् ॥ २ ॥

---

### भाषायाम्.

१. ऋतं कृण्वते ( =उदकवृष्टिं कुर्वते ) देवाय सवित्रे ( =दीप्ताय सवित्रे=सर्वेषां प्रेरकाय ) अहिघ्ने ( =वृत्रस्य हननं कुर्वते ) इन्द्राय ( =एतादृशादिन्द्राद्धीत्वा ) आपो न रमन्ते ( =उदकप्रवाहा नोपरता भवन्ति=नित्यं गच्छन्ति ) । अहरहः ( =प्रत्यहम् ) अपाम् अक्तुः ( =उदकानां "सेचकं स्रोतो") याति ( =गच्छति ) । आसां ( =तासामपां ) प्रथमः सर्गः कियति आ ( =प्रथमा सृष्टिः कस्मिन् काले जाता?=कदा ताः प्रथममजायन्त ) ?

यावति काले ता अजायन्त स कालः कियान् । किं परिमाणं तस्य कालस्य । न किमपि । नित्या एव हि ता इत्यर्थः । इति ॥

२. अत्र (=तस्मिन् प्रसङ्गे ) यः [ पुरुषो ] वृत्राय सिनम् अभरिष्यत् ( =वृत्राय दातुं हविरन्नरूपं धनं संपादितवान् ) तं [ पुरुषं ] जनित्री (=इन्द्रमाता अदितिर् )

## सूक्त ३०–२२१.

ऋषि—गृत्समद. देवता— १-५ इन्द्र; ६ इन्द्र आणि सोम; ७ इन्द्र; ८वीच्या प्रथमार्धाची देवता सरस्वती, उत्तरार्धाची इन्द्र; ९ बृहस्पति; १० इन्द्र; ११ मरुत्. वृत्त—जगती.

१. उदकवृष्टि करणारा, देदीप्यमान, सर्वांचा प्रेरक आणि अहीला मारणारा असा जो इन्द्र, त्याला भिऊन उदकें थांबत नाहींत. उदकांचा प्रवाह नित्य चालत असतो. त्यांजला प्रथम कोणत्या [ काळीं ] निर्माण केलें ?

२. जो [ मनुष्य ] त्या प्रसंगीं वृत्राला [ देण्यासाठीं ] हविरन्न आणिता झाला त्याचें नांव माता [ आपल्या] जाणणाऱ्या पुत्रापाशीं सांगती झाली. त्याच्या इच्छेनुरूप त्याजकरितां मार्ग खोदणाऱ्या ज्या नद्या, त्या प्रतिदिनीं इष्ट स्थळीं जात असतात.

## HYMN 30–221.

To *Indra* (*vs.*1–5); *Indra* and *Soma* ( *v.* 6 ); *Indra* (*v.*7,); *Sarasvatî* ( the first half of *v.* 8 ), and *Indra* ( second half of the 8th *v.* ); *Bṛihaspati* ( *v.* 9 ); *Indra* ( *v.*10 ) and the *Maruts* ( *v.* 11 ). By *Gṛitsamada*. Metre—*Jagatî*.

1. The waters do not stop for fear of Indra, the sender of rain, the brilliant, the inspiring, the killer of Vṛitra. The stream of the waters flows from day to day. When was their first birth?

2. The mother declared to [ her ] knowing [ son ] him who had then prepared to offer oblation to Vṛitra. The rivers, digging out channels for him according to his wish, daily run to their destination.

---

१. 'त्याला भिऊन उदकें थांबत नाहींत' ='न रमन्ते आपः' म्हणजे उदकें नित्य वाहत असतात, गतिभंग केला तर इंद्राचा कोप होईल म्हणून उगी राहत नाहींत. आणि हीं निरंतर चालतच आलीं आहेत. प्रथम त्यांजला केव्हां निर्माण केलें हें कोणास ठाऊक आहे. ?

२. 'माता [ आपल्या ] जाणणाऱ्या पुत्रापाशीं सांगती झाली.'=' जनित्री वि-

ऊर्ध्वो ह्यस्थादध्यन्तरिक्षेऽधा वृत्राय प्र वधं जभार ।
मिहं वसान उप हीमदुद्रोत्तिग्मायुधो अजयच्छत्रुमिन्द्रः ॥ ३ ॥
ऊर्ध्वः । हि । अस्थात् । अधि । अन्तरिक्षे । अध । वृत्राय । प्र । वधम् । जभार ।
मिहम् । वसानः । उप । हि । ईम् । अदुद्रोत् । तिग्मऽआयुधः । अजयत् । शत्रुम् । इन्द्रः ॥ ३ ॥
बृहस्पते तपुषाश्नेव विध्य वृकद्वरसो असुरस्य वीरान् ।
यथा जघन्थ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिन्द्र ॥ ४ ॥
बृहस्पते । तपुषा । अश्नाऽइव । विध्य । वृकऽद्वरसः । असुरस्य । वीरान् ।
यथा । जघन्थ । धृषता । पुरा । चित् । एव । जहि । शत्रुम् । अस्माकम् । इन्द्र ॥ ४ ॥

---

विदुषे (=विज्ञानयुक्तायेन्द्राय) प्रोवाच (=कथितवती=अमुकः पुरुषस्तुभ्यं हविरदत्त्वा वृत्राय ददातीति प्रोवाच) । अनु जोषम् (=अनुकामम्=इच्छामनुसृत्य) अस्मै (=तत्सार्थे) प्रथो रदन्तीः (=मार्गान् विलिखन्त्यो मार्गान् कुर्वन्त्यो) धुनयः (=नद्यो) दिवेदिवे (=नित्यम्) अर्थं यन्ति (=गन्तव्यं स्थानं समुद्रं गच्छन्ति) ॥

---

## भाषायाम्.

३. [इन्द्रः] अधि अन्तरिक्षे (=अन्तरिक्ष) ऊर्ध्वोऽस्थात् (=हननाय सिद्धो भूत्वा उदतिष्ठत्) अध (=अनन्तरं) वृत्राय वधं प्र जभार (=शस्त्रं वृत्रस्योपरि प्रहृतवान्) । मिहं वसानः (=मेघमाच्छादयन्) [इन्द्र] उप ईम् अदुद्रोत् (=तं वृत्रमुपागमत्) । तिग्मायुधः (=तीक्ष्णशस्त्र) इन्द्रः शत्रुमजयत् (=वृत्रं जितवान्)॥

४. हे बृहस्पते, तपुषा अश्नेव (=तापकेन तेजस्विना वज्रेणेव) वृकद्वरसः असुरस्य वीरान् (=हिंसकद्वारवतो बलवतः शत्रोर्वीरान्) विध्य (=ताडय) । हे इन्द्र, यथा [त्वं] पुरा (=पूर्वे) धृषता (=धर्षकेण बलेन) [शत्रुं] जघन्थ (=हतवान्) एव चित् (=तथैव) अस्माकं शत्रुं [सांमतं] जहि (=नाशय) ॥

वृकद्वरसः संवृतद्वारस्यासुरस्य वीरान्... । यद्वा संवृतद्वारानसुरस्य वीरान् । इति सायणः ॥

३. नंतर [ इंद्र ] अंतरिक्षांत उभा राहिला आणि वृत्रावर शस्त्राचा प्रहार करिता झाला. [इंद्र] मेघ परिधान करून त्याजवर धांवला [ आणि ] तीक्ष्ण शस्त्र घेऊन त्या शत्रूला जिंकिता झाला.

४. हे बृहस्पती, तूं दारावर घातक वीर ठेवणाऱ्या प्रबळ असुराच्या वीरांस तेजःपुंज वज्रानें मारिल्याप्रमाणें मार. हे इन्द्रा, तूं धैर्यानें जसा पूर्वीं मारिता झालास तसा आतांहि आमच्या शत्रूला मार.

3. He then stood ready in the firmament and struck the thunderbolt on Vritra. [ Indra ] having clothed himself with a cloud ran against him : Indra armed with the sharp weapons vanquished the enemy.

4. O Brihaspati, strike as with the burning thunderbolt the brave sons of the powerful enemy who keeps dangerous warriors in his door. Kill, o Indra, our enemy even as thou didst before with courage.

दुघे प्रोवाच.' म्ह. वृत्रवध होण्याच्या पूर्वीं कोणी इंद्राला टाकून वृत्राला भजूं लागले होते, तेव्हां इंद्राला सोडून वृत्राला कोण कोण हवि देत आहेत तें इंद्राची आई अदिति इनें इंद्राला सांगितलें, असा सायणाचा भावार्थ दिसतो.

'मार्ग खोदणाऱ्या' म्हणजे खोल वाहून पात्र मोठें करणाऱ्या.

इष्ट स्थळीं म्ह. समुद्रांत.

३. 'मेघ परिधान करून'=म्ह. मेघरूप कवच घालून.

४. 'दारावर घातक वीर ठेवणाऱ्या'= 'वृकद्वरसः.' हा शब्द कठिण आहे. दुसरे प्रयोग सांपडत नसल्यामुळें अर्थ काय आहे तें निश्चयानें सांगवत नाहीं. केलेल्या भाषांतराचें तात्पर्य, जो आपल्या दरवाज्यावर घातक म्हणजे शूर असे योद्धे ठेवितो तशा, असें आहे.

अव॑ क्षिप दि॒वो अश्मा॑नमु॒च्चा येन॒ शत्रुं॑ मन्द॒सा॒नो नि॒जूर्वाः॑ ।
तो॒कस्य॑ सा॒तौ तन॑यस्य॒ भूरे॑र॒स्माँ अ॒र्धं कृ॑णुतादिन्द्र॒ गोना॑म् ॥५॥१२

अव॑ । क्षि॒प॒ । दि॒वः । अश्मा॑नम् । उ॒च्चा । येन॑ । शत्रु॑म् । म॒न्द॒सा॒नः ।
नि॒ऽजूर्वाः॑ ।
तो॒कस्य॑ । सा॒तौ । तन॑यस्य । भूरेः॑ । अ॒स्मान् । अ॒र्धम् । कृ॒णु॒ता॒त् ।
इन्द्र॒ । गोना॑म् ॥ ५ ॥ १२ ॥

प्र हि क्रतुं॑ वृ॒हथो॒ यं व॑नु॒थो र॒ध्रस्य॒ स्थो यज॑मानस्य चो॒दौ ।
इन्द्रा॑सोमा यु॒वम॒स्माँ अ॑विष्टम॒स्मिन्भ॒यस्थे॑ कृणुतमु लो॒कम् ॥ ६ ॥

प्र । हि । क्रतु॑म् । वृ॒हथः॑ । यम् । व॒नु॒थः । र॒ध्रस्य॑ । स्थः । यज॑मान-
स्य । चो॒दौ ।
इन्द्रा॑सोमा । यु॒वम् । अ॒स्मान् । अ॒वि॒ष्टम् । अ॒स्मिन् । भ॒यऽस्थे॑ । कृ॒णु॒-
त॒म् । ऊं॒ इति॑ । लो॒कम् ॥ ६ ॥

---

## भाषायाम्.

५. [ हे इन्द्र ], मन्दसानः ( =स्तोत्रेण हर्षितः सन् ) [ त्वं ] येन [ अश्मना= वज्रेण ] शत्रुं निजूर्वाः ( =न्यहिंसीत् ) [ तं ] दिवः ( =द्युलोकस्य ) अश्मानं (=वज्रम् ) उच्चा अव क्षिप ( =उच्चैः स्थितः सन् द्युसकाशाद् अवक्षिप ) । हे इन्द्र, भूरेस्तोकस्य तनयस्य सातौ ( =प्रभूतस्य संतानस्य संतानसंतानस्य च प्राप्तौ विषये ) अस्मान् गोनामर्धं कृणुतात् ( =अस्मान् गवां भोक्तॄन् कुरु=अस्मान् गोभुजः लब्धगोधनान् कुरु ) ॥

प्रभूतपुत्रपौत्रादिभाजो गोधनभाजश्च कुर्वित्यर्थः ॥

६. यं [ क्रतुं ] वनुथः ( =कामयेथे ) तं क्रतुं ( =यज्ञं ) प्र वृहथो हि ( =प्रगमयथो हि प्रकृष्टं प्राप्तफलं कुरुथः खलु ) । [ युवां ] रध्रस्य यजमानस्य ( =राधकस्य =हविर्ददत उपासकस्य) चोदौ स्थः (=प्रेरकौ भवथः=प्रकर्षं प्रापयितारौ भवथः ) । हे इन्द्रासोमा ( =इन्द्रासोमौ ), अस्मिन् भयस्थे ( =भयकारके प्रसङ्गे ) युवम् अस्मान् अविष्टं ( =युवामस्मान् रक्षतम् ) [ अपि च ] उ लोकं कृणुतं ( =भयरहितं स्थानं कुरुतम्=अस्मभ्यं भयरहितत्वं प्रयच्छतम् ) ॥

उलोकमित्येकमेव पदं न तु पदद्वयमिति सम्यक्पाश्चात्याः ॥

५. [ हे इन्द्रा ], तुला हर्ष झाला म्हणजे तूं ज्या [ वज्रा ]नें शत्रूवर प्रहार करितोस तें आकाशाचें वज्र तूं उंचीवरून खालीं फेक. हे इन्द्रा, तूं आम्हांला पुष्कळ अपत्यें आणि संतति आणि गाई यांची समृद्धि दे.

६. [ हे इन्द्र आणि सोम हो ], तुम्हांला जो यज्ञ आवडतो त्याचा तुम्ही उत्कर्ष करितां. तुम्ही भाविक उपासकाचें बरें करणारे आहां. हे इन्द्र आणि सोम हो, तुम्ही या भयंकर प्रसंगांत आम्हांला रक्षा. आमची मुक्तता करा.

5. Throw down from high the thunderbolt of heaven with which thou strikest the enemy [ when thou art ] exhilarated. Make us prosper, o Indra, in the possession of children, of grand-children, and of cows.

6. You promote [that] sacrifice which you love. You are the promoters of the pious sacrificer. O Indra and Soma, do you preserve us in this crisis. Effect [ our ] freedom.

---

५. 'आम्हांला.........समृद्धि दे.' मूळ शब्द 'अस्मात् अर्धं कृणुतात्' अक्षरशः 'आम्हांला भागीदार कर', असे आहेत. यासारिखा आणखी एक मंत्र आहे तो असा:– 'अपां तोकस्य तनयस्य जेषे इन्द्र सूरीन् कृणुहि स्म नः अर्धम्' ऋ. ६.४४.१८; यांतहि ज्यांस द्यावयाचें तद्वाचक पद द्वितीयान्त आहे आणि 'अर्ध' शब्दहि द्वितीयान्तच आहे.

६. हा मंत्र इन्द्र आणि सोमरसरूप जो देव त्यांविषयीं आहे.

न मा तमन्न श्रमन्नोत तन्द्रन्न वोचाम मा सुनोतेति सोमम् ।
यो मे पृणाद्यो दद्यो निबोधाद्यो मा सुन्वन्तमुप गोभिरायत् ॥७
न । मा । तमत् । न । श्रमत् । न । उत । तन्द्रत् । न । वोचाम ।
मा । सुनोत । इति । सोमम् ।
यः । मे । पृणात् । यः । ददत् । यः । निऽबोधात् । यः । मा ।
सुन्वन्तम् । उप । गोभिः । आ । अयत् ॥ ७ ॥
सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून् ।
त्यं चिच्छर्धन्तं तविषीयमाणमिन्द्रो हन्ति वृषभं शण्डिकानाम् ॥८
सरस्वति । त्वम् । अस्मान् । अविड्ढि । मरुत्वती । धृषती । जेषि ।
शत्रून् ।
त्यम् । चित् । शर्धन्तम् । तविषीऽयमाणम् । इन्द्रः । हन्ति । वृषभम् ।
शण्डिकानाम् ॥ ८ ॥

---

## भाषायाम्.

७. [ अभिषवणादि कर्म ] न मा तमत् ( =मां न तमयतु न ग्लपयतु ) । [ तन्मां ] न श्रमत् (=श्रान्तं मा करोतु) उत न तन्द्रत् (=न तन्द्रयेत्) सोमम् [इन्द्रार्थं] मा सुनोत ( =माभिषुणुतेति ) न वोचाम ( =न ब्रवाम ) । यो मे पृणात् ( =स हि मां पूर्णकामं करोति ) यो ददत् ( =स हि मह्यं धनं ददाति ) यो निबोधात् (=स हि मम स्तोत्रमवगच्छति ) यः सुन्वन्तं मा गोभिः उप आ अयत् ( =स हि सोममभिषुण्वन्तं मां गोभिः सह आगच्छति ) ॥

८. हे सरस्वति, त्वमस्मान् अविड्ढि ( =रक्ष ) । धृषती (=धर्षयन्ती त्वं ) मरुत्वती ( =मरुद्युक्ता सती ) शत्रून् जेषि ( =जय ) । इन्द्रस्त्यं चित् ( =तमपि प्रसिद्धं ) शर्धन्तं ( =बलवन्तं ) तविषीयमाणं ( =बलमिवाचरन्तं=बलमाविष्कुर्वन्तं ) शण्डिकानां वृषभं ( =शण्डवंश्यानां मध्ये प्रधानं कंचिच्छत्रुं ) हन्ति [ स्म ] ॥

शण्डामर्कावसुरपुरोहितौ । इति सायणः ॥

७. [ इन्द्रसेवेचा ] मला कंटाळा न येओ; [ इन्द्रसेवेनें ] मी थकलों असें न होओ अथवा त्रासलों असें न होओ. तुम्ही सोम काढूं नका असें आमच्या तोंडांतून न येओ. कारण तो आमचे मनोरथ पूर्ण करितो, तो धन देतो, तो [ माझें ] स्तोत्र ऐकून घेतो, तो गाईला घेऊन मज सोमयागीप्रत येत असतो.

7. Let not [ the worship of Indra ] fatigue me, let it not tire [ me ] and let it not trouble [ me ]; let us not say : do not extract soma ; since he fulfils [ my desire ], since he gives, since he accepts [ my prayer ], since he comes to me, a soma-sacrificer, with cows.

८. हे सरस्वती, तूं आम्हांला रक्ष. धैर्यसंपन्न अशी जी तूं ती मरुतांसह शत्रूंला जिंक. तो जो बळवान् [ आणि ] धैर्यसंपन्न असा शंडिकांचा प्रभु त्यालाहि इंद्र मारिता झाला.

8. O Sarasvatî, do thou preserve us. Accompanied by the Maruts do thou, [ who art ] brave, vanquish the enemies. Indra killed even the lord of the S'aṇḍikas, him who was strong [ and ] courageous.

---

७. ‘पृणात्’ ‘ददत्’ ‘निबोधात्’ आणि ‘अयत्’ हे भावे-प्रयोग आहेत असें किती एक पाश्चात्य विद्वानांचें म्हणणं आहे.

८. ‘सरस्वती.’ सू.३ मं. १० आणि टीप पहा.

‘शंडिकांचा प्रभु’=‘शण्डिकानां वृषभम्.’ हा कोण होता आणि त्याजविषयीं काय कथा आहे ती कळत नाहीं. सायण म्हणतात कीं ‘शंडिक’ म्हणजे ‘शण्ड’ नांवाच्या कोणा एकाचे वंशज. पण शण्ड कोण हें ठाऊक नाहीं, आणि त्याच्या वंशजांचा प्रभु येथें सांगितला तो कोण तेंहि कळत नाही. हीं नांवें पुनः ऋग्वेदांत आलेलीं नाहींत.

यो नः सनुत्य उत वा जिघत्नुरभिख्याय तं तिगितेन विध्य ।
बृहस्पत आयुधैर्जेषि शत्रून्द्रुहे रीषन्तं परि धेहि राजन् ॥ ९ ॥
यः । नः । सनुत्यः । उत । वा । जिघत्नुः । अभिऽख्याय । तम् । तिगितेन । विध्य ।
बृहस्पते । आयुधैः । जेषि । शत्रून् । द्रुहे । रिषन्तम् । परि । धेहि । राजन् ॥ ९ ॥

अस्माकेभिः सत्वभिः शूर शूरैर्वीर्या कृधि यानि ते कर्त्वानि ।
ज्योगभूवन्ननुधूपितासो हत्वी तेषामा भरा नो वसूनि ॥ १० ॥
अस्माकेभिः । सत्वऽभिः । शूर । शूरैः । वीर्या । कृधि । यानि । ते । कर्त्वानि ।
ज्योक् । अभूवन् । अनुऽधूपितासः । हत्वी । तेषाम् । आ । भर । नः । वसूनि ॥ १० ॥

---

## भाषायाम्.

९. यो नः सनुत्यः ( =अस्माकमन्तर्हितः शत्रुः ) उत वा जिघत्नुः ( =अथवा जिघांसुर् ) [ भवति ] तम् अभिख्याय ( =संवीक्ष्य ) तिगितेन ( =तीक्ष्णेनायुधेन ) विध्य ( =ताडय ) । हे बृहस्पते, आयुधैः शत्रून् जेषि ( =जय ) । हे राजन्, द्रुहे ( =द्रोग्ध्रे=शत्रोरुपरि ) रिषन्तं ( =हिंसन्तं ) [ वज्रं ] परि धेहि ( =प्रक्षिप ) ॥

१०. हे शूर [ ? इन्द्र ], यानि वीर्या ( =वीरकर्माणि ) ते कर्त्वानि ( =तव कर्तव्यानि ) [ भवन्ति ] [ तानि ] अस्माकेभिः सत्वभिः शूरैः ( =अस्मदीयैर्विजयिभिर्वीरैः सहायैः ) कृधि ( =कुरु ) । [ अस्माकं शत्रवो ] ज्योक् (=चिरकालम् ) अनुधूपितासोभूवन् ( =" धूपायमानहृदयाः"=दुष्टहृदया अभूवन् ) । [ तान् ] हत्वी ( =हत्वा ) तेषां वसूनि ( =धनानि ) नः ( =अस्मभ्यम् ) आ भर (=आनय ) ॥

९. जो आमचा गुप्त शत्रु [ असेल ] अथवा [ जो ] घात करूं इच्छिणारा [ असेल ] त्याला पाहून घेऊन तूं तीक्ष्ण शस्त्रानें मार. हे बृहस्पती, तूं आयुधांनीं शत्रूंला जिंक. हे राजा [ बृहस्पती ], तूं शत्रूच्या अंगावर घातक [ वज्र ] टाक.

१०. हे शूरा, आमच्या विजयी शूरांच्या योगानें तूं जे पराक्रम तुला करावयाचे असतील ते कर. [ शत्रु ] पुष्कळ दिवस आनंदी झाले आहेत. [ त्यांस ] मारून त्यांच्या संपत्ति आम्हांला आणून दे.

9. Find out and strike with the sharp weapon him who [ is ] our secret [ enemy ] or [ who is ] desirous of killing us. O Brihaspati, conquer the enemies with [ thy ] weapons. Throw on the spiteful foe the destructive [thunderbolt], o king [Brihaspati ] !

10. O hero, do thou achieve with our victorious heroés whatever deeds thou hast to achieve. [Our enemies] have been pleased for a long time. Kill them and bring their wealth to us.

---

१०. जीं पराक्रमाचीं कृत्यें इन्द्र करणार आहे तीं त्याणें ऋषीच्या पुत्रांचें साहाय्य घेऊन करावीं अशी प्रार्थना आहे. उत्तरार्धांत प्रार्थना किती चमत्कारिक आहे पहा !

**तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् ।**
**यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे॥ ११॥ १३**

तम् । वः । शर्धम् । मारुतम् । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यम् । जनम् ।
यथा । रयिम् । सर्वऽवीरम् । नशामहै । अपत्यऽसाचम् । श्रुत्यम् । दिवेऽदिवे ॥ ११ ॥ १३ ॥

### भाषायाम्.

११. [हे मरुतः], वस्तं मारुतं शर्धं (=युष्माकं प्रसिद्धं मरुत्संबन्धिनं गणं) सुम्नयुः (=सुखेच्छुरहं) गिरा (=स्तुत्या) उप ब्रुवे (=उपेत्य स्तौमि)—दैव्यं जनं नमसा [उपब्रुवे] (=देवसंबन्धिनं जनं मरुद्रूपं नमस्कारेण उपेत्य स्तौमि)। यथा (=येन प्रकारेण) सर्ववीरं (=सर्वैर्वीरैरुपेतम्) अपत्यसाचं (=संततियुक्तं) श्रुत्यं (=प्रशस्यभूतं) रयिं (=धनं) दिवेदिवे (=प्रतिदिनं) नशामहै (=प्राप्नवाम)॥

## सूक्तम् ३१-२२२.

गृत्समद ऋषिः । विश्वे देवा देवता । अन्त्या त्रिष्टुप् । शिष्टा जगत्यः ॥

**अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा ।**
**प्र यद्वयो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः॥ १ ॥**

अस्माकम् । मित्रावरुणा । अवतम् । रथम् । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा ।
प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीवन्तः । वनऽसदः ॥ १ ॥

### भाषायाम्.

१. हे मित्रावरुणा (=मित्रावरुणौ), आदित्यै रुद्रैः (="एकादशसंख्याकैः") वसुभिः (=? एतन्नामकैर्देवैश्) [च] सचाभुवा (=सहितौ) [युवाम्] अस्माकं रथम् अवतं (=रक्षतम्) यत् (=यदा) श्रवस्यवः (=अन्नेच्छवो) हृषीवन्तः (=प्राप्तहर्षा) वनर्षदः (=वृक्षादौ निषण्णा) वयः (=पक्षिणो) वस्मनः परि [इव] (=निवासस्थानादिव) [अस्माकमश्वाः] प्र पप्तन् (=प्रपतन्ति=उत्पतन्ति)॥

११. [हे मरुतांनो], तुमचा जो तो मरुद्गण त्याला सुखेच्छु असा जो मी तो स्तुतीनें– [तुम्हां] दिव्य जनाला मी नमस्कारानें स्तवितों; कीं जेणेंकरून आम्ही सर्व वीरांनीं युक्त, अपत्यसंपन्न [आणि] स्तुत्य अशा संपत्तीला प्रतिदिनीं पावूं.

11. I desirous of happiness approach and pray to your troop of the Maruts with a hymn—[pray to] the celestial race with an obeisance; so that we may obtain day to day a prosperity full of all brave heroes, blessed with progeny, [and] deserving to be renowned.

११. यांत ऋषि मरुतांशीं बोलतो आहे. म्हणून 'तुमचा जो मरुद्गण' याचा अर्थ 'तुम्ही जे मरुद्गण' असा आहे.

---

## सूक्त ३१–२२२.

ऋषि–गृत्समद. देवता–विश्वे देव. वृत्त–शेवटची त्रिष्टुभ्, उरलेल्या जगती छंदाच्या.

## HYMN 31–222.

To *Vis've Devas.* By *Gritsamada.* Metre—*Jagatî*, except in the last verse where it is *Trishṭubh.*

१. हे मित्रावरुण हो, आदित्य [आणि] रुद्र [आणि] वसु यांसहित जे तुम्ही ते अन्नेच्छु, आनंदी, [आणि] वृक्षसादी पक्षी आपल्या घरट्यापासून [उडाल्या]प्रमाणें आमचे घोडे उडतात तेव्हां आमचा रथ रक्षा.

1. O Mitra and Varuṇa, do you, accompanied by the Âdityas, the Rudras, [and] the Vasus, do you preserve our chariot when [our horses] have flown away even as birds from their nest in quest of food, full of joy and perching on trees.

१. हें सूक्त चमत्कारिक आहे. त्याचा भावार्थ देवांनीं सूक्तवक्त्याच्या रथाला रक्षावें असा आहे. हा रथ म्हणजे कोणता घ्यावयाचा तें सायण सांगत नाहींत. लढाईला अथवा देशांतरीं जावयाला निघालेल्या रथाला रक्षावयाचें असेल; यज्ञरूप रथ घ्यावयाचा नसेल. [पुढचा मंत्र पहा].

अध॑ स्मा नो उदवता सजोषसो रथं देवासो अभि विक्षु वाजयुम् ।
यदाशवः पद्याभिस्तित्रतो रजः पृथिव्याः सानौ जङ्घनन्त पाणिभिः ॥ २ ॥

अध॑ । स्म । नः । उत् । अवत । सऽजोषसः । रथम् । देवासः । अभि । विक्षु । वाजऽयुम् ।
यत् । आशवः । पद्याभिः । तित्रतः । रजः । पृथिव्याः । सानौ । जङ्घनन्त । पाणिऽभिः ॥ २ ॥

उत स्य न इन्द्रो विश्वचर्षणिर्दिवः शर्धेन मारुतेन सुक्रतुः ।
अनु नु स्थात्यवृकाभिरूतिभी रथं महे सनये वाजसातये ॥ ३ ॥

उत । स्यः । नः । इन्द्रः । विश्वऽचर्षणिः । दिवः । शर्धेन । मारुतेन । सुऽक्रतुः ।
अनु । नु । स्थाति । अवृकाभिः । ऊतिऽभिः । रथम् । महे । सनये । वाजऽसातये ॥ ३ ॥

---

## भाषायाम्.

२. यद् ( =यदा ) आशवः ( =अस्माकमश्वाः ) पद्याभिः ( =पदगतिभी ) रजस्तित्रतः ( =मार्गं क्रममाणाः सन्तः ) पाणिभिः ( =पादैः ) पृथिव्याः सानौ जङ्घनन्त ( =अत्यन्तगमनेन नादं कुर्वन्ति ) अध स्म ( =तदानीं ) नो वाजयुम् (=अस्माकम् अन्नेच्छुं वेगवन्तं) रथम् अभि विक्षु उद् अवत (=प्रजासु जनपदेषु प्रादुर्भावयत)॥

३. उत ( =अपि च ) विश्वचर्षणिः (=सर्वज्ञः ) [ अपि च ] दिवो मारुतेन शर्धेन ( =द्युलोकस्य संबन्धी यो मरुद्गणस्तेन ) सुक्रतुः ( =शोभनपराक्रमकर्मा ) स्य ( =स ) इन्द्रः महे सनये वाजसातये ( =महते धनाय संपदे च=धनं संपदं च यथा वयं लभेमहि तथा ) अवृकाभिरूतिभिः (=अहिंसकाभी रक्षाभिर् ) नो रथम् अनु नु स्थाति ( =अनुकूलो भूत्वा रक्षणाय तस्य समीपे तिष्ठतु ) ॥

---

'रुद्र' हे कोण आणि वसु ते कोण व ते किती किती आहेत याविषयीं सू. ४५ मं. १ आणि टिपा पहा.

२. हे सर्व देव हो, जेव्हां [ आमचे ] घोडे पायांनीं मार्गक्रमण करीत करीत [ आपल्या ] पायांनीं पृथिवीच्या उंचवट्यावर दणदणाट करितात, तेव्हां आमचा वेगवान् रथ लोकवस्तींत येई असें तुम्ही करा.

2. When [ our ] horses traversing the space with [ their ] paces stump with [ their ] hoofs on the summit of the earth, make then our racing chariot, o you united gods, to come among the people.

३. आणि स्वर्गींच्या मरुद्गणाच्या योगानें महापराक्रमी असा तो विश्वदर्शी इन्द्र आम्हांला मोठें धन [ आणि ] संपत्ति मिळावी म्हणून आमच्या रथाला निर्भय रक्षणांनीं रक्षो.

3. And may that Indra, all seeing, [ and ] powerful through the heavenly troop of the Maruts, support our chariot with beneficent helps, that we may obtain great wealth [ and ] affluence.

---

२. 'आमचे घोडे जेव्हां रथाला घेऊन खडकांवरून वगैरे जात असतात आणि लोकांची वस्ति सांपडत नाहीं, तेव्हां आमच्या रथाला वस्तींत घेऊन ये' असा या मंत्राचा भावार्थ दिसतो.

३. आमच्या रथाचें रक्षण करावें म्हणून इंद्र आमच्या रथाच्या मागें उभा राहो; म्हणजे मग आम्हांला पुष्कळ धन आणि संपत्ति मिळेल असा भावार्थ.

'स्वर्गींच्या '=' दिवः'. ही षष्ठी अडचणीमुळें मान्य करावयाची. सायण 'स्वर्गापासून येऊन ' असा अर्थ करण्यासाठीं दिवः ही पंचमी आहे असें म्हणतात.

उत स्य देवो भुवनस्य सक्षणिस्त्वष्टा ग्नाभिः सजोषा जूजुवद्रथम् ।
इळा भगो बृहद्दिवोत रोदसी पूषा पुरंधिरश्विनावधा पती ॥ ४ ॥

उत । स्यः । देवः । भुवनस्य । सक्षणिः । त्वष्टा । ग्नाभिः । सऽजोषाः ।
जूजुवत् । रथम् ।
इळा । भगः । बृहत्ऽदिवा । उत । रोदसी इति । पूषा । पुरम्ऽधिः ।
अश्विनौ । अध । पती इति ॥ ४ ॥

उत त्ये देवी सुभगे मिथूदृशोषासानक्ता जगतामपीजुवा ।
स्तुषे यद्वां पृथिवि नव्यसा वचः स्थातुश्च वयस्त्रिवया उपस्तिरे ॥५॥

उत । त्ये इति । देवी इति । सुभगे इति सुऽभगे । मिथुऽदृशा । उ-
षसानक्ता । जगताम् । अपिऽजुवा ।
स्तुषे । यत् । वाम् । पृथिवि । नव्यसा । वचः । स्थातुः । च । वयः ।
त्रिऽवयाः । उपऽस्तिरे ॥ ५ ॥

---

## भाषायाम्.

४. उत (=अपि च) स्य (=स=प्रसिद्धो) देवः (=दीप्तिमान्) भुवनस्य सक्षणिः (=जगतः सेव्यः स्वामिभूतस्) त्वष्टा ग्नाभिः सजोषाः (=देवपत्नीभिः संगतस्ताभिः सहितः सन्) [अस्माकं] रथं जूजुवत् (=अतिशयेन प्रेरयतु=चोदयतु)। [तथा] इळा भगः उत (=अपि च) बृहद्दिवा (=बृहद्दिवे दीप्तिमत्यौ) रोदसी (=द्यावापृथिव्यौ) पुरंधिः (=मेधावी) पूषा अध (=अपि च) पती अश्विनौ (=भर्तारावश्विनौ) [रथं जूजुवत्] ॥

बृहद्दिवेति काचिद्देवीति पाश्चात्याः। बृहद्दिवा बृहद्दिवो भग इति सायणाभिप्रायः॥

५. उत (=अपि च) त्ये (=प्रसिद्धे) देवी (=दीप्तिमत्यौ) सुभगे (=सुभाग्यशालिन्यौ) मिथूदृशा (=मिथः परस्परं पश्यन्त्यौ) जगताम् अपीजुवा (=गतिमतां मनुष्यादीनां प्रेरयित्र्यौ) उषासानक्ता (=उषाश्च रात्रिश्च) [अस्माकं रथं प्रेरयन्तु]। [अपि च] हे [द्यौः] पृथिवि [च], यत् (=यस्मात्) वां नव्यसा वचः (=अतिनूतनेन स्तोत्रेण) स्तुषे (=स्तौमि) च (=अपि च) त्रिवयाः (=? "ओषधिपशुसोमात्मकानि हविर्लक्षणान्यन्नानि यस्य तादृशोहं") स्थातुर्वयः (=? स्थावरस्या-

४. आणि जगताचा प्रभु [ असा ] तो देदीप्यमान त्वष्टा देवपत्नींनिशीं [ आमच्या ] रथाला हांको. इळा, भग, आणि महातेजस्वी द्यावापृथिवी, मेधावी पूषा आणि अश्वी प्रभु [ आमच्या रथाला हांकोत ].

५. आणि देदीप्यमान, सौभाग्यशाली, परस्पर अदलाबदलीनें दृष्टीस पडणाऱ्या [ आणि ] सकळ जंगमांला प्रेरणाऱ्या त्या उषा आणि रात्र [ आमच्या रथाला हांकोत ]. हे [ द्यावा]पृथिवी हो, ज्यापेक्षां मी अति नूतन स्तोत्रानें तुम्हांला स्तवितों आणि त्रिविध हवि घेऊन स्थावराचें अन्न [तुम्हां]पुढें ठेवितों, [ त्यापेक्षां तुम्ही आमचा रथ हांका ].

4. And may that brilliant Tvashṭâ, the lord of the world, together with the goddesses, drive [our] chariot. [ May ] Iḷâ, Bhaga, and resplendent Earth and Heaven, wise Pûshâ and the masters As'vins [ drive our chariot ].

5. And [ may ] those brilliant, blessed Ushas and Night, that appear by turns [ and are ] the inspirers of [ all ] creatures, [ drive our chariot ]. [And do you ], o Earth [ and Heaven, drive our chariot], since I praise you with a new hymn, and carrying the three kinds of food, spread before [ you ] the food of the moveable.

---

४. इंद्राची जशी रथाचें पाठबळ करण्याविषयीं प्रार्थना वरच्या मंत्रांत केली तशी यांत इळा, भग, द्यावापृथिवी, पूषा आणि अश्वी यांनीं रथ हांकावा अशी त्यांची प्रार्थना केली आहे.

५. या ऋचेचा उत्तरार्ध कठिण आहे. पूर्वार्धांत उषा आणि रात्र यांस रथ हांकण्याविषयीं प्रार्थना केली आहे. तशीच उत्तरार्धांतहि द्यावापृथिवींस तीच प्रार्थना केली आहे असें समजून आम्हीं भाषांतर केलें आहे. तरी 'त्रिविध हविरन्न घेऊन' (='त्रिवयाः') आणि 'स्थावराचें अन्न' यांचा अर्थ निर्विवाद रीतीनें करणें कठिण आहे. सायणांचा अर्थ भाषेखालीं दिला आहे. 'स्थावराचें अन्न' म्हणजे धान्यरूप अन्न असें ते म्हणतात.

उत वः शंसमुशिजामिव श्मस्यहिर्बुध्न्योऽज एकपादुत ।
त्रित ऋभुक्षाः सविता चनो दधेऽपां नपादाशुहेमा धिया शमि ६

उत । वः । शंसम् । उशिजाम्ऽइव । श्मसि । अहिः । बुध्न्यः । अजः ।
एकऽपात् । उत ।

त्रितः । ऋभुक्षाः । सविता । चनः । दधे । अपाम् । नपात् । आ-
शुऽहेमा । धिया । शमि ॥ ६ ॥

एता वो वश्म्युद्यता यजत्रा अतक्षन्नायवो नव्यसे सम् ।
श्रवस्यवो वाजं चकानाः सप्तिर्न रथ्यो अह धीतिमश्याः॥७॥१४

एता । वः । वश्मि । उत्ऽयता । यजत्राः । अतक्षन् । आयवः । न-
व्यसे । सम् ।

श्रवस्यवः । वाजम् । चकानाः । सप्तिः । न । रथ्यः । अह । धीतिम् ।
अश्याः ॥ ७ ॥ १४ ॥

---

न्नम् ) उपस्तिरे ( =युवाभ्यां प्रयच्छामि ) [ अस्मात् कारणाद्युवामपि अस्माकं रथं प्रेरयतम् ] ॥

स्तुषे इत्याद्युत्तरार्धो दुर्बोधः । स्थातुः स्थावरस्य व्रीह्यादेः संबन्धि वयोन्नं चरुपुरोडाशादिलक्षणमिति सायणः ॥

---

## भाषायाम्.

६. उत ( =अपि च ) [ हे देवाः ], उशिजामिव वः शंसं श्मसि ( =स्तोत्रकामिनामिव युष्माकं स्तोत्रम् उश्मसि कामयामहे=स्तोत्रकामिनो यस्माद्यूयं तस्माद्युष्मान्स्तोतुमिच्छामः ) । अहिर्बुध्न्यः उत ( =अपि च ) अज एकपाद् त्रितः (=एतन्नामको देवः ) ऋभुक्षाः ( =ऋभुर्नाम देवः ) सविता [ तथा ] आशुहेमा (=शीघ्रगामी) अपां नपात् ( =उदकानां पुत्रोऽग्निः ) शमि ( =अस्मिन् यज्ञकर्मणि ) धिया ( =स्तोत्रेण द्वारा [ अस्मभ्यं ] चनो दधे (=अन्नं ददातु ) ॥

शमि शमी शम्या कर्मणेति पाश्चात्याः ॥ चनस्तृप्तिरिति च त एव ॥

७. हे यजत्राः ( =पूजनीया ) [ देवाः ], एता व उद्यता [ स्तोत्राणि ] वश्मि (=एतानि उच्चारितानि स्तोत्राणि कामये=एतानि स्तोत्राण्युच्चारयितुमहं कामये) ।—आयवः (=यजमाना ) नव्यसे (=अतिशयेन स्तुत्याय तुभ्यं देवगणाय) [ तानि ] सम्

६. आणि तुम्ही [ स्तोत्र]-सकाम असल्यामुळें तुमचें स्तोत्र करणें आम्हांला आवडतें. अहिर्बुध्न्य आणि अज एकपाद्, त्रित, ऋभुक्षा, सविता, [ आणि ] शीघ्रगामी अपां-नपात् [हे] स्तुतीच्या योगानें या उपासनेंत [आम्हांला ] अन्न देओत.

६. And we love to praise you as those who love [the hymn]. May Ahirbudhnya, and Aja Ékapâd, Trita, Ṛibhukshâ, Savitâ and the impetuous son of the waters give us food through our hymn in this rite.

७. हे पूजनीय [ देव ] हो, तुमचीं हीं [ स्तोत्रें ] उच्चारावयास मला आवडतें. अत्यंत स्तुत्य जे तुम्ही त्या तुम्हांप्रीत्यर्थ तीं उपासक जन रचिते झाले आहेत. हविरन्न मिळवूं इच्छिणारे [ आणि ] आहुतीची वांछा करणारे [जे तुम्ही, ते ] रथास जोडिलेल्या अश्वाप्रमाणें [ ह्या आमच्या ] कर्माप्रत पावा.

7. I love to proclaim, o adorable ones, these your [praises]. The worshippers have composed them for [you] most deserving to be praised. May you, who are desirous of the sacrificial food [and] love the oblation, come to [this our] worship like a chariot-horse.

---

६. 'अहिर्बुध्न्य.' सू. १८६ मं. ५ आणि टीप पहा.

'अज एकपाद्' हें एका देवाचें नांव आहे. 'जन्मरहित आणि एकला जातो' म्हणून अज एकपाद् हें नांव पडलें आहे असें सायण म्हणतात. ह्या देवाचा निर्देश द्यावापृथिवींबरोबर येतो. अथवा 'अहिर्बुध्न्य' याजबरोबर येतो. केव्हां केव्हां दुसऱ्या देवांबरोबरहि येतो.

'त्रित' याविषयीं सू. ५२ मं. ५ आणि टीप पहा. 'ऋभुक्षा' आणि ऋभु एकच; ऋभु कोण तें सू. २० मं. १ आणि त्याजवरील टीप यांत पहा. 'अपां नपात्,' याविषयीं सू. १४३ मं. १ आणि टीप पहा.

## सूक्तम् ३२-२२३.

गृत्समद ऋषिः। प्रथमा द्यावापृथिवीया। द्वे ऐन्द्र्यौ त्वाष्ट्र्यौ वा। ततो द्वे राकादेवत्ये। द्वे सिनीवालीदेवत्ये। अन्त्या गुङ्ग्वादिषड्देवताका॥ षष्ठ्याद्यास्तिस्रोऽनुष्टुभः। शिष्टाः पञ्च जगत्यः॥

**अस्य मे द्यावापृथिवी ऋतायतो भूतमवित्री वचसः सिषासतः।**
**ययोरायुः प्रतरं ते इदं पुर उपस्तुते वसूयुर्वां महो दधे॥ १॥**

अस्य। मे। द्यावापृथिवी इति। ऋतऽयतः। भूतम्। अवित्री इति। वचसः। सिसासतः।
ययोः। आयुः। प्रऽतरम्। ते इति। इदम्। पुरः। उपस्तुते इत्युपऽस्तुते। वसुऽयुः। वाम्। महः। दधे॥ १॥

---

अतक्षन् (=सम्यगर्चितवन्तः)। अह (=अध=अधुना) श्रवस्यवः (=हविरन्नेच्छवो) वाजं चकानाः (=उपासकैर्दत्तम् अन्नं कामयमाना) [यूयं] रथ्यः सप्तिर्न (=रथे युक्तोऽश्व इव) धीतिम् (=अस्माभिः क्रियमाणामिमामुपासनाम्) अश्याः (=प्राप्नुयाः =प्राप्नुत)॥

देवगणस्यैकत्वापेक्षया नव्यसे इत्यत्र अश्या इत्यत्र चैकवचनप्रयोगः। पाश्चात्यास्तु नव्यसे नवतरं यथा तथेति॥

---

### भाषायाम्.

१. हे द्यावापृथिवी (=द्यावापृथिव्यौ), ऋतायतः (=सत्यं यज्ञमिच्छतः) सिषासतः (=वां संभक्तुमिच्छतो) मे (=मम) अस्य [क्रियमाणस्य] वचसः (=स्तोत्रस्य) अवित्री (=अवित्र्यौ=पालयित्र्यौ) भूतं (=भवतम्)। ययोर् [युवयोर्द्यावापृथिव्योर्] आयुः (=बलं) प्रतरं (=प्रकृष्टतरं महत्तरं) [भवति] ते उपस्तुते (=उपेत्य सर्वैः स्तुते) वां वसूयुः (=धनेच्छुरहम्) इदं पुरः (=अस्मिन् स्थाने सर्वेषां पुरतो) महो दधे (=बहु विदधे=बहु करोमि=बहुमन्ये)॥

## सूक्त ३२-२२३.

ऋषि- गृत्समद. देवता, १ली द्यावापृथिवी यांविषयीं; २ आणि ३ या इन्द्राविषयीं अथवा त्वष्ट्याविषयीं असें समजावें; ४ आणि ५ ह्या दोन राका देवीविषयीं; ६ आणि ७ ह्या सिनीवाली ह्या देवीविषयीं; ८वी ऋचा गुंगू, सिनीवाली, राका, सरस्वती, इन्द्राणी आणि वरुणानी या सहा देवींविषयीं. वृत्त- सहावी, सातवी आणि आठवी ह्या तीन अनुष्टुभ्, उरलेलें सर्व सूक्त जगती छंदाचें.

१. हे द्यावापृथिवी हो, मज उपासनेच्छूचें [ आणि तुम्हांला ] भजूं इच्छिणाऱ्याचें [ जें ] हे स्तोत्र [त्या]च्या तुम्ही रक्षक व्हा. ज्यांचें बळ अतिशय मोठें त्या तुम्हां [सर्व]स्तुत [द्यावापृथिवीं]ला धनेच्छु मी हा येथें पूजितों.

## HYMN 32-223.

To *Heaven* and *Earth* ( verse 1); *Indra* or *Tvashṭâ* ( vs. 2, 3); *Râkâ* ( 4, 5 ); *Sinîvâlî* ( 6,7 ); to *Gungû, Sinîvâlî, Râkâ, Sarasvatî, Indrâṇî* and *Varuṇâṇî* ( v. 8 ). Metre—*Jagatî* except in the last three verses where it is *Anushṭubh*.

1. Be you the championesses, o Heaven and Earth, of this hymn of mine who am desirous of sacrificing, [ and ] desirous of worshipping. I who am desirous of wealth thus honour you here—you whose might [ is ] exceeding great, [ and ] who are praised [ by all ].

---

१. 'बळ'=' आयुः'. आयुष्य असाहि अर्थ चालेल.

'पूजितों'=' महो दधे.' अक्षरशः अर्थ, मोठ्या अथवा पूज्य रीतीनें ठेवितों, मनांत धरितों; अर्थात् बहुमान देतों. सू. १५३ मं. १ आणि त्याजवरील 'अत्यंत' याविषयींची टीप पहा.

**मा नो गुह्या रिप आयोरहन्दभन्मा न आभ्यो रीरधो दुच्छुनाभ्यः ।**
**मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत्त्वेमहे २**

मा । नः । गुह्याः । रिपः । आयोः । अहन् । दभन् । मा । नः । आभ्यः । रीरधः । दुच्छुनाभ्यः ।

मा । नः । वि । यौः । सख्या । विद्धि । तस्य । नः । सुम्नऽयता । मनसा । तत् । त्वा । ईमहे ॥ २ ॥

**अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतम् ।**
**पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ॥३॥**

अहेळता । मनसा । श्रुष्टिम् । आ । वह । दुहानाम् । धेनुम् । पिप्युषीम् । असश्चतम् ।

पद्याभिः । आशुम् । वचसा । च । वाजिनम् । त्वाम् । हिनोमि । पुरुऽहूत । विश्वहा ॥ ३ ॥

---

## भाषायाम्.

२. आयोः (=शत्रुलक्षणस्य मनुष्यस्य) गुह्या रिपः (=ज्ञातुमशक्या हिंसारूपा माया) अहन् ( =अहनि कस्मिन्नपि दिने ) मा नो दभन् ( =अस्मान् मा हिंसिषुः ) । नः ( =अस्मान् ) आभ्यो दुच्छुनाभ्यः ( =तादृशीनां दुःखकर्त्रीणाम् अरातीनां वशं मा नैषीः ) । नः सख्या ( =अस्माकं सख्यानि त्वत्सदृशैः सह सखित्वानि ) मा वि यौः (=मा वियुक्तानि कार्षीः=मा नाशय ) । सुम्नायता मनसा ( =सुम्नम् आत्मन इच्छता मनसा ) त्वत् त्वा ईमहे ( =यत्त्वां याचामहे ) तस्य नो विद्धि ( =अस्माकं तस्य प्रार्थनस्य जानीहि=अनुग्रहात्मिकया बुद्ध्या तद्बोध ) ॥

३. अहेळता मनसा ( =अक्रुध्यता=अनुग्रहात्मिकया बुद्ध्या ) श्रुष्टिं (=सुखकरीं ) दुहानां ( =दोग्ध्रीं ) पिप्युषीं ( =पीनाम् ) असश्चतम् (=असक्तां=सततधारायुक्तां ) धेनुं ( =गाम् ) आ वह ( =आनय ) । हे पुरुहूत ( =बहुभिराहूत ) [ इन्द्र ], पद्याभिराशुं ( =? पादगतिभिः शीघ्रगामिनं ) वचसा च वाजिनं ( =? शब्देन वेगवन्तं ) त्वां विश्वहा हिनोमि ( =विश्वेषु दिनेषु प्रीणयामि ) ॥

पद्याभिराशुं वचसा च वाजिनम् इत्यतिशयेन दुर्बोधम् ।

२. शत्रूच्या गुप्त माया [कोणत्याहि] दिवशीं आमचा घात न करोत; तसल्या दुःखकारी शत्रूच्या स्वाधीन आम्हांस करूं नको. तूं आमची मैत्री तोडूं नको. सुखाची इच्छा करणाऱ्या अंतःकरणानें आम्ही तुजकडे मागून घेत आहों, तर आमची ही [प्रार्थना] तूं मनास आण.

2. May the secret intrigues of the [hostile] man never hurt us on any day. Do not subject us to such evil-doers. Do not deprive us of our friendships. Grant the prayer which we are advancing with a heart wishing for thy blessing.

३. क्रोध न करणाऱ्या मनानें सुखदायक, दूध देणारी, पुष्ट आणि समृद्धिकारक [अशी] गाय तूं आम्हांला घेऊन ये. पायांच्या चालींनीं शीघ्रगामी आणि ध्वनीनें वेगवान् असा जो तूं त्या तुला, हे पुरुहूता, मी प्रतिदिनीं भजतों.

3. With a pleased heart bring [us] a useful, milching, fat and prosperous cow. I propitiate daily, o thou invoked by many, thee impetuous with thy movements and swift with thy sound.

---

२. 'शत्रूच्या गुप्त माया'=' आयोगुह्या रिपः'. म्हणजे शत्रूंनीं आमच्या नाशासाठीं जे गुह्य पाश रचिले असतील किंवा जे गुह्य उपाय योजिले असतील ते.

३. 'पायांच्या चालीनें शीघ्रगामी आणि ध्वनीनें वेगवान्'=' पद्भिराशुं वचसा च वाजिनम्'. हें भाषांतर अक्षरशः आम्ही केलें आहे, परंतु त्याच्या भावार्थाविषयीं संशय आहे. कदाचित् मोठ्या वेगानें चालणाऱ्या आणि ओरडणाऱ्या घोड्याप्रमाणें लवकर धांवून येतो असा जो इंद्र त्याला मी भजतों असा भावार्थ असावा.

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥४॥

राकाम् । अहम् । सुऽहवाम् । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना ।
सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥ ४ ॥

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ५ ॥

याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि ।
ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषम् । सुऽभगे । रराणा ॥ ५ ॥

---

## भाषायाम्.

४. सुहवां (=सुखभाह्वानां) राकां [नाम देवीं] सुस्तुती (=शोभनया स्तुत्या) हुवे (=आह्वयामि) सुभगा (=शोभनभाग्यवती) [सा] नः शृणोतु बोधतु त्मना (=अस्माकं स्तोत्रं शृणोतु तच्च जानातु)। अच्छिद्यमानया (=अच्छिन्नया) सूच्या अपः सीव्यतु (=अस्माकं कर्म संतनोतु)। शतदायं (=शतधनदायिनम्) उक्थ्यं (=प्रशस्यं) वीरं (=वीर्यवन्तं पुत्रं) ददातु [च] ॥

संपूर्णचन्द्रा पौर्णमासी तदभिमानिनी देवीति सायणस्याभिप्रायः ॥

५. हे राके यास्ते (=तव) सुपेशसः सुमतयः (=शोभनरूपा अनुग्रहात्मिका बुद्धयः) [सन्ति] याभिश् [च] दाशुषे वसूनि ददासि (=हविर्दत्तवते यजमानाय धनानि प्रयच्छसि) ताभिः [सुमतिभिस्] [त्वम्] अद्य [दिने] सुमनाः [सती] [अपि च] हे सुभगे (=शोभनभाग्यवति), सहस्रपोषं रराणा (=सहस्रसंख्याकां वृद्धिं ददती सती) नः उपागहि (=अस्मान् प्रति आगच्छ) ॥

४. जिचें आह्वान करणें सुलभ होय त्या राकेला मी चांगल्या स्तुतीनें बोलावितों, ती सौभाग्यशाली [ राका ] आमची [स्तुति] ऐको [आणि] मनास आणो. न मोडणाऱ्या सुईनें ती [ आमची ] उपासना सिवो. [आणि] शेकडो संपत्ति मिळविणारा आणि स्तुतियोग्य असा शूर पुत्र देओ.

4. I invoke with an excellent hymn Râkâ, easy to be invoked. May blessed [ Râkâ ] hear and grant our [ prayer ]. May she sew our rite with a needle that does not break. May she give us a brave son that shall win hundreds of riches and shall be deserving of praise.

५. हे राके, तुझे जे सुंदर प्रसाद, [ कीं ] ज्यांहीं तूं हविर्दात्या यजमानाला धनें देतीस त्यांसहित तूं आज प्रसन्न होत्साती आम्हांजवळ ये, आणि हे सुभाग्यसंपन्न [ राके ], हजारो प्रकारच्या संपत्ति पुष्कळ दे.

5. O Râkâ, come thou this day to us, being gracious [ towards us ] with those beautiful favours which belong to thee [and] with which thou givest wealth to the sacrificer, granting, o blessed one, abundance consisting of a thousand gifts.

---

४. 'न मोडणाऱ्या सुईनें आमची उपासना सिवो '=' सीव्यतु अपः सूच्या आच्छिद्यमानया.' म्हणजे आमचें जें यज्ञरूप कर्म त्याचे निरनिराळे भाग अशा रीतीनें रचो कीं, ते विलग आहेत असें न दिसतां सर्व कर्म सांग आणि पूर्ण आहे असें दिसेल.

५. 'राका' ही एक क्षुद्र देवी वेदांत केव्हां केव्हां येते. सायण म्हणतात, ही पौर्णमासीरूप देवी होय. परंतु वेदकाळीं तसा अर्थ होत होता असें 'राका' हें नांव जेथें जेथें येतें त्या त्या वाक्यांवरून दिसतें असें नाहीं.

**सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**

**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ ६ ॥**

सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि । स्वसा ।

जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥६॥

**या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।**

**तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ७ ॥**

या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा । बहुऽसूवरी ।

तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ ७ ॥

**या गुङ्गूर्या सिनीवाली या राका या सरस्वती ।**

**इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ८ ॥ १५ ॥ ३ ॥**

या । गुङ्गूः । या । सिनीवाली । या । राका । या । सरस्वती ।

इन्द्राणीम् । अह्वे । ऊतये । वरुणानीम् । स्वस्तये ॥ ८ ॥ १५ ॥३॥

## भाषायाम्.

६. हे पृथुस्तुके (=बहुकेशसंघाते) सिनीवालि [नाम देवि], या [त्वं] देवानां स्वसासि [सा त्वम्] आहुतं हव्यम् (=अस्माभिर्दत्तं हविर्) जुषस्व (=सेवस्व) । हे देवि, नः प्रजां दिदिड्ढि (=दर्शय=देहि) ॥

दृष्टचन्द्रामावास्या सिनीवाली । इति सायणः ॥

७. [हे यजमानाः], या सुबाहुः (=शोभनबाहुः) [या] स्वङ्गुरिः (=शोभनाङ्गुलियुक्ता) [या] सुषूमा (=सुष्ठु प्रसवित्री) [या] बहुसूवरी (=बह्वीनां प्रजानां सवित्री) [च भवति] तस्य विश्पत्न्यै (=विशां स्वामिन्यै) सिनीवाल्यै हविर्जुहोतन (=हविर्जुहुत) ॥

८. या गुङ्गूर् [नाम देवी] या सिनीवाली या राका या सरस्वती [तामाह्वयामि] [अपि च] इन्द्राणीं [नाम देवीं] वरुणानीं [च नाम देवीम्] ऊतये स्वस्तये (=रक्षणाय कल्याणाय च) अह्वे (=आह्वयामि) ॥

अत्र गुङ्गूशब्देन राकासिनीवाल्योः साहचर्यात्कुहूरुच्यते । इति सायणः ॥

६. हे सुकेशभार सिनीवाली, जी देवांची बहीण होस ती तूं [ हें आम्हीं ] अर्पण केलेलें हवि सेव. हे देवी, तूं आम्हांला संतति दे.

6. O Sinîvâlî of plentiful hair, do thou who art the sister of the gods enjoy the proffered oblation. Give us progeny, o goddess!

७. जी चांगल्या बाहूंची, चांगल्या अंगुल्यांची, जिचा प्रसव चांगला, जी पुष्कळ मुलांला जन्म देणारी, त्या विश्वस्वामिनी सिनीवालीला, [ हे उपासक हो], तुम्ही हव्य अर्पण करा.

7. She who has good arms, she who has good fingers, she who is of easy parturition, she who gives birth to many [ children ] —to that Sinîvâlî, offer oblation, [ o sacrificers ]!

८. जी गुंगू, जी सिनीवाली, जी राका, जी सरस्वती, [ यांला] [ आणि ] इन्द्राणीला [ आणि ] वरुणानीला, मी रक्षणासाठीं [आणि ] कल्याणासाठीं बोलावितों.

8. [ She ] who [ is ] Gungû, [ she ] who [ is ] Sinîvâlî, [ she ] who [ is ] Râkâ, [ she ] who [ is ] Sarasvatî, [ her ] I have invoked for protection [ and ] for prosperity.

---

६. 'सिनीवाली.' हेंहि एका क्षुद्र देवतेचें नांव आहे. सायण म्हणतात कीं ही अमावास्यारूप देवी होय. हिजविषयीं झाला तरी विशेष कांहीं इतिहास ठाऊक नाहीं.

८. 'गुंगू.' ह्या देवीच्या स्वरूपाविषयीं कांहीं ठाऊक नाहीं. हें नांव ऋग्वेदांत पुनः आलेलें नाहीं. सायण म्हणतात 'कुहू' नांवाची देवी आणि ही एकच होय. कुहू म्हणजे ज्या दिवशीं चंद्रकला दिसत नाहीं तशी अमावास्या.

'सरस्वती.' सू. ३ मं. १० आणि टीप पहा.

'इन्द्राणी' आणि वरुणानी' यांविषयीं सू. २२ मं. १२ पहा.

## सूक्तम् ३३–२२४.

गृत्समद ऋषिः । रुद्रो देवता । त्रिष्टुप् छन्दः ॥

**आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।**
**अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥ १ ॥**

आ । ते । पितः । मरुताम् । सुम्नम् । एतु । मा । नः । सूर्यस्य । सम्ऽदृशः । युयोथाः ।
अभि । नः । वीरः । अर्वति । क्षमेत । प्र । जायेमहि । रुद्र । प्रऽजाभिः ॥ १ ॥

**त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः ।**
**व्य१स्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥ २ ॥**

त्वऽदत्तेभिः । रुद्र । शम्ऽतमेभिः । शतम् । हिमाः । अशीय । भेषजेभिः ।
वि । अस्मत् । द्वेषः । विऽतरम् । वि । अंहः । वि । अमीवाः । चातयस्व । विषूचीः ॥ २ ॥

---

### भाषायाम्.

१. हे मरुतां पितः [रुद्र], ते सुम्नं (=तव सुखम्) आ एतु (=अस्मान् आगच्छतु)। सूर्यस्य संदृशः (=दर्शनात्) नः (=अस्मान्) मा युयोथाः (=मा पृथक्कार्षीः) सूर्यदर्शनमस्माकं मा भूदिति कदापि मा कार्षीः)। नो वीरः (= अस्माकं वीर्यवान् पुत्रः) अर्वति अभि क्षमेत (=शत्रौ अभिभवतु=शत्रून् अभिभवतु)। हे रुद्र, प्रजाभिः (=पुत्रपौत्रैः) प्र जायेमहि (=प्रभूताः स्याम) ॥

२. हे रुद्र, त्वादत्तेभिः (=त्वया दत्तैः) शंतमेभिः (=अतिशयेन सुखकरैः) भेषजेभिः (=औषधैः) शतं हिमाः (=शतं संवत्सरान्) अशीय (=प्राप्नुयाम्)। अस्मत् द्वेषः (=शत्रुं) वि [चातयस्व] (=विनाशय) अंहः (=पापं) वितरम् (=अत्यन्तं) वि [चातयस्व] विषूचीः (=नानाव्रतीर्) अमीवाः (=रोगान्) वि चातयस्व (=विनाशय) ॥

## सूक्त ३३–२२४.

ऋषि–गृत्समद्. देवता–रुद्र. वृत्त–त्रिष्टुभ्.

१. हे मरुतांच्या पित्या, तुझें कल्याण येऊं दे. सूर्याच्या दर्शनाचा आणि आमचा वियोग तूं करूं नको. आमचा वीर्यवान् पुत्र शत्रूचा पराभव करो. हे रुद्रा, आम्ही पुत्रपौत्रांनीं वाढूं असें कर.

२. हे रुद्रा, त्वां दिलेलीं जीं अत्यंत सुखकारक औषधें त्यांहीं मी शंभर वर्षांप्रत पावेन असें तूं कर. तूं आम्हांपासून शत्रूला [नाहींसा कर ], पाप अगदी ना[हींसें कर ], सर्वत्र पसरणारे रोग नाहींसे कर.

## HYMN 33–224.

To *Rudra*. By *Gṛitsamada*. Metre—*Trishṭubh*.

1. May thy blessing come, o father of the Maruts! Do not separate us from the sight of the sun. May our brave son subdue the enemy. May we be multiplied with sons and grandsons.

2. May we attain, o Rudra, a hundred winters by the most healing medicaments given by Thee. [ Drive ] away enemies from us, [ drive ] sin far away, drive away disease reaching everywhere.

---

१. हें सूक्त 'रुद्र' या देवाविषयीं आहे. रुद्र हा देव कोण आहे त्याविषयीं सू. ४३ मं. १ आणि टीप पहा.

'तुझें कल्याण'=' ते सुम्नम्.' म्हणजे जें कल्याण तूं करित असतोस तें आम्हांप्रत येओ.

'शत्रूचा पराभव करो'=' अर्वति अभि क्षमेत.' हा अर्थ सायणानुसार केला आहे आणि आम्हांला वाटतें तो निराधार नाहीं. 'अर्वन्' शब्दाचा अर्थ घोड्यावर बसलेला मनुष्य, घोडेस्वार असा वेदांत प्रसिद्ध आहे. त्यावरून घोड्यावर बसलेला शत्रु असा अर्थ संभवतो.

हें सूक्त वैदिक कर्म करणाऱ्या लोकांत प्रसिद्ध आहे. तें 'गृहयज्ञ', 'गर्भाधान', 'शांतिसूक्त', 'तुळापुरुष', 'दुष्टजननशांति', 'मूळशांति', 'अंत्येष्टी'मधील 'एकादशाह-वृषोत्सर्ग' यांत वगैरे म्हणण्याची चाल पडली आहे.

२. रोग बरे करणें हें रुद्राचें काम आहे याविषयीं सू. ४३ मं. १ पहा.

या मंत्रावरून प्राचीन म्हणजे कृतयुगांतील ऋषि शंभर वर्षें मनुष्य जगलें म्ह-

श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥ ३ ॥

श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसाम् । वज्रबाहो इति वज्रऽबाहो ।
पर्षि । नः । पारम् । अंहसः । स्वस्ति । विश्वाः । अभिऽईतीः । रपसः । युयोधि ॥ ३ ॥

मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥

मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती ।
उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमम् । त्वा । भिषजाम् । शृणोमि ॥ ४ ॥

---

## भाषायाम्.

३, हे रुद्र, [ त्वं ] श्रिया (=ऐश्वर्येण) जातस्य श्रेष्ठोसि (=जगतः प्रशस्यतमो भवसि) । हे वज्रबाहो, [ त्वं ] तवसां तवस्तमः (=प्रबलानां मध्ये प्रबलतमो ) [भवसि] नः (=अस्मान् ) अंहसः पारम् (=पापस्यापरतीरं) स्वस्ति (=क्षेमेण) पार्षि (=नय ) । रपसः ( =व्याधेर् ) विश्वा अभीतीः (=सर्वाण्यभिगमनानि ) युयोधि (=अस्मत् पृथकुरु=अपगमय ) ॥

४. हे रुद्र, त्वा (=त्वां) नमोभिः (=नमनैर् ) मा चुक्रुधाम (=क्रुद्धं मा कार्ष्म)। हे वृषभ ( =स्वामिन् ), दुष्टुती (=दुःस्तुत्या ) मा [ क्रोधयाम ] । सहूती ( =अन्यैर्देवैः सह सामान्येनाह्वानेन) मा [ क्रोधयाम ] । नो वीरान् (=अस्माकं पुत्रपौत्रादीन् रोगेण भूमौ पतितान् ) भेषजेभिरुदर्पय ( =औषधैरुन्नमय=नीरोगान् कुरु ) । त्वा ( =त्वां ) भिषजां भिषक्तमं शृणोमि (=त्वं वैद्यानां मध्ये श्रेष्ठो वैद्यो भवसीति शृणोमि ) ॥

३. हे रुद्रा, तूं यशानें जगतांत श्रेष्ठ आहेस; हे वज्रबाहू [रुद्रा], तूं बळवंतांत अत्यंत बळवान् [ आहेस ]. तूं आम्हांला सुखरूपपणानें पापाच्या पार ने. तूं व्याधीची सर्व प्राप्ति नाहींशी कर.

४. हे रुद्रा, तूं आमच्या नमनांनीं क्रुद्ध होऊं नको; हे प्रभू, आमच्या वाईट स्तुतीनें अथवा [दुसऱ्या देवां]बरोबर आह्वान केलें म्हणून तूं क्रुद्ध होऊं नको. तूं औषधांनीं आमच्या वीरांला उठीव. तूं वैद्यांमध्यें श्रेष्ठ वैद्य [ आहेस ] असें मी ऐकिलें आहे.

3. Thou, o Rudra, art the greatest in creation with [ thy ] glory, the mightiest of the mighty, o wielder of the thunderbolt! Take us safely to the end of sin. Take away all approaches of disease.

4. May we never offend thee, o Rudra, with [ our ] adorations, [ may we ] never [ offend thee ] with a bad praise, never with a joint invocation. Raise up our heroes with medicaments. I have heard thee [ to be ] the best physician of physicians.

---

णजे मोठें भाग्य झालें असें मानीत ही गोष्ट स्पष्ट होते, दहा.हजार वर्षे जगणें शक्य आहे असें त्यांस वाटत नसे.

**ह॒वीम॑भि॒र्हव॑ते॒ यो ह॒विर्भि॒रव॒ स्तोमे॑भी रु॒द्रं दि॑षीय ।**
**ऋ॒दू॒दरः॑ सु॒हवो॒ मा नो॑ अ॒स्यै ब॒भ्रुः सु॒शिप्रो॑ रीरधन्म॒नायै॑ ॥५॥१६**

ह॒वीम॑ऽभिः । हव॑ते । यः । ह॒विःऽभिः॑ । अव॑ । स्तोमे॑भिः । रु॒द्रम् । दि॒षी॒य॒ ।
ऋ॒दू॒दरः॑ । सु॒ऽहवः॑ । मा । न॒ः । अ॒स्यै । ब॒भ्रुः । सु॒ऽशिप्रः॑ । री॒र॒ध॒त् । म॒नायै॑ ॥ ५ ॥ १६ ॥

**उन्मा॑ ममन्द वृ॒ष॒भो म॒रुत्वा॒न्त्वक्षी॑यसा॒ वय॑सा॒ नाध॑मानम् ।**
**घृणी॑व छा॒याम॑र॒पा अ॑शी॒या वि॑वासेयं रु॒द्रस्य॑ सु॒म्नम् ॥ ६ ॥**

उत् । मा॒ । म॒म॒न्द॒ । वृ॒ष॒भः । म॒रुत्वा॑न् । त्वक्षी॑यसा । वय॑सा । नाध॑-मानम् ।
घृणि॑ऽइव । छा॒याम् । अ॒र॒पाः । अ॒शी॒य॒ । आ । वि॒वा॒से॒य॒म् । रु॒द्रस्य॑ । सु॒म्नम् ॥ ६ ॥

---

## भाषायाम्.

५. यो [ रुद्रो ] हवीमभिर्हविर्भिः ( =आह्वानैर्हव्यैश्च ) हवते ( =हूयते ) [ तं ] रुद्रं स्तोमेभिः अव दिषीय ( =स्तोत्रैरपगतक्रोधं करवाणि) । ऋदूदरः ( =? मृदूदरः =कोमलान्तःकरणः ) सुहवः ( =शोभनाह्वानः=सुलभाह्वानो ) बभ्रुः (=बभ्रुवर्णः ) सुशिप्रः ( =सुवदनः ) [ स ] नः ( =अस्मान् ) अस्यै मनायै ( =तस्यै मनायै=तस्मै स्वकीयाय प्रसिद्धाय क्रोधाय ) मा रीरधत् ( =मा वशं नयतु ) ॥

६. वृषभः ( =प्रभुर् ) मरुत्वान् ( =मरुद्भिर्युक्तो ) [ रुद्रो ] नाधमानं ( =नाथमानं याचमानं ) मा (=मां) त्वक्षीयसा वयसा ( =दीप्तेनान्नेन ) उन्ममन्द ( =उत्कर्षेण तर्पयतु ) । घृणीव छायां [ रुद्रस्य सुम्नम् ] अरपा अशीय ( =यथा कश्चित् सूर्यकिरणसंतप्तश्छायां प्रविशति तथा रुद्रदत्तं सुखम् अहं प्रविश्य अपापो भवेयम् ) । रुद्रस्य सुम्नम् आ विवासेयं ( =रुद्रदत्तं सुखं परिचरणेन प्राप्नुयाम् ) ॥

घृणीवेति पदं घृणिरिवेत्यर्थकम् ॥

५. ज्या रुद्राला आह्वानांनीं आणि हवींनीं आळवितात [ तो ] रुद्र माझ्या स्तोत्रांनीं शांत होओ. कोमळ अंतःकरणाचा, आह्वानांनीं सहज प्राप्त होणारा, बभ्रु वर्णाचा, [ आणि ] सुवदन असा जो रुद्र तो आम्हांला आपल्या क्रोधाच्या स्वाधीन न करो.

5. May I pacify with hymns Rudra who is invoked with calls [ and ] offerings. May he of the kind heart, easy to be invoked, of tawny colour, of beautiful features, never surrender us to his wrath.

६. मरुद्युक्त [रुद्र] प्रभु मज याचकाला महाप्रबळ अन्नाच्या योगें तृप्त करो. संतापलेला [ मनुष्य ] जसा छायेप्रत पोंहचून निर्दुःख होतो तसा मी छायेप्रत पावेन असें होओ. रुद्राच्या प्रसादाला माझी उपासना मिळवील असें होओ.

6. May the Lord [ Rudra ], accompanied by the Maruts, gratify me the supplicant with splendid food. May I harmless enter [ into Rudra's blessing] even as one [ enters ] the shade [ when ] oppressed by the sun : may I gain Rudra's blessing by worshipping.

---

५. 'कोमळ अंतःकरणाचा '=' ऋदूदरः' हा शब्द कठिण आहे. परंतु दुसरे ठिकाणीं आला आहे तीं ठिकाणें पाहून अर्थ केला आहे. आम्हांला वाटतें कीं तो बरोबर आहे.

'आपल्या क्रोधाच्या स्वाधीन' इ. 'असै मनायै.' अक्षरशः 'त्या क्रोधाच्या स्वाधीन.' म्हणजे तो जो रुद्राचा प्रसिद्ध क्रोध त्याच्या स्वाधीन.

क्व१ स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥ ७ ॥

क्व । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः ।
जलाषः ।
अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ । चक्षमीथाः ॥७॥

प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥

प्र । बभ्रवे । वृषभाय । श्वितीचे । महः । महीम् । सुऽस्तुतिम् । ई-
रयामि ।
नमस्य । कल्मलीकिनम् । नमःऽभिः । गृणीमसि । त्वेषम् । रुद्रस्य ।
नाम ॥ ८ ॥

---

## भाषायाम्.

७. हे रुद्र, यो भेषजः (=औषधकृत्) जलाषः (=सुखकरश्) [ च ] अस्ति स्य ते मृळयाकुर्हस्तः (=स तव सुखयिता हस्तः ) क्व [ भवति ] ? दैव्यस्य रपसः (=देवकृतस्य दुःखस्य ) अपभर्ता ( =अपगमयिता ) [ त्वं ] मा (=मां) हे वृषभ (=प्रभो), नु ( =क्षिप्रम् ) अभि चक्षमीथाः ( =अभिक्षमस्व ) ॥

८. बभ्रवे ( =बभ्रुवर्णाय ) श्वितीचे ( =शुचये ) वृषभाय (=प्रभवे रुद्राय ) महो महीं सुस्तुतिं प्रेरयामि (=महतोपि यन्महत्तरं स्तोत्रं तादृशं तदर्थमुच्चारयामि ) । [ हे मित्र ], कल्मलीकिनं ( =ज्वलन्तं=दीप्तिमन्तं ) [ रुद्रं ] नमोभिर्नमस्य (=स्तोत्रैः पूजय ) । रुद्रस्य त्वेषं नाम ( =दीप्तिमन्तं प्रतापं ) गृणीमसि ( =स्तुमः ) ॥

७. हे रुद्रा, तुझा तो सुख देणारा हस्त कोठें [आहे] कीं जो बरें करणारा [आणि] सुख देणारा होय? हे प्रभू, दैविक दुःखाचा अपहर्ता असा तूं मजवर कृपा कर.

८. पीत वर्णाचा [आणि] सोज्वळ असा जो प्रभु [रुद्र] त्याप्रीत्यर्थ मी मोठ्यापेक्षांहि मोठी स्तुति उच्चारितों. दीप्तिमान् [रुद्रा]ला तूं स्तवनांनीं पूज. रुद्राचा तेजस्वी प्रताप आम्ही वर्णितों.

7. Where, o Rudra, is that beneficent hand of thine which cures. and which comforts? Remover of celestial distress do thou, o lord, be gracious unto me.

8. I send forth a hymn greater than a great one for the tawny and resplendent lord. Worship, [o friend], the burning Rudra with supplications. We praise the mighty valour of Rudra.

७. 'बरें करणारा आणि सुख देणारा हस्त'='भेषजो जलाषः.' म्हणजे औषध देऊन बरें करून त्याच्या योगें सुख होई असें करणारा.

'दैविक दुःखाचा'='दैव्यस्य रपसः'. जें दुःख अथवा प्रसंग देवांच्या क्रोधामुळें आला असेल त्याला नाहींसा करणारा.

**स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।**
**ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥ ९ ॥**

स्थिरेभिः । अङ्गैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः । पिपिशे । हिरण्यैः ।
ईशानात् । अस्य । भुवनस्य । भूरेः । न । वै । ऊं इति । योषत् । रुद्रात् । असुर्यम् ॥ ९ ॥

**अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।**
**अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति १०।१७**

अर्हन् । बिभर्षि । सायकानि । धन्व । अर्हन् । निष्कम् । यजतम् । विश्वऽरूपम् ।
अर्हन् । इदम् । दयसे । विश्वम् । अभ्वम् । न । वै । ओजीयः । रुद्र । त्वत् । अस्ति ॥ १० ॥ १७ ॥

---

## भाषायाम्.

९. पुरुरूपः ( =बहुभी रूपैरुपेत ) उग्रः ( =प्रबलो ) बभ्रुः (=बभ्रुवर्णो) [रुद्रः] स्थिरेभिः ( =दृढतरैः ) शुक्रेभिः ( =दीप्तिमद्भिर् ) हिरण्यैः ( =हिरण्मयैर् ) अङ्गैः (=अवयवैः) पिपिशे ( =दीप्यते ) । अस्य भुवनस्य भूरेरीशानात् ( =अस्य जगतो महतः प्रभो ) रुद्रात् असुर्यं न वा उ योषत् (=बलं नैव पृथग्भवतु विनश्यतु) ॥

वृत्रादीनां हननाय व्याधीनां चापहरणाय सदैव प्रबलोऽस्त्विति भावः ॥

१०. [हे रुद्र], अर्हन् सायकानि धन्व बिभर्षि ( =स्थाने धनुर्बाणांश्च धारयसि)। अर्हन् यजतं विश्वरूपं निष्कं [ बिभर्षि ] ( =स्थाने पूजनीयं बहुविधरूपयुक्तं हारं धारयसि ) । अर्हन्निदम् अभ्वं विश्वं दयसे ( =स्थाने इदमपि विस्तीर्णं जगद्रक्षसि)। हे रुद्र, त्वत् न वा ओजीयः अस्ति ( =त्वद् बलवत्तरं किमपि नास्त्येव ) ॥

९. बहुरूप, पीत वर्णाचा [आणि] बलवान् [असा जो रुद्र तो] दृढ, दीप्तिमान् [आणि] सुवर्णमय अंगांनीं शोभतो. या जगताचा महा ईश्वर जो रुद्र त्यापासून बळ कधींहि दूर न होओ.

१०. [हे रुद्रा], तूं जो बाण आणि धनुष्य धारण करितोस त्याला तूं योग्य आहेस. तूं जो पूजनीय [आणि] बहुरूप हार घालितोस त्याला तूं योग्य आहेस. तूं जो हें विस्तीर्ण विश्व रक्षितोस त्याला तूं योग्य आहेस. हे रुद्रा, तुजपेक्षां अधिक प्रबल कांहीं नाहीं.

9. Of many forms, mighty, of tawny colour, he shines with limbs solid, bright and golden. From Rudra, the great lord of this world may power never be taken away.

10. Deservedly dost thou carry a bow [ and ]. arrows. Deservedly [ dost thou wear ] the adorable [ and ] omniform necklace. Deservedly dost thou protect this vast universe. Nothing, indeed, is mightier than thee, o Rudra.

९. 'बळ त्यापासून कधींहि दूर न होओ'='न वा उ योषत् रुद्रात् असुर्यम्.' म्ह० राक्षसादिकांस मारावयास आणि रोग नाहींसे करावयास वगैरे जें बळ पाहिजे तें रुद्राच्या अंगीं सदैव राहो.

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् । उपऽहत्नुम् । उग्रम् ।
मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते । अस्मत् । नि । वपन्तु । सेनाः ॥ ११ ॥

कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥

कुमारः । चित् । पितरम् । वन्दमानम् । प्रति । ननाम । रुद्र । उपऽयन्तम् ।
भूरेः । दातारम् । सत्ऽपतिम् । गृणीषे । स्तुतः । त्वम् । भेषजा । रासि । अस्मे इति ॥ १२ ॥

---

## भाषायाम्.

११. [ हे स्तोतः ], श्रुतं (=प्रख्यातं) गर्तसदं (=रथे निषण्णं) युवानम् (=अजरं) मृगं न भीमं (=सिंहमिव भयंकरम्) उपहत्नुं (=शत्रुघातकम्) उग्रं (=बलवन्तम्) [ एतादृशं रुद्रं ] स्तुहि । हे रुद्र, स्तवानः (=स्तुतः सन्) जरित्रे मृळ (=स्तोत्रे सुखकरो भव) । ते (=तव) सेना अस्मदन्यं नि वपन्तु(=निघ्नन्तु)॥
सेना बाणा इति पाश्चात्याः ॥

१२. हे रुद्र, उपयन्तं वन्दमानं पितरं कुमारश्चित् (=उपेत्य आयुष्मान् भव सौम्येति स्तुवन्तं पितरं यथा पुत्रो नमति तथा) [ त्वां ] प्रति ननाम (=अहं प्रतिनतोस्मि) । भूरेर्दातारं (=प्रभूतस्य धनस्य दातारं) सत्पतिं (=सतां प्रभुं) [ त्वां ] गृणीषे (=अहं स्तौमि) । स्तुतस्त्वम् अस्मे (=अस्मभ्यं) भेषजा रासि (=औषधानि देहि) ॥

११. कीर्तिमान्, रथावर बसलेला, अजर, सिंहाप्रमाणें भयंकर, शत्रुघातक आणि बलवान् अशा रुद्राला स्तव. हे रुद्रा, स्तविला होत्साता तूं स्तोत्यावर कृपा कर. तुझ्या सेना आम्हांहून दुसऱ्यांना मारोत.

११. Praise him who is renowned, who sits high in his chariot, who is ever young, awful like the lion, destructive, mighty. Being praised, do thou favour the poet, o Rudra! Let thy armies cut down one other than us.

१२. जवळ येऊन कुरवाळणाऱ्या पित्याला जसा पुत्र [ नमन करितो त्या]प्रमाणें हे रुद्रा, मी तुला नमन केलें आहे. महा संपत्ति देणाऱ्या तुज सत्पतीला मी स्तवीत आहें. स्तविला होत्साता तूं आम्हांस औषधें दे.

12. I have bowed to thee, o Rudra, even as a son [ bows ] to his father who comes to him and blesses him. I praise [thee] the giver of much and the lord of the good. Being praised do thou give healing remedies unto us.

**या वो॑ भे॒ष॒जा म॑रुतः॒ शुची॑नि॒ या शंत॑मा वृषणो॒ या म॑यो॒भु ।**
**यानि॒ मनु॒रवृ॑णीता पि॒ता न॒स्ता शं च॒ योश्च॑ रु॒द्रस्य॑ वश्मि ॥ १३ ॥**

या । वः॒ । भे॒ष॒जा । म॒रु॒तः॒ । शुची॑नि । या । शम्ऽत॑मा । वृ॒ष॒णः॒ । या । म॒यः॒ऽभु ।
यानि॑ । मनुः॑ । अवृ॑णीत । पि॒ता । नः॒ । ता । शम् । च॒ । योः । च॒ । रु॒द्रस्य॑ । व॒श्मि॒ ॥ १३ ॥

**परि॑ णो हे॒ती रु॒द्रस्य॑ वृ॒ज्याः परि॑ त्वे॒षस्य॑ दुर्म॒तिर्म॒ही गा॑त् ।**
**अव॑ स्थि॒रा म॒घव॑द्भ्यस्तनुष्व॒ मीढ्व॑स्तो॒काय॒ तन॑याय मृळ ॥ १४ ॥**

परि॑ । नः॒ । हे॒तिः । रु॒द्रस्य॑ । वृ॒ज्याः॒ । परि॑ । त्वे॒षस्य॑ । दुः॒ऽम॒तिः । म॒ही । गा॒त् ।
अव॑ । स्थि॒रा । म॒घव॑त्ऽभ्यः । त॒नु॒ष्व॒ । मीढ्वः॑ । तो॒काय॑ । तन॑याय । मृ॒ळ॒ ॥ १४ ॥

---

## भाषायाम्.

१३. हे मरुतः, वः (=युष्मदीयानि) या भेषजा शुचीनि (=यानि भेषजानि आरोग्यहेतुभूतान्यौषधानि निर्मलानि सन्ति) या शंतमा (=यानि शंतमानि आरोग्यकरतमानि) [अपि च] हे वृषणः (=वीर्यवन्तो मरुतः), या मयोभु (=यानि मयोभूनि=सुखकर्तॄणि) यानि नः पिता मनुः (=अस्माकं मनुष्याणां मनुर्नाम पिता) अवृणीत (=अकामयत) ता रुद्रस्य शं च योश्च (=सुखं च कल्याणं च सुखरूपाणि कल्याणरूपाणि च) [भेषजानि] वश्मि (=अहं कामये)॥

१४. रुद्रस्य हेतिः (=आयुधं) नः परि वृज्याः (=अस्मान् परि वर्जयतु=अस्मदुपरि मा पततु)। त्वेषस्य (=दीप्तस्य) [रुद्रस्य] मही दुर्मतिः (=महती क्रोधात्मिका मतिः) परि गात् (=अस्मान्वर्जयित्वान्यत्र गच्छतु)। हे मीढ्वः (=दाता रुद्र), मघवद्भ्यः (=हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः) स्थिरा (=स्थिराणि त्वदीयानि धनूंषि) अव तनुष्व (=अवततज्यानि कुरु=शिथिलज्यानि कुरु=मा बाणान् प्रक्षिप)। तोकाय तनयाय मृळ (=अस्मत्पुत्राय तत्पुत्राय च सुखकरो भव)॥

१३. हे मरुतांनो. जीं तुमचीं निर्मळ औषधें, जीं अत्यंत सुख देणारीं, [आणि] हे प्रबळ मरुत् हो, जीं बरें करणारीं, जीं आमचा पिता मनु वरिता झाला, तीं रुद्राचीं सुखदायक आणि कल्याणकारक औषधें मी याचितों.

१४. रुद्राचें शस्त्र आम्हांला सोडो, तेजस्वी [रुद्रा]चा महा क्रोध अन्यत्र जाओ. हे महोदार [रुद्रा], तूं हविर्दात्या उपासकांसाठीं [तुझीं] धनुष्यें सैल कर, [ आणि ] आमच्या मुलांवर आणि नातवंडांवर कृपा कर.

13. Those medicaments of yours, o Maruts, which [ are ] pure, which, o brave ones, [ are ] most healing, which [ are ] givers of comfort, those which our father Manu prayed for, those healing and comforting [ medicaments ] of Rudra I desire.

14. May the missile of Rudra pass by us, may the great wrath of resplendent [ Rudra ] go elsewhere.—Slacken; o bounteous [Rudra], the radius of thy bow for the sacrificing worshippers and be gracious to [ our ] children and to [ our ] grandchildren.

---

१३. 'आमचा पिता मनु'=' नः पिता मनुः'. म्हणजे मनुष्याचा मूळपुरुष मनु या नांवाचा सू. ३६ मं. १० पहा.

एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि ।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः ॥ १५ ॥१८॥

एव । बभ्रो इति । वृषभ । चेकितान । यथा । देव । न । हृणीषे । न । हंसि ।
हवनऽश्रुत् । नः । रुद्र । इह । बोधि । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १५ ॥ १८ ॥

## भाषायाम्.

१५. हे बभ्रो (=बभ्रुवर्ण) चेकितान (=सर्वज्ञ) देव (=दीप्तिमन्) [रुद्र], यथा [त्वं] न हृणीषे न हंसि [च] एव [त्वां स्तुतवन्तः स्मः] (=त्वं यथा न क्रुध्यसि न च हंसि तथा त्वामेवं प्रकारेण स्तुतवन्तः स्मः) । इह (=एवं सति) हे रुद्र, [त्वं] नो हवनश्रुत् बोधि (=आह्वानश्रोता भव) । [तथा सति] सुवीराः (=शोभनवीर्योपेतपुत्रपौत्रैः सहिता वयं) विदथे (=यज्ञे) बृहत् (=महत् स्तोत्रं) वदेम (=ब्रूयाम) ॥

## सूक्तम् ३४–२२५.

गृत्समद ऋषिः । मरुतो देवता । अन्त्या त्रिष्टुप् शिष्टा जगत्यः ॥

धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।
अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अप गा अवृण्वत ॥ १ ॥

धाराऽवराः । मरुतः । धृष्णुऽओजसः । मृगाः । न । भीमाः । तविषीभिः । अर्चिनः ।
अग्नयः । न । शुशुचानाः । ऋजीषिणः । भृमिम् । धमन्तः । अप । गाः । अवृण्वत ॥ १ ॥

## भाषायाम्.

१. धारावराः (=वृष्टिधारया सर्वमावृण्वन्तो) धृष्ण्वोजसः (=शत्रूणां धर्षकेण बलेन युक्ता) मृगा न भीमाः (=सिंहा इव भयंकरास्) तविषीभिरर्चिनः (=तेजो-

१५. हे बभ्रुवर्णा, सर्वज्ञ, देदीप्यमान प्रभू [ रुद्रा], तूं रागावूं नयेस [ आणि ] तूं मारूं नयेस म्हणून [आम्हीं तुला स्तविलें आहे]. तर हे रुद्रा, तूं आमचें आह्वान ऐकणारा हो. चांगल्या वीरांनीं युक्त होत्साते आम्ही यज्ञांत तुझी मोठी कीर्ति गाऊं असें कर.

15. Thus [ have we praised thee ], o tawny-coloured lord, o all-knowing [and] resplendent one, that thou mayest not be angry, that thou mayest not kill. Be, therefore, o Rudra, the hearer of our invocation. [ And ] may we, accompanied by brave sons, chant great praises [ to thee ] in the sacrifice.

---

१५. या सूक्ताविषयीं शौनक असें म्हणतात कीं, "कृष्ण पक्षांतील चतुर्दशी दिवशीं उपोषण करून 'आ ते' हें जें रुद्राविषयींचें सूक्त त्यांतील एकेक ऋचा म्हणून प्रतिऋचेला शुचिर्भूत आणि वाग्यत होऊन चरु अर्पण करावा; पूर्वी तुपाच्या आहुति देऊन आणि शंकराची उपासना करून जें हवीचें शेष राहील तें भक्षून राहावें म्हणजे तसें करणारा पौर्णिमेच्या दिवशीं मृत्यूला जिंकून रोगांपासून मुक्त होईल." अशा प्रकारांनींच बहुतकरून या सूक्ताचें महत्त्व वाढलें आहे. अजूनहि शौनकाची उक्ति जागृत आहे.

---

## सूक्त ३४-२२५.

ऋषि—गृत्समद. देवता—मरुत्. वृत्त—शेवटची ऋचा त्रिष्टुभ्; उरलेलें सर्व सूक्त जगती वृत्ताचें.

१. वृष्टिधारेनें सर्व आच्छादणारे, शत्रूचा उपमर्द करणाऱ्या बळानें युक्त, सिंहांप्रमाणें भयंकर, तेजांनीं देदीप्यमान, अग्नीप्रमाणें तेजःपुञ्ज, [ आणि ] सोमपान करणारे मरुत् वादळ फुंकून गाई मोकळ्या करिते झाले.

## HYMN 34-225.

To the *Maruts*. By *Gritsamada*. Metre—*Jagatî*, except in the last verse where it is *Trishtubh*.

1. The Maruts blew the whirlwind and set the cows free,—they who cover [ everything ] with rain, who are endowed with overpowering strength, terrific like lions, [ and ] brilliant with splendors, glowing like fires, drinkers of the soma.

द्यावो न स्तृभिश्चितयन्त खादिनो व्य१भ्रिया न द्युतयन्त वृष्टयः ।
रुद्रो यद्वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि २

द्यावः । न । स्तृऽभिः । चितयन्त । खादिनः । वि । अभ्रियाः । न । द्युतयन्त । वृष्टयः ।
रुद्रः । यत् । वः । मरुतः । रुक्मऽवक्षसः । वृषा । अजनि । पृश्न्याः । शुक्रे । ऊधनि ॥ २ ॥

भिर्दीप्ता ) 'अग्नयो न शुशुचानाः ( =अग्नय इव ज्वलन्तः ) ऋजीषिणः ( =अपगतसारसोमयुक्ताः=सोमयुक्ता ) मरुतो भूमिं धमन्तः ( =भ्रममाणं मेघं प्रेरयन्तः सन्तो ) गा अपावृण्वत ( =अब्रूपा गा उदघाटयन् ) ॥

## भाषायाम्.

२. हे रुक्मवक्षसः ( =आभरणं वक्षसि येषां तादृशा ) मरुतः, यद् ( =यदा ) वृषा ( =वीर्यवान् ) रुद्रो वः ( =युष्मान् ) पृश्न्याः ( =पृश्निनाम्न्या युष्माकं मातुः ) शुक्रे ऊधनि ( =दीप्ते योनौ ) अजनि ( =उदपादयत् ) [ तदा ] खादिनः ( =कटकयुक्ता यूयं ) द्यावः स्तृभिर्न (=शुभ्रदेशा नक्षत्रैरिव ) चितयन्त ( =अशोभध्वम् ) [ अपि च ] वृष्टयः ( =? वृष्टिकर्तारो यूयम् ) अभ्रिया न (=विद्युत इव ) द्युतयन्त ( =जगत्प्राकाशयत ) ॥

१. 'सोमपान करणारे '=' ऋजीषिणः'. सू. ६४ मं.१२ आणि टीप पहा.

'गाई.' म्हणजे मेघोदकरूप गाई. त्यांची मोकळीक वृत्राच्या प्रतिबंधापासून बहुतकरून इंद्र करितो; पण केव्हां केव्हां मरुतांसारिखे दुसरेहि देव करितात.

२. हे साभरणवक्ष मरुतांनो, जेव्हां वीर्यवान् रुद्र तुम्हांला पृश्नी-च्या शुद्ध पोटीं उत्पन्न करिता झाला, तेव्हां तुम्ही द्युलोक जसा नक्षत्रांनीं शोभतो तसे आपल्या कड्यांनीं शोभलां, वृष्टिकारक तुम्ही विजांप्रमाणें [ जगताला ] प्रकाशविते झालां.

2. When, o ye Maruts wearing golden ornaments on your breasts, puissant Rudra begot you in the brilliant womb of Pris'ni, you adorned with the rings shone even as does the firmament with the stars, you the makers of rain illuminated [ the world ] like lightnings.

२. रुद्र हा मरुतांचा पिता आणि पृश्नि ही त्यांची आई होय याविषयीं सू. ३८ मं. ४,७ पहा.

रुद्रापासून मरुतांची उत्पत्ति पृश्नीच्या उदरीं झाली तेव्हां मरुत् कसे शोभले तें यांत सांगितलें आहे.

'साभरणवक्ष'=' रुक्मवक्षसः'. सू. १६६ मं. १० पहा.

'कड्यांनीं.' मरुत् आपल्या अंगावर कडीं ( खादयः ) घालितात याविषयी सू. १६६ मं. ९ आणि टीप पहा.

उक्षन्ते अश्वाँ अत्याँ इवाजिषु नदस्य कर्णैस्तुरयन्त आशुभिः ।
हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ३

उक्षन्ते । अश्वान् । अत्यान्ऽइव । आजिषु । नदस्य । कर्णैः । तुरयन्ते । आशुऽभिः ।
हिरण्यऽशिप्राः । मरुतः । दविध्वतः । पृक्षम् । याथ । पृषतीभिः । सऽमन्यवः ॥ ३ ॥

पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः ।
पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥ ४ ॥

पृक्षे । ता । विश्वा । भुवना । ववक्षिरे । मित्राय । वा । सदम् । आ । जीरऽदानवः ।
पृषत्ऽअश्वासः । अनवभ्रऽराधसः । ऋजिप्यासः । न । वयुनेषु । धूःऽसदः ॥ ४ ॥

---

## भाषायाम्.

३. आजिषु अत्यान् इव [मरुतः] अश्वान् उक्षन्ते (=यथा पणधावनेषु शीघ्रगामिनोश्वान् उक्षितान् बलवतः कुर्वन्ति=वेगवतः कुर्वन्ति तथा मरुतः स्वकीयान् अश्वान् बलवतः कुर्वन्ति) । नदस्य कर्णैराशुभिः (=महतो नादस्य करणैः कर्तृभिः शीघ्रैश्च) तुरयन्ते (=वर्षणार्थं त्वरितं गच्छन्ति) । हे हिरण्यशिप्राः (=सुवर्णमयशिरस्त्राणा) मरुतः, हे समन्यवः (=समानबुद्धयः), दविध्वतः (=सर्वेषां कम्पयितारो यूयं) पृषतीभिः (=श्वेतबिन्द्वङ्किताभिर्मृगीभिः) पृक्षं याथ (=हविरन्नवन्तं यजमानं गच्छथ) ॥

४. सदम् आ (=सदैव) जीरदानवः (=क्षिप्रदाना) [मरुतो] मित्राय वा पृक्षे (=मित्रायेव हविर्दत्तवते यजमानाय) ता विश्वा भुवना (=तानि विश्वानि भुवनानि=सर्वमिदं जगत्) ववक्षिरे (=प्रवृद्धं चक्रुः=सुखकरैः पदार्थैर्युक्तं कुर्वन्ति) । पृषदश्वासः (=श्वेतबिन्दुयुक्ता मृग्य एवाश्वा येषां ते) अनवभ्रराधसः (=भ्रंशनरहितं धनं येषां ते) वयुनेषु ऋजिप्यासो धूर्षदो न (=यज्ञकर्मसु धुरंधरा ऋजुगामिनोश्वा इव गच्छन्तो) [मरुतो विश्वानि भुवनानि ववक्षिरे] ॥

३. [ मरुत् ] शर्यतींत चालैला [ चेतविल्या ]प्रमाणें [ आपल्या ] अश्वांला चेतवितात. महानाद करणारे जे त्यांचे चपळ घोडे त्यांहीं ते धांवतात. हे सुवर्णशिरस्त्र मरुतांनो, हे समानबुद्धीचे [ मरुत हो ], सर्वांला कांपवून टाकणारे असे जे तुम्ही ते तुमच्या पांढरे ठिबके असलेल्या हरिणींनीं हविर्दात्याप्रत जात असतां.

3. [ The Maruts ] inspirit their horses as people inspirit their chargers in races. They rush with steeds that make the roar. You, o Maruts, o you who wear golden crowns, o you who possess a common intellect, you go to the sacrificer with your spotted deer, you the violent shakers.

४. सदैव शीघ्रधन [ असे मरुत् ] एकाद्या मित्रासाठीं केल्याप्रमाणे हविर्दात्या यजमानासाठीं या सर्व विश्वाचा उत्कर्ष करितात. श्वेतबिंदुहरिणाश्व, अक्षय संपत्ति देणारे [ आणि ] कर्ममध्यें सरळ धांवणाऱ्या धुरंधर अश्वांसारिखे मरुत् [ सकळ विश्वाचा उत्कर्ष करितात ].

4. The [ Maruts ], ever the givers of quick wealth, prosper this world for the sacrificer as for a friend,—they who have the spotted deer for their horses, who give eternal gifts, [ and ] who run straight to the rites like horses joined to the pole.

---

३. मरुतांविषयीं सूक्तें आलीं म्हणजे तीं कठिण असतात असा जो नियम त्याप्रमाणें हें सूक्त ही कठिण आहे. हा मंत्रहि त्यांत कठिण आहे. याच्या पूर्वार्धात 'उक्षन्ते' आणि 'नदस्य कर्णैः' या शब्दांचा अर्थ निर्विवाद अशा रीतीनें सांगवत नाहीं; त्यामुळेंच ही ऋचा कठिण आहे. तात्पर्य असें दिसतें: 'शर्यतींत घोडे जसे धांववितात त्याप्रमाणें मरुत् आपल्या घोड्यांस मोठे ( म्ह. बळवान् ) करून हांकितात. ते गर्जना करणाऱ्या घोड्यांनीं धांवतात आणि यजमानांकडेस जात असतात.'

'चेतवितात'=' उक्षन्ते.' 'वक्ष' धातूचा अर्थ वाढणें असा वेदांत होतो त्याचें हें रूप आहे असें समजल्याशिवाय उपाय नाहीं. त्यापासून, 'वाढविणें' 'बळवान् करणें,' 'वेगवान् करणें.'

इन्धन्वभिर्धेनुभी रप्शदूधभिरध्वस्मभिः पथिभिर्भ्राजदृष्टयः ।
आ हंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः ॥ ५ ॥ १९ ॥

इन्धन्वऽभिः । धेनुऽभिः । रप्शदूधऽभिः । अध्वस्मऽभिः । पथिऽभिः । भ्राजत्ऽऋष्टयः ।
आ । हंसासः । न । स्वसराणि । गन्तन । मधोः । मदाय । मरुतः । सऽमन्यवः ॥ ५ ॥ १९ ॥

आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि गन्तन ।
अश्वामिव पिप्यत धेनुमूधनि कर्ता धियं जरित्रे वाजपेशसम् ॥६॥

आ । नः । ब्रह्माणि । मरुतः । सऽमन्यवः । नराम् । न । शंसः । सवनानि । गन्तन ।
अश्वाम्ऽइव । पिप्यत । धेनुम् । ऊधनि । कर्त । धियम् । जरित्रे । वाजऽपेशसम् ॥ ६ ॥

---

## भाषायाम्.

५. हे भ्राजदृष्टयः (=दीप्यमानायुधाः) समन्यवः (=समानमनस्का) मरुतः, इन्धन्वभिः (=समिन्धनवतीभिस्तेजस्विनीभी) रप्शदूधभिः (=महोधस्काभिर्) धेनुभिः (=गोभिर्युक्ताः सन्तस्तादृशीर्धेनूरुपासकेभ्यो दातव्या गृहीत्वा यूयम्) अध्वस्मभिः पथिभिः (=ध्वंसनरहितैर्मार्गैः) हंसासः स्वसराणि न (=हंसा यथा स्वावासस्थानानि गच्छन्ति तथा) मधोर्मदाय आ गन्तन (=मधुरस्य सोमस्य हर्षाय आगच्छत=आगच्छत आगम्य च सोमपानेन हृष्टा भवत) ॥

६. हे समन्यवः (=समानमनस्का) मरुतः, नरां न शंसः (=नृभिर्मनुष्यैः शंसनीयः स्तवनीय इन्द्रो यथागच्छति तथा) नः ब्रह्माणि (=स्तोत्राणि) सवनानि (=सोमाभिषवणानि=अभिषुतान् सोमान्) आ गन्तन (=आगच्छत) । अश्वामिव धेनुम् (=? अस्माकं गाम्) ऊधनि पिप्यत (=पीनावयवां कुरुत) । जरित्रे (=स्तोतुरर्थे च) धियं (=तत्कृतं कर्म) वाजपेशसं कर्ता (=अन्नरूपम्=अन्नाङ्कितम्=अन्नयुक्तं कुरुत) ॥

५. हे देदीप्यमान भाले धारण करणारे [ मरुत् ] हो, तुम्ही तेजःपुंज, [ आणि ] मोठ्या कांसांच्या धेनु घेऊन पतनरहित मार्गांनीं, हंस आपल्या घरट्यांप्रत धांवल्याप्रमाणें, हे समानमनस्क मरुतांनो, मधुर सोमरसाच्या हर्षासाठीं इकडे या.

5. O Maruts, who carry burning spears, come ye, for the exhilaration of the sweet soma along safe roads even as flamingoes [ run ] to their nests, bringing with you flaming cows of great udders, o ye Maruts who have one common mind.

६. हे समानमनस्क मरुतांनो, मनुष्यांनीं स्तवनीय [ इन्द्र ] जसा [ येतो ] तसे तुम्ही आमच्या स्तोत्रांप्रत [ आणि ] सोमांप्रत या. घोडीप्रमाणें गाईला तिचे कांसेंत पुष्ट करा. स्तोत्रकर्त्या उपासकाची उपासना अन्नसंपन्न करा.

6. O Maruts who have one common mind, do you come to our hymns and libations like [ Indra ] the praised of men. Fatten the cow in the udder like a mare, [ and ] make the worship of the poet rich in food.

---

' सुवर्णशिरस्त्र '=' हिरण्यशिप्राः ' म्हणजे ज्यांला सोन्याचे मुकुट आहेत असे.

' कांपविणारे '='दविध्वतः'. सू. ८७ मं. ३ आणि टीप पहा.

' पांढरे ठिबके असलेल्या हरिणी=' पृषतीभिः'. सू. ३७ मं. २ आणि टीप पहा.

४. ' कर्मांमध्यें सरळ धांवणाऱ्या अश्वांसारिखे '=ऋजिप्यासो न वयुनेषु धूर्षदः'. म्हणजे रथास जोडिलेले घोडे जसे सरळ येतात त्याप्रमाणें यजमानाचें यजनकर्म होत असेल तेथें सरळ आणि त्वरित धांवत येणारे.

---

५. ' धेनु घेऊन '=' धेनुभिः.' म्हणजे आम्हां उपासकांस देण्याकरितां तेजस्वी आणि मोठ्या कासेचा ( पुष्कळ दूध देणाऱ्या ) गाई घेऊन ये.'

' समानमनस्क '=' समन्यवः'. म्हणजे सर्व मिळून एकाच मनानें जणुं वागणारे.

' सोमरसाच्या हर्षासाठीं'. म्हणजे सोमरस पिऊन हर्ष पावावा म्हणून.

६. ' नरांनीं स्तवनीय [ इन्द्र ]'=

तं नो॑ दात मरुतो वा॒जिनं॒ रथ॑ आपा॒नं ब्रह्म॑ चि॒तय॑द्दि॒वेदि॑वे ।
इषं॑ स्तो॒तृभ्यो॑ वृ॒जने॑षु का॒रवे॑ स॒निं मे॒धामरि॑ष्टं दु॒ष्टरं॒ सहः॑ ॥ ७ ॥

तम् । नः॒ । दा॒त॒ । म॒रु॒तः॒ । वा॒जिन॑म् । रथे॑ । आ॒पा॒नम् । ब्रह्म॑ । चि॒तय॑त् । दि॒वेऽदि॑वे ।
इष॑म् । स्तो॒तृऽभ्यः॑ । वृ॒जने॑षु । का॒रवे॑ । स॒निम् । मे॒धाम् । अरि॑ष्टम् दु॒स्तर॑म् । सहः॑ ॥ ७ ॥

यद्यु॒ञ्जते॑ म॒रुतो॑ रु॒क्मव॑क्षसोऽश्वा॒न्रथे॑षु भ॒ग आ सु॒दान॑वः ।
धे॒नुर्न शिश्वे॒ स्वस॑रेषु पिन्व॒ते जना॑य रा॒तह॑विषे म॒हीमिष॑म् ॥ ८ ॥

यत् । यु॒ञ्जते॑ । म॒रुतः॑ । रु॒क्मऽव॑क्षसः । अश्वा॑न् । रथे॑षु । भगे॑ । आ सु॒ऽदान॑वः ।
धे॒नुः । न । शिश्वे॑ । स्वस॑रेषु । पि॒न्व॒ते । जना॑य । रा॒तऽह॑विषे । म॒हीम् । इष॑म् ॥ ८ ॥

---

## भाषायाम्.

७. हे मरुतः, नः (=अस्मभ्यं) रथे तं वाजिनं (=रथे योज्यं प्रसिद्धबलम् अश्वं) दात (=प्रयच्छत) [तथा] दिवेदिवे (=प्रतिदिनं) [देवान्] आपानं चितयत् (=प्राप्नुवत् प्रख्यापयच्च) ब्रह्म (=स्तोत्रं) [शिक्षयत] । स्तोतृभ्य इषं (=स्तोतृभ्य ओजोन्नं) वृजनेषु (=संग्रामेषु च) कारवे (=कवये) सनिं (=धनं) मेधां (=युद्धप्रज्ञानम्) अरिष्टं दुस्तरं सहः (=अहिंसितम् अजेतव्यं च बलं) [दात=प्रयच्छत]॥

८. रुक्मवक्षसः (=रोचमानाभरणोरस्काः) सुदानवः (=शोभनदाना) मरुतो यत् (=यदा) भगे आ रथेषु (=? भगभूतेषु रथेषु=भाग्ययुक्तेषु रथेषु) अश्वान् युञ्जते [तदा] स्वसरेषु शिश्वे धेनुर्न (=गोष्ठेषु प्रस्नुतस्तनी धेनुर्यथा शिशवे वत्साय पिन्वते पयःपूर्णा भवति दुग्धं ददाति तथा) रातहविषे जनाय (=दत्तहविष्काय यजमानाय) महीम् इषं (=महतीमिषं विपुलमन्नं) पिन्वते (=सिञ्चन्ति=दुग्धधारावत् प्रयच्छन्ति)॥

७. हे मरुतांनो, तुम्ही आम्हांस रथाला वारू द्या. [ आणि ] नित्य देवांप्रत पोंहचणारें आणि [ त्यांची ] ख्याति करणारें स्तोत्र [शिकवा]. स्तोत्यांला अन्न आणि उपासकांला युद्धांत धन, बुद्धि आणि अप्रतिहत आणि अजिंक्य बळ [ द्या ].

८. ज्यांच्या वक्षःस्थळीं अलंकार आहेत आणि जे चांगल्या देणग्या देणारे, ते मरुत् जेव्हां आपल्या सौभाग्य-रथाला घोडे जोडितात तेव्हां एकादी धेनु जशी गोठ्यांमध्यें वत्सासाठीं पान्हा सोडिते त्याप्रमाणें ते हवि देत असणाऱ्या जनासाठीं विपुळ अन्नाचा पान्हा सोडितात.

7. Give, o Maruts, to us the mighty horse for our chariot and [ teach us ] a hymn that shall daily reach and praise [the gods]. [ Give ] food to the praisers, [and] to the worshipper [ give ] in battles wealth, wisdom and strength irresistible and unconquerable.

8. When the Maruts, who wear ornaments on their breasts and who bestow excellent gifts, join their horses to their blissful chariots, they give copious food to the man who has offered an oblation, even as a milch-cow gives milk to her calf in the cow-fold.

' नरां शंसः'. नराशंसः म्हणजे अग्नि किंवा इन्द्र होईल. परंतु मरुतांचा संबंध इन्द्राशीं विशेष असल्यामुळें, इंद्र येईल आणि तुम्हीहि या, अशा अर्थासाठीं इंद्र असा अर्थ करावा.

यो नो मरुतो वृकताति मर्त्यो रिपुर्दधे वसवो रक्षता रिषः ।
वर्तयत तपुषा चक्रियाभि तमव रुद्रा अशसो हन्तना वधः ॥९॥

यः । नः । मरुतः । वृकऽताति । मर्त्यः । रिपुः । दधे । वसवः । रक्षत । रिषः ।
वर्तयत । तपुषा । चक्रिया । अभि । तम् । अव । रुद्राः । अशसः । हन्तन । वधरिति ॥ ९ ॥

चित्रं तद्वो मरुतो याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः ।
यद्वा निदे नवमानस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः॥१०॥२०॥

चित्रम् । तत् । वः । मरुतः । याम । चेकिते । पृश्न्याः । यत् । ऊधः । अपि । आपयः । दुहुः ।
यत् । वा । निदे । नवमानस्य । रुद्रियाः । त्रितम् । जराय । जुरताम् । अदाभ्याः ॥ १० ॥ २० ॥

---

## भाषायाम्.

९. हे वसवः (=साधवो) मरुतः, यो मर्त्यो नो वृकताति (=अस्माकं धनानाम् अपहर्ता सन्) रिपुर्दधे (=शत्रुः क्रियते भवति) [तस्य] रिषः (=हिंसायाः) [अस्मान्] रक्षत। तं तपुषा चक्रिया (=तापयित्र्या ऋष्ट्याख्यया शक्त्या) अभि वर्तयत (=अस्मत्पराङ्मुखं निवर्तयत)। हे रुद्राः (=रुद्रस्य पुत्रा मरुतः), अशसः (=निन्दकस्य जनस्य) वधः (=घातकम् आयुधम्) अव हन्तन (=हत्वा अपक्षिपत) ॥

१०. हे मरुतः, यत् (=यदा) आपयः (=बन्धवो भवन्तः) पृश्न्या ऊधः (=अन्तरिक्षरूपाया गोरूधः) अपि दुहुः (=दुहन्ति) [तथा] यत् (=यदा) वा हे रुद्रियाः (=रुद्रपुत्रा मरुतः), नवमानस्य (=युष्माकं स्तोतुः) निदे (=निन्दकाय) निन्दकस्य शासनार्थं [याथ] [यदा च] हे अदाभ्याः (=अहिंस्या मरुतः), त्रितं जुरतां जराय (=त्रितनामर्षिं हिंसतां हिंसनाय) [याथ] तत् (=तदानीं) वो याम चित्रं चेकिते (=युष्माकं गमनं मनोहरं दृश्यते) ॥

९. हे कल्याणकारक मरुत् हो, जो मर्त्य आमचा अपहारकर्ता होऊन शत्रु होतो त्या घातकापासून तुम्ही आमचें संरक्षण करा. त्याला तुमच्या जाज्वल्य चक्रानें मागें फिरवा; हे रुद्रपुत्रांनो, निंदकाचें मारक शस्त्र तोडून खालीं पाडा.

१०. हे मरुतांनो, तुम्ही सर्व बंधु मिळून जेव्हां पृश्नीच्या कासेचें दोहन करितां आणि जेव्हां हे रुद्रपुत्र हो, तुमच्या स्तोत्याची निंदा करणाऱ्या जनाच्या शासनाला जातां, आणि हे अहिंस्य [मरुतांनो ], त्रिताला उपद्रव करणाऱ्या लोकांच्या शासनासाठीं जेव्हां तुम्ही जातां, तेव्हां तुमचें गमन रमणीय दिसतें

9. O beneficent Maruts, preserve us from that maleficent mortal, who robbing us becomes our enemy. Turn him back with your burning disc; cut down, o sons of Rudra, the deadly weapon of the reviler.

10. Your march, o Maruts, appears wonderful when you brothers milk the udder of Pris'ni, when, o sons of Rudra, [ you go forth ] for punishing ] the reviler of your praiser, [and when ], o irresistible ones, [ you go ] for punishing the oppressors of Trita.

---

९. 'निंदकाचें मारक शस्त्र तोडून खालीं पाडा.'='अशसः वधः अव हन्तन.' म्हणजे देवांची आणि देवभक्तांची स्तुति न करितां उलटी त्यांची निंदा करणारे जे देवशत्रु, त्यांणीं आम्हांला मारण्यासाठीं शस्त्रप्रहार केला असतां तें शस्त्र आम्हांवर पडूं देऊं नका, तर मध्येंच त्याचे तुकडे करून फेकून द्या.

१०. 'पृश्नीचे कासेचें दोहन करितां'='पृश्न्या ऊधः अपि दुहुः'. म्हणजे सर्व मरुत् हेच जे बंधु ते मिळून अंतरिक्षरूप गाईला दोहतात; म्ह० मेघवृष्टि करितात इतकेंच तात्पर्य. पृश्नीविषयीं सू. २३ मं. १० पहा.

'रुद्रपुत्र.' सू. ३८ मं. ४,७ पहा.

'त्रित' हा कोणी एक ऋषि होय असें सायण म्हणतात.

**तान्वो महो मरुत एवयाव्नो विष्णोरेषस्य प्रभृथे हवामहे ।**
**हिरण्यवर्णान्ककुहान्यतस्रुचो ब्रह्मण्यन्तः शंस्यं राध ईमहे ॥११॥**

तान् । वः । महः । मरुतः । एवऽयाव्नः । विष्णोः । एषस्य । प्रऽभृथे । हवामहे ।
हिरण्यऽवर्णान् । ककुहान् । यतऽस्रुचः । ब्रह्मण्यन्तः । शंस्यम् । राधः । ईमहे ॥ ११ ॥

**ते दशग्वाः प्रथमा यज्ञमूहिरे ते नो हिन्वन्तूषसो व्युष्टिषु ।**
**उषा न रामीररुणैरपोर्णुते महो ज्योतिषा शुचता गोअर्णसा॥१२॥**

ते । दशऽग्वाः । प्रथमाः । यज्ञम् । ऊहिरे । ते । नः । हिन्वन्तु । उषसः । विऽउष्टिषु ।
उषाः । न । रामीः । अरुणैः । अप । ऊर्णुते । महः । ज्योतिषा । शुचता । गोऽअर्णसा ॥ १२ ॥

---

## भाषायाम्.

११. विष्णोः ( =व्यापकस्य ) एषस्य ( =गमनवतो=वेगवतः ) [ सोमस्य ] प्रभृथे ( =प्रार्पणे सति=तादृशं सोमम् अर्पयित्वा ) महः ( =महत ) एवयाव्नः ( =अश्वगामिनस् ) तान् वः ( =तानि युष्मान् ) मरुतो [ वयं ] हवामहे ( =आह्वयामः ) । यतस्रुचः ( =आहुतित्यागायोद्यतस्रुचो ) ब्रह्मण्यन्तः ( =स्तोत्रमिच्छन्तः स्तुवन्तो ) [ वयं ] हिरण्यवर्णान् ( =सुवर्णवर्णान् ) ककुहान् ( =श्रेष्ठान् ) [ युष्मान् ] शंस्यं राधः ( =प्रशंसनीयं धनम् ) ईमहे ( =याचामहे ) ॥

१२. ते दशग्वाः (=दशग्वरूपाः ) प्रथमाः (=सर्वेभ्योपि पूर्वा ) यज्ञमूहिरे (=यज्ञमवहन्=इन्द्रादिभ्यः प्रार्पयन् ) । ते नः ( =अस्मान् ) उषसो व्युष्टिषु ( =प्रभातेषु सत्सु ) हिन्वन्तु ( =प्रेरयन्तु यज्ञस्य स्तोत्रस्य च करणे ) । उषा अरुणैः ( =आरोचमानैः स्वकीयैस्तेजोभी ) रामीर्न अप ऊर्णुते ( =रात्रीर्यथा अपसारयति तथा ) महः ( =महान्तो ) [ मरुतः ] शुचता ( =दीप्यमानेन ) गोअर्णसा ( =गोसंपन्नेन ) ज्योतिषा [ रात्रीरपावृण्वन्ति ] ॥

११. तर तुम्ही जे महान् [आणि] अश्वगामी मरुत्, त्यांस मी व्यापक आणि वेगवान् [सोम] अर्पण करून बोलावितों. सुवर्णवर्णाचे [आणि] श्रेष्ठ असे जे तुम्ही, त्या तुम्हांस आम्ही आहुति देऊन आणि स्तोत्र म्हणून वर्णनीय धनाची प्रार्थना करितों.

11. We, therefore, invoke you Maruts who are great and swift with horses, after offering the penetrating and quick [soma]. With libations and with prayers we pray for praiseworthy wealth [you] who are gold-coloured and high.

१२. ते दशग्व [होत्साते] प्रथम यज्ञ अर्पण करिते झाले. ते उषःकाळीं आम्हांस प्रेरणा करोत. महा [मरुत्], उषा जशी आरक्तवर्ण तेजांनीं रात्रींला नाहींशी करिते त्याप्रमाणे, प्रकाशमान आणि गोसंपन्न तेजानें [रात्रीला नाहींशी करितात].

12. They [as] Das'agvas were the first to bring sacrifice. May they inspire us on the daily dawning of Ushas. They the great ones [remove] the nights with brilliant [and] cow-giving light, even as Ushas removes them with [her] tawny rays.

---

१२. 'मरुतांनींच सर्वां अगोदर यज्ञ केला. ते प्रतिदिनीं उषःकाळीं येऊन उषेप्रमाणें रात्रींचा नाश करोत, आणि आम्हांला यज्ञाची आणि स्तोत्राची प्रेरणा करोत.'

'दशग्व [होत्साते].' सायण म्हणतात कीं मरुतांनीं दशग्वांचें म्हणजे अंगिरसांचें रूप घेऊन सर्वां अगोदर यज्ञ केला. 'दशग्व' याविषयीं सू. ३३ मं. ६ पहा.

'गोसंपन्न'=' गोअर्णसा'. म्हणजे जेणेंकरून सूर्यकांतिरूप गाई मिळतात अशा. प्रकाश पडला म्हणजे अंधकार नाहींसा होतो हें उघडच होय.

ते क्षोणीभिररुणेभिर्नाञ्जिभी रुद्रा ऋतस्य सदनेषु वावृधुः ।
निमेघमाना अत्येन पाजसा सुश्चन्द्रं वर्णं दधिरे सुपेशसम् ॥१३॥

ते । क्षोणीभिः । अरुणेभिः । न । अञ्जिऽभिः । रुद्राः । ऋतस्य । सदनेषु । ववृधुः ।
निऽमेघमानाः । अत्येन । पाजसा । सुऽचन्द्रम् । वर्णम् । दधिरे । सुऽपेशसम् ॥ १३ ॥

ताँ इयानो महि वरूथमूतय उप घेदेना नमसा गृणीमसि ।
त्रितो न यान्पञ्च होतॄनभिष्टय आववर्तदवरांश्चक्रियावसे ॥१४॥

तान् । इयानः । महि । वरूथम् । ऊतये । उप । घ । इत् । एना । नमसा । गृणीमसि ।
त्रितः । न । यान् । पञ्च । होतॄन् । अभिष्टये । आऽववर्तत् । अवरान् । चक्रिया । अवसे ॥ १४ ॥

---

## भाषायाम्.

१३. ते रुद्राः (=रुद्रपुत्राः.) क्षोणीभिः (="वीणाख्यैर्वीणाविशेषैः") अरुणैर्न अञ्जिभिः (=आरक्तवर्णैरलंकारैश्च) [सहिताः सन्त] ऋतस्य सदनेषु (=सत्यस्य स्थानेषु "उदकस्य निवासभूतेषु मेघेषु") वावृधुः (=वर्धन्ते)। निमेघमानाः (=नितरामुदकवृष्टिं कुर्वन्तो) [मरुतः] अत्येन (=शीघ्रं व्याप्नुवता) पाजसा (=आत्मीयेन बलेन) सुश्चन्द्रं (=शोभनाह्लादनं) सुपेशसं (=शोभनरूपं) वर्णं (=कान्तिं) दधिरे (=धारयन्ति)॥

१४. अवरान् (=श्रेष्ठान्) यान् पञ्च होतॄन् (=पञ्चसंख्याकान् कांश्चिद् होतृकान्) त्रितो न (=त्रितनामा महर्षिरपि) अभिष्टये अवसे (=अभिलषितसिद्ध्यर्थं रक्षणाय च) चक्रिया आववर्तत् (=चक्रायुधेन सहितान् स्वात्माभिमुखम् आवर्तयत्) तान् [पञ्च होतॄन्] महि वरूथं (=महद्रक्षणम्) इयानः (=इयाना याचमाना) [वयम्] ऊतये (=रक्षणार्थम्) एना नमसा (=अनेन स्तोत्रेण) उप घ इद् गृणीमसि (=उपेत्यैव स्तुमः)॥

नेति पदम् अप्यर्थकम् । पादपूरणं वा ।

१३. ते रुद्राचे पुत्र वाद्यांच्या योगानें आणि आरक्त अलंकारांच्या योगानें सत्याच्या स्थानीं वाढत असतात. सततगामी सामर्थ्यानें व्याप्त असे जे मरुत् ते आल्हादकारक आणि सुंदर कांति धारण करितात.

१४. ज्या श्रेष्ठ पांच होत्यांला साहाय्यासाठीं आणि रक्षणासाठीं त्रित आपणाकडे चक्रासहित वळविता झाला, त्यांजला मोठ्या संरक्षणाची प्रार्थना करून आम्ही संरक्षणासाठीं या स्तोत्रानें स्तवितों.

13. They, the sons of Rudra, have prospered in the Home of Truth, with [ their ] harps and [ their ] yellow ornaments. They, suffused with all penetrating power, put on an agreeable and beautiful appearance.

14. We pray those five excellent invokers for great protection and praise them with this hymn for support, the five invokers whom Trita turned towards himself with their disc for protection and support.

---

१३. हाहि मंत्र कठिण आहे. यांत 'क्षोणि' शब्दाचा अर्थ 'वाद्यें' असा आम्हीं सायणास अनुसरून केला आहे. पण त्या अर्थाला सायणभाष्याशिवाय दुसरें प्रमाण ऋग्वेदांत मिळत नाहीं. वर केलेल्या अर्थाच्या अभिप्रायासाठीं, मरुत् आपल्या वाद्यांसह आणि अलंकारांसह अंतरिक्षांत वाढत असतात, म्हणजे अंतरिक्षांमधील जे देव, त्यांत मरुत् आपल्या वाद्यासहित आणि अलंकारांसहित श्रेष्ठ होत, आणि ते मेघवृष्टि करून सर्वत्र पसरणाऱ्या तेजानें तेथें कांतियुक्त शोभा धारण करितात असें समजलें पाहिजे.

'सत्याच्या स्थानीं'=ऋतस्य सदनेषु'. याचा जो अंतरिक्ष असा अर्थ केला आहे, तो सायणांस अनुसरून केला आहे. ऋत शब्दाचा सायणांनीं पुष्कळ ठिकाणीं केलेला 'उदक' असा जो अर्थ तो पाश्चात्य विद्वानांनीं घेतलेला नाहीं तरी वस्तुतः संभवतो खरा, याविषयीं सू. १०५ मं. १२ आणि टीप पहा.

१४. हाहि मंत्र कठिण आहे. शब्दाकडेस पाहिलें असतां ज्या पांच होत्यांला त्रित नांवाच्या महर्षीनें पूर्वी आपल्या रक्षणासाठीं बोलाविलें, त्यांची मी रक्षणासाठीं प्रार्थना करून त्यांला या स्तोत्रानें स्तवितों असा अर्थ उघड दिसतो. परंतु यांत सांगितलेले पांच होते म्हणजे कोण तें स्पष्ट समजत नाहीं. त्रित म्हणून एक अतिप्राचीन महर्षि होता असें सायणाचार्य म्हणतात तें खरें असेल.

**यया॑ र॒ध्रं पा॒रय॒थात्यंहो॒ यया॑ नि॒दो मु॒ञ्चथ॑ वन्दि॒तार॑म् ।**
**अ॒र्वाची॑ सा म॑रुतो॒ या व॑ ऊ॒तिरो॒ षु वा॒श्रेव॑ सुम॒तिर्जि॑गातु ॥**

**॥ १५ ॥ २१ ॥**

यया॑ । र॒ध्रम् । पा॒रय॑थ । अति॑ । अंहः॑ । यया॑ । नि॒दः । मु॒ञ्चथ॑ । व॒न्दि॒तार॑म् ।

अ॒र्वाची॑ । सा । म॒रु॒तः॒ । या । वः॒ । ऊ॒तिः । ओ इति॑ । सु । वा॒श्राऽइ॑व । सु॒ऽम॒तिः । जि॒गा॒तु ॥ १५ ॥ २१ ॥

### भाषायाम्.

१५. हे मरुतः, यया [ ऊत्या ] रध्रम् (=आराधकं यजमानम् ) अंहः अति पारयथ ( =पापम् अतिक्रमयथ ) यया [ च ] वन्दितारं ( =स्तोतारं ) निदो मुञ्चथ ( =निन्दकात् मोचयथ ) [ एतादृशी ] या व ऊतिः ( =युष्माकं रक्षणबुद्धिः ) सा अर्वाची ( =अस्मदभिमुखा ) [ भवतु ] । [ युष्माकं ] सुमतिः ( =अनुग्रहात्मिका शोभना मतिर् ) वाश्रेव ( =हम्भारवं कुर्वती धेनुरिव ) ओ सु जिगातु ( =त्वरया अस्मानागच्छतु ) ॥

---

## सूक्तम् ३५–२२६.

गृत्समद ऋषिः । अपां नपाद्देवता । त्रिष्टुप् छन्दः ॥

**उपे॑मसृक्षि वाज॒युर्व॑च॒स्यां चनो॑ दधीत ना॒द्यो गिरो॑ मे ।**
**अ॒पां नपा॑दाशु॒हेमा॑ कु॒वित्स सु॒पेश॑सस्करति॒ जोषि॑ष॒द्धि ॥ १ ॥**

उप॑ । ई॒म् । अ॒सृ॒क्षि॒ । वा॒ज॒ऽयुः । व॒च॒स्याम् । चनः॑ । द॒धी॒त॒ । ना॒द्यः । गिरः॑ । मे॒ ।

अ॒पाम् । नपा॑त् । आ॒शु॒ऽहेमा॑ । कु॒वित् । सः । सु॒ऽपेश॑सः । क॒र॒ति॒ । जोषि॑षत् । हि ॥ १ ॥

---

### भाषायाम्.

१. वाजयुः (=धनेच्छुरहम् ) ईं वचस्याम् ( =इमां स्तुतिम् ) उप असृक्षि (=उपेत्य उच्चारयामि ) । नाद्यः (=नदीनां पुत्रः ) [ स ] गिरो मे ( =स्तोतुर्मम ) चनो

१५. हे मरुतांनो, जिच्या योगानें तुम्ही उपासकाला संकटाच्या पार पाडितां [आणि] जिच्या योगानें स्तोत्याला निंदकापासून मुक्त करितां, ती तुमची कृपा इकडे येओ. तुमची ममता हंबारणाऱ्या गाईप्रमाणें धांवत इकडे येओ.

15. May your grace come hither, o Maruts, with which you carry the worshipper safe over danger, with which you free your servant from the reviler. May your benevolence run hither like a cow lowing [ for her calf ].

## सूक्त ३५–२२६.

ऋषि—गृत्समद. देवता—उदकांचा पुत्र, या नांवाचा वैद्युत अग्नि. वृत्त—त्रिष्टुभ्.

## Hymn 35–226.

To *Apâm Napât* ( i. e., the son of the heavenly waters, Agni as lightning ). By *Gritsamada*. Metre—*Trishtubh*.

१. धनाची वांछा करून मी ही स्तुति उच्चारीत आहें. [ तर ] तो नदीपुत्र मज स्तोत्याला अन्न देओ. तो उदकांचा वेगवान् पुत्र [ आमच्या स्तुति ] बहुत सुंदर करो, कारण त्याला [ स्तुति ] अत्यंत आवडत असतात.

1. Desirous of wealth I proclaim this praise. May the Son of the Rivers grant food to me the poet. May he the impetuous son of the waters make [ our prayers ] exceedingly beautiful. For he very much loves [ praises ].

१. 'नदीपुत्र'='नाद्यः' म्ह० अपां नपात् अथवा मेघोदकांचा पुत्र जो विद्युद्रूप अग्नि, तो. हें सूक्त वीज ह्याच जो उदकपुत्र, त्याजविषयीं आहे. विद्युद्रूप अग्नीला 'अपां नपात्' अथवा उदकांचा पुत्र म्हणणें हें साहजिक आहे. कारण कीं तो मेघोदकांच्या पोटीं अंतरिक्षांत जणुं उत्पन्न झाल्याप्रमाणें दिसतो.

अपां नपात् याविषयीं सू. १४३ मं. १ आणि टीप पहा.

इमं स्वस्मै हृद आ सुतष्टं मन्त्रं वोचेम कुविदस्य वेदत् ।
अपां नपादसुर्यस्य मह्ना विश्वान्यर्यो भुवना जजान ॥ २ ॥

इमम् । सु । अस्मै । हृदः । आ । सुऽतष्टम् । मन्त्रम् । वोचेम । कु-
वित् । अस्य । वेदत् ।
अपाम् । नपात् । असुर्यस्य । मह्ना । विश्वानि । अर्यः । भुवना ।
जजान ॥ २ ॥

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥ ३ ॥

सम् । अन्याः । यन्ति । उप । यन्ति । अन्याः । समानम् । ऊर्वम् ।
नद्यः । पृणन्ति ।
तम् । ऊं इति । शुचिम् । शुचयः । दीदिऽवांसम् । अपाम् । नपा-
तम् । परि । तस्थुः । आपः ॥ ३ ॥

---

दधीत( =अन्नं विदधीत=प्रयच्छतु ) । स आशुहेमा ( =वेगवान् ) अपां नपात् कु-
वित् ( =बहु ) [ अस्माकं स्तुतीः ] सुपेशसः करति ( =सुरूपाः करोतु ) । जोषि-
षत् हि ( =यस्मात्कारणात् स स्तुतीरतिशयेन सेवते )॥

---

## भाषायाम्.

२. हृद आ सुतष्टं ( =हृदयात् समीचीनं रचितं=महतादरेण निर्मितम् ) इमं मन्त्रं ( =स्तोत्रम् ) अस्मै सु वोचेम ( =तस्मा अपां नप्त्रे सुष्ठु यथा तथा वदेम )। [ स ] कुवित् अस्य वेदत् ( =बहु तस्य स्तोत्रस्य जानीयात्=बहुमन्येत ) । अर्यः ( =स्वामी ) अपां नपात् ( =उदकपुत्रो वैद्युतोऽग्निर् ) असुर्यस्य मह्ना ( =बलस्य महत्त्वेन ) विश्वानि भुवना ( =भुवनानि=भूतजातानि ) जजान ( =जनयामास ) ॥

३. [ तम् ] अन्याः सं यन्ति ( =काश्चिन्नद्यः संगता भूत्वा गच्छन्ति ) अन्याः ( =काश्चिच्च ) उप यन्ति ( =भिन्ना भूत्वा गच्छन्ति ) । समानम् ( =एकम् ) ऊर्वम् ( =अपां नपातं नाम जलसमूहं ) नद्यः पृणन्ति (=पूरयन्ति ) । तम् उ दीदिवांसम् ( =अतिशयेन दीप्तिमन्तं ) शुचिं ( =शुद्धम् ) अपां नपातं शुचयः ( =शुद्धा ) आपः ( =आपो देव्यः ) परि तस्थुः ( =पर्युपासते ) ॥

२. हा अंतःकरणापासून रचिलेला मंत्र त्याजकरितां आपण उत्तम रीतीनें म्हणूं. त्याला तो बहुमान्य करून घेओ. उदकांचा श्रेष्ठ पुत्र [ आपल्या ] बळाच्या महत्त्वेंकरून सकळ जगताला उत्पन्न करिता झाला.

३. एकच जो डोह त्याप्रत कितीएक नद्या मिळून जातात, कितीएक निरनिराळ्या जातात— त्याला नद्या भरून टाकितात. त्या तेजस्वी [ आणि ] अत्यंत दीप्तिमंताला तेजस्वी आपो[देवी वेष्टितात ], उदकांच्या पुत्राला आपो-[ देवी ] वेष्टितात.

2. Let us chant in honour of him this praise well composed from the heart. May he accept it well. The excellent son of the waters created all beings with the greatness of [ his ] power.

3. Some [of the rivers] go to him together, some go separately: the rivers fill the common reservoir. The bright waters stand round him the son of the waters, who is bright [and] resplendent.

---

३. 'अपां नपात् हाच जो एक उदकांचा डोह त्यांत कितीएक नद्या एकत्र मिळून जातात, व कितीएक निरनिराळ्या जाऊन मिळतात. तेजस्वी अपां नपाताला तेजस्वी आपो देवी भजतात.'

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।
स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥४॥

तम् । अस्मेराः । युवतयः । युवानम् । मर्मृज्यमानाः । परि । यन्ति । आपः ।

सः । शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मे इति । दीदाय । अनिध्मः । घृतऽनिर्निक् । अप्ऽसु ॥ ४ ॥

अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् ।
कृता इवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥५॥२२

अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषन्ति । अन्नम् ।

कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः । पीयूषम् । धयति । पूर्वऽसूनाम् ॥ ५ ॥ २२ ॥

---

## भाषायाम्.

४. युवानं तं युवतय आपः अस्मेराः (=अस्मयमाना) मर्मृज्यमानाः (=अतिशयेन अलंकुर्वाणाः सत्यः) परि यन्ति (=परिचरन्ति) । अनिध्मः (=काष्ठरहितो) घृतनिर्णिक् (=दीप्तरूपः) स शुक्रेभिः शिक्वभिः (=दीप्तैस्तेजोभिर्) अस्मे रेवत् (=अस्मदर्थं सधनं यथा तथा) अप्सु दीदाय (=आन्तरिक्षेषूदकेषु=अन्तरिक्षप्रदेशेषु दीप्यताम्) ॥

५. अव्यथ्याय (=अव्यथनाय=दुःखरहिताय) देवाय (=दीप्तिमते) अस्मै (=तस्मा अपां नपाते) तिस्रो देवीर्नारीः (=दीप्तिमत्यो युवतयः="इळासरस्वतीभारत्याख्या") अन्नं दिधिषन्ति (=धातुमिच्छन्ति=दित्सन्ति) । [ता] अप्सु (=अन्तरिक्षे) कृता इव (=?) उप प्रसर्स्रे हि (=तस्य समीपे प्रकर्षेण गच्छन्ति) । स पूर्वसूनां (=पुरातनानां=मातॄणां तासां) पीयूषं धयति (=रसं पिबति) ॥

कृता इवेति अनवगतार्थम् । न सायणेनापि व्याख्यातम् । अत्र कृताशब्दः कृधातूत्पन्नकृतशब्दादन्यत् पदं स्यात् कृता इत्याद्युदात्तत्वात् ॥

४. तो जो तरुण त्याजप्रत तरुण आपो [ देवी ] न हसतां जातात आणि अलंकृत करितात. तो काष्ठरहित आणि दीप्त रूपाचा [ देव ] उदकांमध्यें चकचकीत तेजांनीं प्रकाशो, कीं जेणेंकरून आम्हांस संपत्ति मिळेल.

4. Him the youthful one, the youthful Waters without smiling surround and vie in adorning. May he, having no fuel and of brilliant form, shine in the waters with his brilliant splendors, so that we may obtain wealth.

५. दुःखरहित आणि देदीप्यमान जो हा त्याला तिघी देदीप्यमान नारी अन्न देण्यास तयार असतात. अंतरिक्षामध्यें त्या पुढें सरसावतात. तो त्या आदिमातांचा रस पितो.

5. To him the happy and resplendent one, the three resplendent females are anxious to give nourishment. They run forward in the firmament. He drinks the nectar of the ancient mothers.

---

४. 'वीज हाच जो अंतरिक्षांतील तरुण अग्नि, त्याला तरुण आपो देवी (म्ह० अंतरिक्षांत मेघोदकरूपांनीं असणारीं उदकें ) सेवितात. त्या अग्नीला लांकडें नसतांहि त्याचें तेज मोठें असतें. तो प्रकाशो आणि आम्हांस धन देओ.'

५. 'अंतरिक्षांत अपां नपात् या बाळाला तीन पुरातन माता खाऊं घालितात. ( सायणाप्रमाणें तीन माता म्ह० इळा, सरस्वती आणि भारती या देवी). तो त्यांचें दुध पितो' असा या मंत्राचा भावार्थ आहे.

यांत 'कृता इव' अशी जी उपमा आहे ती अगदी दुर्बोध आहे. 'कृता'-शब्द येथें आद्युदात्त असल्यामुळें 'कृ' धातूपासून 'कृत' ( म्ह० झालेलें ) असें हें रूप नसेल. अर्थ समजत नसल्यामुळें 'कृता इव' या शब्दांचा अर्थ आम्हीं भाषांतरांत केला नाहीं.

अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः संपृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि ॥ ६ ॥
अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिषः । सम्ऽपृचः । पाहि । सूरीन् ।
आमासु । पूर्षु । परः । अप्रऽमृष्यम् । न । अरातयः । वि । नशन् । न । अनृतानि ॥ ६ ॥

स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्वं१ तर्वसुदेयाय विधते वि भाति ॥ ७ ॥
स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधाम् । पीपाय । सुऽभु । अन्नम् । अत्ति ।
सः । अपाम् । नपात् । ऊर्जयन् । अप्ऽसु । अन्तः । वसुऽदेयाय । विधते । वि । भाति ॥ ७ ॥

## भाषायाम्.

६. अत्र (=तत्र=अपांनपात्संज्ञके देवे) अश्वस्य जनिम (=अश्वस्य सूर्यरूपस्य जन्म) [भवति] । अस्य च स्वः (=अस्य च तेजोमयस्य जगतो) [जन्म तत्र भवति] ।—हे अपां नपात्, सूरीन् (=अस्मान् कवीन्) द्रुहः (=द्रोग्धू) रिषः (=हिंसकस्य) संपृचः (=संपर्कात्) पाहि । आमासु पूर्षु (=मेघोदकेषु) परः (=परस्तात्=अतिदूरे मेघोदकेषु) अप्रमृष्यम् (=अप्रधृष्यमाणं) [तम्] अरातयो न विनशन् (=शत्रवः प्राप्तुं न शक्नुवन्ति) न अनृतानि [विनशन्] (=मायावीनि रक्षांसि च न प्राप्नुयुः) ॥

७. यस्य सुदुघा धेनुः (=सुखेन दोग्धव्या मध्यमवाग्रूपा गौः) स्वे आ दमे (=अन्तरिक्षलक्षणे स्वकीये अपांनपात्संबन्धिनि गृहे) स्वधां पीपाय (=वृष्ट्युदकरूपं गोरसं वर्धयति प्रयच्छति) [यश्च] सुभु अन्नम् अत्ति (=सुष्ठुभूतम् उत्तमम् अन्नं भक्षयति) सः अपां नपात् ऊर्जयन् (=बलं कुर्वन्=प्रबलः सन्) अप्सु अन्तः (=अन्तरिक्षे) विधते वसुदेयाय (=परिचरते धनं दातुं) वि भाति (=विशेषेण प्रकाशते) ॥

६. तेथें अश्वाचें जन्म [होतें] आणि या तेजःपुंजाचें [जन्म होतें]. [हे अपां नपात्], दुष्टाच्या [आणि] हिंसकाच्या संपर्कापासून तूं आम्हां स्तोत्यांला संभाळ. मेघमंडळापलीकडे ज्याला कोणी हटकूं शकत नाहीं अशा [अपां नपाता]प्रत शत्रु पोंहचणार नाहींत, मायावी [राक्षस]हि पोंहचणार नाहींत.

6. Here is the birth of the horse and of this effulgence. Preserve the poets from the touch of the hater [and] of the harmer. Neither the enemies nor the untruthful [demons] can reach him who is unharmable beyond the clouds.

७. ज्याची सुदुघा धेनु त्याच्या घरींच पायस देते, [आणि जो] उत्तम अन्न भक्षितो, तो बळवान् उदकपुत्र उपासकाला संपत्ति देण्यासाठीं अंतरिक्षांत प्रकाशतो.

7. That mighty son of the waters, whose easily milked cow yields the fat offering in his own house, [and who] consumes excellent food, shines in the firmament to give wealth to the worshipper.

---

६. अपां नपात् मेघमंडळाच्याहि वर असल्यामुळें तेथें त्याला कोणापासूनच उपद्रव होत नाहीं. तर तो आमचें रक्षण नास्तिकांपासून आणि राक्षसांपासून करो.

'घोड्याचें जन्म'='अश्वस्य जनिम.' म्हणजे हा जो सूर्यरूप घोडा आकाशांत चालतो तो आणि हें चकचकित जग तेजोमय अग्नीपासून झालें आहे.

७. 'अपां नपाताला अंतरिक्षांत त्याची गाय गोरस पाजिते, तो तेथें प्रकाशून तेणेंकरून उपासक जनांला धनाची प्राप्ति करून देतो.'

यांत अपां नपाताची गाय म्हणजे मेघगर्जनारूप हंभारवातें करणारी आणि मेघोदकरूप दुधाचा पान्हा सोडणारी मेघवृष्टिरूपच गाय समजावयाची आहे.

**यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।**
**वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥**

यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया । विऽभाति ।
वयाः । इत् । अन्या । भुवनानि । अस्य । प्र । जायन्ते । वीरुधः । च । प्रऽजाभिः ॥ ८ ॥

**अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।**
**तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ॥ ९॥**

अपाम् । नपात् । आ । हि । अस्थात् । उपऽस्थम् । जिह्मानाम् । ऊर्ध्वः । विऽद्युतम् । वसानः ।
तस्य । ज्येष्ठम् । महिमानम् । वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥ ९ ॥

---

## भाषायाम्.

८. ऋतावा ( =सत्यवान् ) अजस्रः (=नित्यो ) यो दैव्येन शुचिना ( =देवसंबन्धिना शुक्लेन तेजसा ) अप्सु आ ( =अन्तरिक्षे ) उर्विया विभाति ( =विस्तीर्णं यथा तथा प्रकाशते ) अन्या भुवनानि ( =अन्यानि भूतजातानि ) अस्य वया इत् ( =तस्य शाखा एव ) [ भवन्ति ] च (=अपि च ) वीरुधः प्रजाभिस् [ तस्मादेव ] प्र जायन्ते ( =ओषधयश्च तस्मादेव पल्लवपत्रादिभिः प्रादुर्भवन्ति ) ॥

९. अपां नपात् विद्युतं वसानः ( =परिदधानो ) जिह्मानाम् उपस्थम् ऊर्ध्वः आ अस्थात् हि ( =कुटिलानाम् अपां मातॄणाम् उदरम् उच्छ्रित आरूढवान् हि ) । तस्य [ अपां नपातो ] ज्येष्ठं महिमानं वहन्तीः ( =प्रशस्यतमं महत्त्वं वहन्त्यो ) हिरण्यवर्णा यह्वीः ( =यह्व्यो नद्यस् ) [ तं ] परि यन्ति ( =परितो गच्छन्ति ) ॥

८. जो सत्यवान् आणि नित्य [ अपां नपात् ] अंतरिक्षांत शुद्ध आणि देवांच्या तेजानें विस्तीर्ण प्रकाशतो, त्याच्या सर्व भूतें शाखाच होत, आणि त्यापासूनच वनस्पतींला अंकुर फुटून त्या वाढत असतात.

8. Of him the true and the eternal one, who in the firmament shines far and wide with celestial brightness, other beings are only branches; and [from him] are the plants multiplied through their off-shoots.

९. अपां नपात् वीज पांघरून वांकड्या आयांच्या उदरीं उभा बसतो, त्याचा अत्यंत मोठा महिमा वाहणाऱ्या ज्या सुवर्णवर्ण नद्या त्या त्याला वेष्टितात.

9. The son of the waters, clad in lightning, rides upright in the womb of the oblique [waters]. The streams of golden colour surround him, carrying with them his greatest magnitude.

---

८. 'अंतरिक्षांत नित्य विस्तीर्ण प्रकाशणारा जो अपां नपात् त्यापासूनच सर्व कांहीं पदार्थ उत्पन्न होतात. वृक्षवनस्पत्यादि त्याच्याच योगानें वाढतात.'

९. 'आकाशांत आडवे तिडवे असणारे जे ढग त्याच वांकड्या आया; त्यांच्या पोटीं विजेच्या रूपानें उभा दिसणारा जो अपां नपात् तो जन्मतांच, त्याचा महिमा जिकडे तिकडे पसरणाऱ्या अशा ज्या मेघोदक प्रवाहरूप नद्या त्या त्याला वेष्टितात.' वीज कडकडून पडली म्हणजे तोच अपां नपाताचा प्रादुर्भाव; आणि तो झाला म्हणजे वृष्टि होत असते, हें प्रसिद्ध आहे.

**हिर॑ण्यरूपः स हिर॑ण्यसंदृगपां नपात्सेदु हिर॑ण्यवर्णः ।**
**हिर॒ण्यया॑त्परि॒ योने॑र्नि॒षद्या॑ हिरण्य॒दा द॑द॒त्यन्न॑मस्मै ॥ १० ॥ २३**

हि॒र॑ण्यऽरूपः । सः । हिर॑ण्यऽसंदृक् । अ॒पाम् । नपा॑त् । सः । इत् ।
उं॒ इति॑ । हिर॑ण्यऽवर्णः ।
हि॒र॒ण्यया॑त् । परि॑ । योनेः॑ । नि॒ऽसद्य॑ । हि॒र॒ण्य॒ऽदाः । द॒द॒ति॒ । अ
न्न॑म् । अ॒स्मै ॥ १० ॥ २३ ॥

**तद॒स्यानी॑कमु॒त चारु॒ नामा॑पी॒च्यं॑ वर्धते॒ नप्तु॑र॒पाम् ।**
**यमि॒न्धते॑ युव॒तयः॒ समि॒त्था हिर॑ण्यवर्णं घृ॒तमन्न॑मस्य ॥ ११ ॥**

तत् । अ॒स्य । अनी॑कम् । उ॒त । चारु॑ । नाम॑ । अ॒पी॒च्य॑म् । व॒र्ध॒ते॒ ।
नप्तुः॑ । अ॒पाम् ।
यम् । इ॒न्धते॑ । यु॒व॒तयः॑ । सम् । इ॒त्था । हिर॑ण्यऽवर्णम् । घृ॒तम् । अन्न॑
म् । अ॒स्य ॥ ११ ॥

---

## भाषायाम्.

१०. स हिरण्यरूपो [ भवति ] अपां नपात् हिरण्यसंदृक् ( =हिरण्यसदृशो ) [ भवति ] । स इत् उ ( =स एव ) हिरण्यवर्णो [ भवति ] । हिरण्ययात् योनेः परिनिषद्य ( =सुवर्णमयाज्जन्मस्थानात् प्रादुर्भूय ) हिरण्यदाः ( =हिरण्यस्य दाता ) [ भवति ] । अस्मै ( =तस्मै ) अन्नं ददति ( =हविरन्नं प्रयच्छन्ति ) ॥

११. हिरण्यवर्णं ( =सुवर्णरूपं ) यं युवतयः इत्था सम् इन्धते ( =यदा तं तरुण्योन्तरिक्षसंबन्धिन्य आपो देव्यः सतत दीपयन्ति ) तत् ( =तदा ) अस्य ( =तस्य ) अपां नप्तुः अनीकं ( =शरीरम् ) उत ( =अपि च ) चारु ( =शोभनम् ) अपीच्यं ( =गुह्यं ) नाम वर्धते । घृतं ( =घृतवद्वृष्टिजलम् ) अस्य ( =तस्य ) अन्नं [भवति] ॥

१०. तो अपां नपात् हिरण्यरूप [ आणि ] हिरण्यसदृश होय. तोच हिरण्यकांतीचा आहे. तो हिरण्यमय योनीपासून खालीं प्रादुर्भूत होऊन हिरण्य देणारा होतो. त्याला [ उपासक ] अन्न देतात.

११. जेव्हां सुवर्णवर्णाच्या त्या अपां नपाताला तरुणी खरोखर प्रज्वलित करितात तेव्हां त्याचें अंग [ आणि ] सुंदर गुह्य नाम हीं वाढतात. त्याचें अन्न घृत होय.

10. He is of golden form, the son of the waters is like gold. He alone is of golden colour. Being born of the golden womb he [ is] the giver of gold. To him they offer food.

11. When the young females truly kindle the golden-coloured one, the person of him, the son of the waters, and his dear secret name are increased. His food is clarified butter.

---

१०. 'हिरण्यरूप अपां नपात् हिरण्यरूप उदरांतून उत्पन्न होऊन हिरण्य देणारा होतो, तरीहि मनुष्यें त्याला हविरन्नाहून अधिक कांहीं अर्पण करीत नाहींत.'

' हिरण्यमय योनीपासून '=' हिरण्ययात् योनेः परि.' ह० हिरण्यरूप जें अन्तरिक्षरूप जन्मस्थान त्यापासून.

११. ' अंतरिक्षांत आपो देवी त्याला प्रज्वलित करितात. त्या वेळीं त्याचें शरीर आणि महत्त्व हीं मोठीं होतात. आपो देवी त्याला घृतासारिखें जें वृष्टिजल तेंच अन्न पाजितात.'

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥१२॥

अक्रः । न । बभ्रिः । सम्ऽइथे । महीनाम् । दिदृक्षेयः । सूनवे । भाःऽऋजीकः ।
उत् । उस्रियाः । जनिता । यः । जजान । अपाम् । गर्भः । नृऽतमः । यह्वः । अग्निः ॥ १२ ॥

अपां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपम् ।
देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥१३

अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् । वना । जजान । सुऽभगा । विऽरूपम् ।
देवासः । चित् । मनसा । सम् । हि । जग्मुः । पनिष्ठम् । जातम् । तवसम् । दुवस्यन् ॥ १३ ॥

---

## भाषायाम्.

१२. दिदृक्षेयः (=सर्वैर्दर्शनीयः=सुन्दरो) भाऋजीकः (=स्वदीप्त्या प्रकाशमानः) [अग्निः] सूनवे (=पुत्रवत्प्रियाय यजमानाय) महीनां समिथे (=सेनानां संगमने=संग्रामे) अक्रो न बभ्रिः (=पराक्रमकारी भर्ता रक्षिता च) [भवति]। योग्निरपां गर्भः (=बालको) नृतमो यह्वः (=शूरतमः पुत्रश्च) [भवति स] जनिता (=तासामपां पिता सन्) उस्रिया उज्जजान (=अप उदपादयत्)॥

अग्निर्यजमानस्य रक्षको भवति। उदकानां पुत्रः सन्नपि तेषां जनिता भवतीत्युक्तं विरोधयुक्तम्॥

१३. दर्शतम् (=अभिरामं) विरूपम् अपाम् ओषधीनां [च] गर्भं (=सूनुं) [तं] सुभगा वना (=सुभाग्ययुक्तारणिः) जजान (=अजनयत्)। जातं [तं] देवासश्चित् (=देवा अपि) मनसा (=स्तोत्रयुक्तया बुद्ध्या) सं जग्मुः (=यौगपद्येन संप्रापुः) पनिष्ठं (=स्तुत्यतमं) तवसं (=प्रवृद्धं) [तं] दुवस्यन् (=पर्यचरंश्च)॥

१२. दर्शनीय [आणि] दीप्तिमान् [अग्नि] [यजमानरूप] पुत्राला सैन्यांच्या संग्रामांत पराक्रमकारी आणि रक्षण करणारा [होतो]. आपो-[देवीं]चा गर्भ [आणि] अत्यंत शूर पुत्र [असा] जो अग्नि, [तो] पिता [होऊन] उदकांला उत्पन्न करिता झाला.

१३. आपो-[देवीं]चा [आणि] वनस्पतींचा सुंदर बाळ असा जो नानारूप [अग्नि, त्या]ला सुभाग्यवती अरणि जन्म देती झाली. तो उत्पन्न झाला तेव्हां देवहि मनःपूर्वक त्याला जाऊन भेटले. ते अत्यंत स्तुत्य [आणि] प्रबळ अग्नीची उपासना करिते झाले.

12. Agni, handsome [and] resplendent, [becomes] in the conflict of the [hostile] armies brave and protecting for [his] son [the worshipper]. He who [is] the boy [and] the bravest son of the waters produced [the same] waters as a father.

13. The fortunate wooden [Arani] gave birth to the beautiful [and] multiform boy of the waters [and] of the plants. Even the gods, when he was born, all gathered to him heartily. They praised him, the most praiseworthy [and] mighty.

---

१२. 'अग्नि संग्रामांत उपासकाला रक्षितो. तो उदकांचा पुत्र असताहि उदकांचा पिता होतो,' असा भावार्थ.

१३. 'अरणि' म्हणजे लांकडाच्या ज्या दोन तुकड्यांपासून अग्नि उत्पन्न करीत, तीं 'लांकडें.'

बृहन्त इद्भानवो भाऋजीकमग्निं सचन्त विद्युतो न शुक्राः ।
गुहेव वृद्धं सदसि स्वे अन्तरपार ऊर्वे अमृतं दुहानाः ॥ १४ ॥

बृहन्तः । इत् । भानवः । भाःऽऋजीकम् । अग्निम् । सचन्त । विऽद्युतः । न । शुक्राः ।
गुहाऽइव । वृद्धम् । सदसि । स्वे । अन्तः । अपारे । ऊर्वे । अमृतम् । दुहानाः ॥ १४ ॥

ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः ।
देवैरवो मिमीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः॥१५॥१९

ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वम् । सुऽमतिम् । निऽकामः ।
देवैः । अवः । मिमीहि । सम् । जरित्रे । रक्ष । च । नः । दम्येभिः । अनीकैः ॥ १५ ॥ १९ ॥

---

## भाषायाम्.

१४. बृहन्त इद भानवः (=महान्तः किरणाः) शुक्रा विद्युतो न (=दीप्यमाना विद्युत इव) भाऋजीकं (=दीप्तिमन्तम्) अग्निं सचन्त (=असेवन्त)। अपारे ऊर्वे (=अगाधेन्तरिक्षरूपे समुद्रे) अमृतं दुहानाः (=अमृतसदृशम् उदकं क्षरन्तो) [भानवो] गुहेव स्वे सदसि अन्तः वृद्धं (=गुहायामिव स्वकीये गृहे वृद्धिं प्राप्तं तम्) [असेवन्त]॥

१५. [हे अग्ने], यजमानः (=यजनकर्ता) [अहं] त्वा हविर्भिरीळे (=स्तौमि)। च (=अपि च) निकामः (=नितरां कामयमानोहं) सखित्वं सुमतिं (=तव मित्रत्वं प्रसन्नत्वं च) ईळे (=प्रार्थये)। देवैः [सहस्त्वं] जरित्रे (=स्तोत्रं कुर्वते) अवः सं मिमीहि (=रक्षणं कुरु)। दम्येभिरनीकैः (=उत्कटैस्तेजोभिर्) नो रक्ष च॥

दम्येभिर्दमनीयैर्नियन्तव्यैः। प्रयत्ननियन्तव्यतयोच्छृङ्खलतोक्ता। इति सम्यक्सायणः॥

१४. देदीप्यमान अग्नीप्रत तेजस्वी विजांप्रमाणें मोठीं तेजें प्राप्त झालीं; अगाध अंतरिक्षांत अमृत-दोहन करणारीं [ तेजें ] गुहेंत [ वाढल्या ]प्रमाणें स्वकीय गृहीं वाढलेला [ जो अग्नि, त्या ]प्रत प्राप्त झालीं.

14. Great splendors, like brilliant lightnings, waited upon resplendent Agni; shedding nectar in the limitless firmament: [upon] him who had grown within his own home as within a cave.

१५. [ हे अग्नी ], मी यजमान तुला हवींनीं प्रार्थितों, मी उत्सुक होत्साता [तुझा] स्नेह [आणि ] प्रसाद प्रार्थितों. देवांसह तूं स्तोत्याचें रक्षण कर आणि उत्कट तेजांसह तूं आम्हांला संभाळ.

15. I, the sacrificer, pray thee with oblations, I pray [for thy] friendship [and] favour, I who am solicitous. With the gods give thy protection to the poet, and preserve us with [thy] unmastered splendors.

---

१४. 'अमृत दोहन करणारीं तेजें.'–'अमृतं दुहाना भानवः'. म्हणजे अमृतासारिखें जें मेघोदक, त्याची वृष्टि करणारीं किरणरूप तेजें.

१६. 'देवहीन शत्रु' = 'अदेवान् पृतनायून्.' म्हणजे देवांस न भजणारे जे अनार्यजन शत्रु ते कोळी, भिल्ल इत्यादिक.

उपक्षेतारस्तव सुप्रणीतेऽग्ने विश्वानि धन्या दधानाः ।
सुरेतसा श्रवसा तुञ्जमाना अभि ष्याम पृतनायूँरदेवान् ॥ १६ ॥

उपऽक्षेतारः । तव । सुऽप्रनीते । अग्ने । विश्वानि । धन्या । दधानाः । सुऽरेतसा । श्रवसा । तुञ्जमानाः । अभि । स्याम । पृतनाऽयून् । अदेवान् ॥ १६ ॥

आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि विद्वान् ।
प्रति मर्ताँ अवासयो दमूना अनु देवान्रथिरो यासि साधन् ॥१७

आ । देवानाम् । अभवः । केतुः । अग्ने । मन्द्रः । विश्वानि । काव्यानि । विद्वान् ।
प्रति । मर्तान् । अवासयः । दमूनाः । अनु । देवान् । रथिरः । यासि । साधन् ॥ १७ ॥

## भाषायाम्.

१६. हे सुप्रणीते अग्ने (=शोभनप्रणयन हे अग्ने), तव उपक्षेतारः (=त्वदेकाश्रया) [वयं] विश्वानि धन्या दधानाः (=सर्वाणि धनानि धारयन्तः सन्तः) [अपि च] सुरेतसा श्रवसा (=प्रवृद्धिकरेणान्नेन) तुञ्जमानाः (=?" हवींषि प्रयच्छन्तः सन्तः") अदेवान् पृतनायून् (=देवरहितान्=देवान् अपूजयतः शत्रून्) अभि स्याम (=अभिभवेम) ॥

१७. हे अग्ने, मन्द्रः (=आह्लादकरो) विश्वानि काव्यानि विद्वान् (=सर्वाणि स्तोत्राणि जानन्) [त्वं] देवानां केतुः आ अभवः (=सर्वत्र देवानां दूतो जायसे)। दमूनाः (=यजमानगृहस्य सुखकरस्) [त्वं] मर्तान् प्रति अवासयः (=मनुष्यान् स्वस्वगृहेषु वासयसि)। रथिरः (=रथी) [त्वं] साधन् (=देवानां हितानि यज्ञरूपाणि कर्माणि साधयन्) अनु देवान् यासि (=देवान् प्रति गच्छसि) ॥

१६. हे सुनायक अग्नी, तुजवर अवलंबून राहणारे [आम्ही] सर्व संपत्ति धारण करणारे होत्साते, पुष्टिकारक अन्नानें हवि देऊं आणि देवहीन शत्रूंचा पराभव करूं असें कर.

१७. हे अग्नी, तूं सर्वत्र देवांचा दूत झाला आहेस, आणि आनंदी असा जो तूं तो सर्व स्तोत्रें जाणत असतोस. गृहसुखकारी तूं मर्त्यांला घरोघर वसवितोस आणि रथी असा जो तूं, तो कार्य साधून देवांप्रत जात असतोस.

16. O Agni of good guidance, may we who depend on thee, becoming possessed of all treasures [and] offering oblations of invigorating food, vanquish the godless enemies.

17. O Agni, thou hast become the herald of the gods, thou the cheerful knower of all hymns. Thou the friend of home makest mortals dwell [in their homes]; thou the charioteer goest to the gods having accomplished [thy errand].

---

१७. 'दूत' =' केतुः.' अक्षरशः ताका अथवा झेंडा धारण करणारा. म्हणजे देवांला हवि पोंहचविण्याकरितां द्युलोकावरून पृथिवीवर आणि पृथिवीवरून द्युलोकीं जाणारा.

'गृहसुखकारी' =' दमूनाः'. म्हणजे ज्या घरीं प्रगट होतो त्या घरांतील मनुष्यांस सुख देणारा.

१८. 'आणि यज्ञाला संपादितो' =' विदथानि साधन्.' म्हणजे अग्नि होत्याचें काम करितो आणि देवांस बोलावून आणून यज्ञ पूर्ण करितो.

**नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन् ।**
**घृतप्रतीक उर्विया व्यद्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥ १८ ॥**

नि । दुरोणे । अमृतः । मर्त्यानाम् । राजा । ससाद । विदथानि । साधन् ।
घृतऽप्रतीकः । उर्विया । वि । अद्यौत् । अग्निः । विश्वानि । काव्यानि । विद्वान् ॥ १८ ॥

**आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन् ।**
**अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥ १९ ॥**

आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ।
अस्मे इति । रयिम् । बहुलम् । सम्ऽतरुत्रम् । सुऽवाचम् । भागम् । यशसम् । कृधि । नः ॥ १९ ॥

---

## भाषायाम्.

१८. मर्त्यानां राजा (=मरणधर्मणां मनुष्याणां राजभूतः) अमृतः (=मरणरहितः) [अग्निः] दुरोणे (=गृहे) नि ससाद (=निषीदति) विदथानि साधन् (=यज्ञान् साधयति च)। घृतप्रतीकः (=घृतेन संधुक्षितावयवः) अग्निरुर्विया (=विस्तीर्णं यथा तथा) वि अद्यौत् (=विशेषेण प्रकाशते) विश्वानि काव्यानि विद्वान् (=सर्वाणि स्तोत्राणि जानाति च)॥

१९. महान् [त्वं] शिवेभिः सख्येभिरा नो गहि (=कल्याणकरैस्तव सख्यैः सहास्मान् आगच्छ) महीभिरूतिभिः (=महतीभी रक्षाभिः सह) सरण्यन् (=त्वरमाणः सन्) [आगच्छ]। अस्मे (=अस्मभ्यं) बहुलं (=प्रभूतं) संतरुत्रं (=सम्यक् सर्वेभ्य उपद्रवेभ्यः संतारकं) रयिं (=धनं) [कृधि=देहि]—नः (=अस्मभ्यं) सुवाचं (=सुश्लोकं) यशसं (=कीर्त्या संयुक्तं) भागं (=भाग्यं) कृधि (=कुरु=देहि)॥

१८. मर्त्यांचा राजा [ असा ] अमर [ अग्नि ] घरांत बसतो आणि यज्ञांला संपादितो. घृतोज्ज्वलिताङ्ग अग्नि विस्तीर्णपणें प्रकाशतो आणि सर्व स्तोत्रें जाणतो.

18. [Agni] the immortal king of the mortals sits down in the house, accomplishing the sacrifices. Agni brightened by clarified butter shines far and wide, and knows all hymns.

१९. [ हे अग्नी ], महान् असा जो तूं, तो तुझी कल्याणकारक मैत्री [आणि ] मोठें पाठबळ घेऊन आम्हांप्रत सत्वर ये. आम्हांला मोठी [ आणि ] विजय देणारी संपत्ति दे. आम्हांला सुश्लोक [ आणि ] सत्कीर्तिसंपन्न भाग्य दे.

19. Come thou the great one unto us with [thy] beneficent friendship, [come] quickly with [thy] great help. [Bestow] upon us plentiful and victorious wealth, bestow on us prosperity renowned and celebrated.

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचम् ।
महान्ति वृष्णे सवना कृतेमा जन्मञ्जन्मन् निहितो जातवेदाः ॥२०

एता । ते । अग्ने । जनिम । सनानि । प्र । पूर्व्याय । नूतनानि । वोचम् ।
महान्ति । वृष्णे । सवना । कृता । इमा । जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः ॥ २० ॥

जन्मञ्जन्मन् निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ २१ ॥

जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः । विश्वामित्रेभिः । इध्यते । अजस्रः ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ २१

## भाषायाम्.

२०. हे अग्ने, एता ते सनानि जनिम ( =एतानि तव सनातनानि जनिमानि= एतांस्तव प्राचीनान् प्रादुर्भावप्रकारान् ) नूतनानि (=अर्वाचीनानि जन्मानि=अर्वाचीनान् प्रादुर्भावप्रकारांश्च) पूर्व्याय (=सनातनस्य तव प्रीत्यर्थं ) प्र वोचम् ( =उक्तवानस्मि ) । वृष्णे ( =वीर्यवते तुभ्यम् ) इमा महान्ति सवना कृता ( =इमानि बृहन्ति सवनानि कृतानि भवन्ति ) । जातवेदाः (=भूतजातानां वेदिताग्निर् ) जन्मन्जन्मन् ( =जन्मनि जन्मनि सर्वेषु मनुष्येषु ) निहितः ( =स्थापितोस्ति ) ॥

जनिमा जन्मानि कर्माणि स्तोत्राणि वा ......... ते तुभ्यम् । इति सायणः ॥

२१. जन्मन्जन्मन् निहितः ( =सर्वेषु मनुष्येषु स्थापितो ) जातवेदाः ( =जातानां वेदिताग्निर् ) अजस्रः (=अजस्रम् अनवरतं यथा तथा ) विश्वामित्रेभिरिध्यते ( =विश्वामित्रापत्यैः समिध्यते ) । तस्य यज्ञियस्य (=पूजनीयस्याग्नेः ) सुमतौ (=अनुग्रहे ) अपि भद्रे सौमनसे ( =कल्याणकरे सख्ये ) [ च ] वयं स्याम ॥

अपिः सप्तमीद्योतनार्थः । सायणस्तु अपि स्याम । अपि भवेम । प्रार्थनायां लिङ् । इति ॥

२०. हे अग्नी, तुझे हे पुरातन जन्म [ आणि ] तुज पुरातनाप्रीत्यर्थ [ तुझे ] नूतन जन्म म्यां गायले आहेत. [ तुज ] वीराप्रीत्यर्थ [हीं] मोठीं सवनें केलीं आहेत.—जातवेद [ अग्नि ] सर्व जनांच्या घरीं स्थापिला आहे.

20. I have sung, o Agni, for thee, the primeval one, thy ancient births [and] thy modern [births]. For thee the puissant hero these great somas have been prepared.—All-knowing [Agni] is established among all peoples.

२१. सर्व लोकांच्या घरीं स्थापिलेला सर्वज्ञ अग्नि विश्वामित्रांनीं नित्य पेटविला जातो. त्या पूजनीय अग्नीच्या कृपेंत आणि कल्याणकारक मैत्रींत आम्ही राहूं असें होओ.

21. All-knowing [Agni], established among all peoples is always kindled by the descendants of Vis'vâmitra. May we be in the favour and in the auspicious friendship of that adorable [Agni].

---

२०. 'पुरातन जन्म आणि नूतन जन्म'='जनिमा सनानि नूतनानि.' म्हणजे अंतरिक्षांत जी अग्नीची उत्पत्ति सांगितली ती पुरातन, आणि प्रतिगृहीं यजनार्थ नित्य होते ती नूतन.

२१. 'विश्वामित्रांनीं'='विश्वामित्रेभिः' म्हणजे विश्वामित्रकुलोत्पन्न जे आम्ही उपासक त्यांहीं. सायणाचार्य 'विश्वामित्रेभिः' म्हणजे विश्वामित्रेण या एकवचनार्थी संमानदर्शक बहुवचन आहे, असें म्हणतात.

**इमं यज्ञं सहसावन् त्वं नो देवत्रा धेहि सुक्रतो रराणः ।**
**प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥ २२ ॥**

इमम् । यज्ञम् । सहसाऽवन् । त्वम् । नः । देवऽत्रा । धेहि । सुक्रतो इति सुऽक्रतो । रराणः ।

प्र । यंसि । होतः । बृहतीः । इषः । नः । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ २२ ॥

**इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।**
**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥२३॥१६॥**

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।

स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ २३ ॥ १६ ॥

---

## भाषायाम्.

२२. हे सहसावन् (=सहस्वन् बलवन्), हे सुक्रतो (=शोभनप्रज्ञ), रराणः (=दानशीलस्) त्वम् इमं नो यज्ञं देवत्रा धेहि (=देवेषु निधेहि) । हे होतः, बृहतीरिषः (=प्रभूतान्यन्नानि) नः प्र यंसि (=अस्मभ्यं प्रयच्छ) । हे अग्ने, महि द्रविणं (=प्रभूतं धनम्) [ अस्मभ्यम् ] आ यजस्व (=यजनेन द्वारानय=प्रयच्छ) ॥

२३. हे अग्ने, हवमानाय (=स्तुवते मह्यं) शश्वत्तमं (=चिरकालं यथा तथा) पुरुदंसं (=प्रभूतवीरकर्माणं=प्रभूतवीरकर्मणां कारयित्रीम्) इळां (=भूमिं) सनिं [च] (=गवां लाभं च) साध (=साधय) । नः सूनुस्तनयः (=अस्मा पुत्रः पौत्रश्च) विजावा स्यात् (=पुत्रपौत्रादिरूपेण स्वयं विजायत इति तथोक्तः स्यात् (=भवतु) । हे अग्ने, सा ते सुमतिः (=तव सा प्रसिद्धा सुबुद्धिरनुग्रहात्मिका) अस्मे भूतु (=अस्माकं भवतु) ॥

२२. हे बलवान्, हे सुप्रज्ञ [ अग्नी ], उदार असा जो तूं, तो ह्या आमच्या यज्ञाला देवांप्रत प्रविष्ट कर. हे होत्या, तूं आम्हांला मोठीं अन्नें दे. हे अग्नी, तूं मोठें धन दे.

२३. हे अग्नी, तुझा धांवा करणाऱ्याला तूं बहुत पराक्रम करविणारी भूमि आणि गुरांची समृद्धि हीं सदैव प्राप्त करून दे. आमचे पुत्रपौत्र संतान वाढविणारे होओत. हे अग्नी, तुझी जी कृपा ती आम्हांला प्राप्त होओ.

22. O mighty [and] wise Agni, do thou who art bounteous carry this our sacrifice among the gods. O invoker, give us great foods. O Agni, give us great wealth.

23. O Agni, ever and ever do thou procure for thy worshipper land full of many valorous deeds and an affluence of cows. May our sons and grandsons be prolific. O Agni, may that thy favour be ours.

---

२३. 'बहु पराक्रम करणारी भूमि '= 'पुरुदंसम्.' म्हणजे जी भूमि ( देश ) मिळाल्यापासून पुष्कळ पराक्रम करण्याचें धैर्य येईल अशी भूमि. अशा प्रकारची प्रार्थना करीत करीतच प्राचीन आर्यलोक या सुपीक देशाप्रत पावले. पण आतां त्यांच्यानें तींत कांहीं पराक्रम मात्र करवत नाहींत.

## सूक्तम् २-२३६.

विश्वामित्र ऋषिः । वैश्वानरोऽग्निर्देवता । जगती छन्दः ॥

**वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि ।**
**द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति॥१**

वैश्वानराय । धिषणाम् । ऋतऽवृधे । घृतम् । न । पूतम् । अग्नये । जनामसि ।
द्विता । होतारम् । मनुषः । च । वाघतः । धिया । रथम् । न । कुलिशः । सम् । ऋण्वति ॥ १ ॥

**स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत्पुत्र ईड्यः ।**
**हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः॥ २ ॥**

सः । रोचयत् । जनुषा । रोदसी इति । उभे इति । सः । मात्रोः । अभवत् । पुत्रः । ईड्यः ।
हव्यऽवाट् । अग्निः । अजरः । चनःऽहितः । दुःऽदभः । विशाम् । अतिथिः । विभाऽवसुः ॥ २ ॥

### भाषायाम्.

१. ऋतावृधे ( =यज्ञलक्षणस्य सत्यस्य वर्धयित्रे ) वैश्वानरायाग्नये ( =वैश्वानरनाम्ने तस्मै ) घृतं न पूतं धिषणां जनामसि ( =शुद्धं घृतमिव स्तुतिम् उत्पादयामः ) । रथं न कुलिशः सम् ऋण्वति (=कुठारो रथं यथा संस्करोति तथा) द्विता होतारं ( =द्विविधमाह्वातारम् अग्निं) मनुषश्च वाघतः (=यजमाना ऋत्विजश्च) धिया [सम् ऋण्वति] ( =स्तुत्यादिरूपेण कर्मणा संस्कुर्वन्ति ) ॥

स्तुत्यादिरूपस्य कर्मणः करणात् प्राक् अग्निः केवलकाष्ठवद् असंस्कृतो भवति तादृशात् कर्मणोनन्तरं तु कुठारेण संस्कृतरथवत् सुसंस्कृतो भवतीति भावः ॥

वैश्वानरशब्दो यास्केन व्याख्यातः । वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति । नि० ७.२१ । इति सायणः ॥

* द्विता द्विधा गार्हपत्याहवनीयरूपाभ्यां युक्तं होतारं देवानामाह्वातारम् । इति भाष्यम् ॥

## सूक्त २–२३६.

ऋषि–विश्वामित्र. देवता–वैश्वानर अग्नि. वृत्त– जगती.

१. सत्यवर्धक अग्नीप्रीत्यर्थ आम्ही शुद्ध घृताप्रमाणें स्तुति निर्माण करितों. दोन प्रकारचा होता असा जो अग्नि त्याला, यजमान आणि ऋत्विज् हे, कुठार रथाला घडवितो त्याप्रमाणें, कर्मांनें [ घडवितात ].

२. तो जन्मतांच उभयलोकांस प्रकाशमान करिता झाला. तो [ जगताचीं ] मातापितरें अशा ज्या [ द्यावापृथिवी ] त्यांचा स्तुत्य पुत्र झाला. [ जो ] अग्नि हवि वाहून नेणारा, अजर, अन्नदायक, अहिंसित आणि देदीप्यमान असा जनांचा अतिथि [होय].

## HYMN 2–236.

To *Vais'vânara Agni.* By *Vis'vâmitra.* Metre *Jagatî.*

1. We prepare for Vais'vânara Agni, the promoter of the truth, a hymn like well-strained clarified butter. Worshippers and priests [ prepare ] with [their] rites the double invoker, even as an axe prepares a chariot.

2. By his birth he illuminated the two worlds. He became the praiseworthy son of the parents [of the universe];—Agni, [who is] the carrier of the oblation, ever young, the giver of food, indestructible [and] the resplendent guest of the people.

---

१. हें सूक्त वैश्वानर अग्नीविषयीं आहे वैश्वानर अग्नि म्हणजे कोण याविषयीं सू. ५९ मं १ आणि त्याजवरील टीप पहा.

भावार्थ.–' शुद्ध तूप तयार करून अग्नीला अर्पण केलें म्हणजे जसा अग्नि प्रादुर्भूत होऊन प्रज्वलित होतो, त्याप्रमाणें जी स्तुति ऐकून तो प्रादुर्भूत आणि प्रज्वलित होईल, अशी स्तुति आम्ही रचितों. कारण अग्नीला जें होतृत्व येतें तें स्तुत्यादिक कर्म यजमानांनीं आणि ऋत्विजांनीं केल्यावरच येतें; त्यापूर्वी तो कुऱ्हाडीनें न तासलेल्या एकाद्या लांकडाच्या तुकड्याप्रमाणें असतो.'

२. ' अहिंसित ' = ' दूळभः ' म्ह० ज्याचा कोणीहि नाश करूं शकत नाहीं असा.

**क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयन्त चित्तिभिः ।**
**रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे ॥३॥**

क्रत्वा । दक्षस्य । तरुषः । विऽधर्मणि । देवासः । अग्निम् । जनयन्त । चित्तिऽभिः ।
रुरुचानम् । भानुना । ज्योतिषा । महाम् । अत्यम् । न । वाजम् । सनिष्यन् । उप । ब्रुवे ॥ ३ ॥

**आ मन्द्रस्य सनिष्यन्तो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियम् ।**
**रातिं भृगूणामुशिजं कविक्रतुमग्निं राजन्तं दिव्येन शोचिषा ॥४॥**

आ । मन्द्रस्य । सनिष्यन्तः । वरेण्यम् । वृणीमहे । अह्रयम् । वाजम् । ऋग्मियम् ।
रातिम् । भृगूणाम् । उशिजम् । कविऽक्रतुम् । अग्निम् । राजन्तम् । दिव्येन । शोचिषा ॥ ४ ॥

---

२. स जनुषा ( =जन्मना=जातमात्र एव ) उभे रोदसी ( =द्यावापृथिव्यावुभे ) रोचयत् ( =अरोचयत्=प्रकाशमाने अकरोत् ) । स मात्रोः ( =जगतः पितृभूतयोर्द्यावापृथिव्योर् ) ईड्यः ( =स्तुत्यः ) पुत्रोभवत् [ यः ] अग्निः हव्यवाट् ( =हव्यवाहकः ) अजरः ( =नित्यतरुणश् ) चनोहितः (=अन्नं यजमाने निहितं येन तादृशो) दूळभः ( =हिंसितुमशक्यो ) विशां (=जनानां ) विभावसुरतिथिः ( =दीप्यमानोतिथिर् ) [ भवति ] ॥

---

## भाषायाम्.

३. तरुषो दक्षस्य ( =शत्रुजितो बलस्य ) क्रत्वा ( =कर्मणा ) [ तथा] चित्तिभिः ( =कर्मभिर् ) देवासः ( =देवा ) अग्निं विधर्मणि ( =अन्तरिक्षे ) जनयन्त ( =अजनयन् ) । भानुना ज्योतिषा रुरुचानं ( =दीप्यमानेन तेजसा अतिशयेन प्रकाशमानं ) महां ( =महान्तम् अग्निं ) वाजं सनिष्यन् अत्यं न ( =धनं लब्धुम् इच्छन् भारसहमश्वमिव ) उप ब्रुवे ( =उपेत्य स्तौमि ) ॥

अन्नलाभाय अन्नस्यानेतारम् अश्वमिव अग्निं नियोजयामीत्यर्थः ॥

४. मन्द्रस्य ( =आह्लादकरस्याग्नेर् ) वरेण्यं ( =वरणीयं श्रेष्ठम् ) अह्रयम् ( =अलज्जावहम् ) ऋग्मियं ( =प्रशस्यं ) वाजम् ( =अन्नं ) सनिष्यन्तः ( =लब्धुमि-

३. विजयी बळाच्या पराक्रमेंकरून [ आणि ] कर्माच्या योगेंकरून देव अग्नीला अंतरिक्षांत निर्माण करिते झाले. चकचकीत तेजानें प्रकाशणारा असा जो महा अग्नि त्याप्रत अन्नाची इच्छा करणारा मी वेगवान् अश्वाला [ सेविल्या]प्रमाणें सेवितों.

3. The gods created Agni in the sky by the force of their victorious strength and by their deeds. I, desirous of food, propitiate the great Agni glowing with brilliant light, even as [ I would propitiate ] a swift horse.

४. आह्लादकारक [अग्नी]चें श्रेष्ठ, [ आणि ] लज्जा न आणणारें [ आणि ] स्तुत्य [ असें ] धन वांछिणारे आम्ही भृगूंचा दाता, मायाळू, कविप्रज्ञ, [ आणि ] दिव्य तेजानें प्रकाशणारा [ असा जो ] अग्नि [ त्या]ला भजतों.

4. Desirous of obtaining the excellent, proud [and] praiseworthy wealth of cheerful [Agni], we adore Agni the patron of the Bhrigus, loving, possessed of the intelligence of a poet [ and ] shining with the splendor of heaven.

---

३. पहिल्या अर्धाचा असाहि अर्थ होऊं शकेल की, 'देदीप्यमान उपासकांनीं (देवाः) यज्ञांत (विधर्मणि) उपासना कर्माच्या योगेंकरून (चित्तिभिः) अग्नीला निर्माण केलें.'

'अश्वाला' इ०. अन्न आणावयाचें असलें म्हणजे जसा वेगवान् घोडा तयार करितात, कीं जो जाऊन तें लवकर घेऊन येईल, त्याप्रमाणें अग्नीची प्रार्थना मी करीत आहें. कारण तो घोड्याप्रमाणें अन्नादिक धन सत्वर वाहून आणणारा आहे.

४. 'भृगु.' सू. ५८ मं. ६ आणि टीपा पहा.

'कविप्रज्ञ'='कविक्रतुम्.' म्हणजे कवीप्रमाणें ज्याची प्रज्ञा आहे तो.

**अ॒ग्निं सु॒म्नाय॑ दधिरे पु॒रो जना॒ वाज॑श्रवसमि॒ह वृ॒क्तब॑र्हिषः ।**
**य॒तस्रु॑चः सु॒रुचं॑ वि॒श्वदे॑व्यं रु॒द्रं य॒ज्ञानां॒ साध॑दिष्टिम॒पसा॑म् ॥५॥१७**

अ॒ग्निम् । सु॒म्नाय॑ । द॒धि॒रे॒ । पु॒रः । जना॑ः । वाज॑ऽश्रवसम् । इ॒ह । वृ॒क्तऽब॑र्हिषः ।
य॒तऽस्रु॑चः । सु॒ऽरुच॑म् । वि॒श्वऽदे॑व्यम् । रु॒द्रम् । य॒ज्ञाना॑म् । साध॑त्ऽइष्टिम् । अ॒पसा॑म् ॥ ५ ॥ १७ ॥

**पाव॑कशोचे॒ तव॒ हि क्षयं॒ परि॒ होत॑र्य॒ज्ञेषु॑ वृ॒क्तब॑र्हिषो॒ नर॑ः ।**
**अग्ने॒ दुव॑ इ॒च्छमा॑नास॒ आप्य॒मुपा॑सते॒ द्रवि॑णं धेहि॒ तेभ्य॑ः ॥ ६ ॥**

पाव॑कऽशोचे । तव॑ । हि । क्षय॑म् । परि॑ । होत॒रिति॑ । य॒ज्ञेषु॑ । वृ॒क्तऽब॑र्हिषः । नर॑ः ।
अग्ने॑ । दुव॑ः । इ॒च्छमा॑नासः । आप्य॑म् । उप॑ । आ॒स॒ते॒ । द्रवि॑णम् । धे॒हि॒ । तेभ्य॑ः ॥ ६ ॥

---

च्छन्तो ) [ वयं ] भृगूणां रातिम् (=एतन्नामकानामृषीणामभिलषितार्थप्रदातारम्) उशिजं ( =कामयमानं ) कविक्रतुं ( =कवेरिव क्रतुः प्रज्ञा यस्य तं ) दिव्यस्य शोचिषा राजन्तं ( =दिवि भवेन तेजसा शोभमानम् ) [ अग्निं ] वृणीमहे ( =संभजामहे ) ॥

---

## भाषायाम्.

५. पुरः ( =पुरा काले ) वृक्तबर्हिषो जनाः ( =स्तीर्णबर्हिष ऋत्विग्जना ) वाजश्रवसम् ( =अन्नविषयकीर्तिमन्तम् ) अग्निम् इह [ लोके ] सुम्नाय दधिरे ( =सुखप्राप्तये स्थापितवन्तः ) । यतस्रुचः ( =हविर्दानाय प्रयतस्रुच ऋत्विजः ) सुरुचं ( =शोभनदीप्तिमन्तं ) विश्वदेव्यं ( =सर्वेभ्यो देवेभ्यो हितं ) रुद्रं ( =महान्तम् ) अपसां यज्ञानां ( =कर्मवतां यज्ञकर्तॄणामुपासकानां ) साधदिष्टिं ( =साधितयज्ञम् ) [ अग्निं दधिरे ] ॥

६. हे पावकशोचे ( =शोधकदीप्तिमन् ) होतः, वृक्तबर्हिषो नरः ( =स्तीर्णबर्हिषो मनुष्या=ऋत्विजो ) यज्ञेषु तव क्षयं परि [ उपासते ] ( =तव निवासस्थानं यागगृहं परिवेष्टयन्ति )—हे अग्ने, दुवः आप्यम् इच्छमानासः (=धनं स्नेहं च तव वाञ्छन्तस्ते) उप आसते ( =समीपमुपविशन्ति=तव स्थानं सेवन्ते ) । तेभ्यो द्रविणं धेहि ( =धनं देहि ) ॥

५. धनप्रख्यात अग्नीला ऋत्विज् लोक पूर्वी येथें सुखासाठीं स्थापिते झाले. पळीनें हवि देणारे [ ऋत्विज् ] सुतेजस्क [ आणि ] सर्व देवांचा मित्र, महान्, [आणि] यजन करणाऱ्या सेवकांचा यज्ञ पुरा करणारा जो अग्नि त्याला [ स्थापिते झाले ].

5. For happiness the priests, having spread the grass, established here of yore Agni famous for his wealth—[the priests] with ladles stretched forth [established Agni] who has excellent brightness, who is the friend of all the gods, the great accomplisher of the sacrifice of the pious worshippers.

६. हे शोधक दीप्तिमान् होत्या, दर्भ आंथरणारे जन यज्ञांमध्यें तुझ्या घरासभोंतालीं– हे अग्नी, [तुझें] धन [आणि तुझें] मित्रत्व वांछिणारे [ जन ] [ तुझ्या घरासभोंतालीं ] वसतात. त्यांला तूं धन दे.

6. O thou of purifying brightness, o invoker, the men having spread the grass [surround] in sacrifices thy home,—wishing for [thy] gift [and] friendship, o Agni, they surround [thy home]. Give wealth unto them.

---

५. अग्नीची पूजा प्रथम या लोकीं कशी प्रवृत्त झाली त्याविषयीं येथें सांगितलें आहे.

यांत ‘ यज्ञ ’ शब्दाचा जो ‘ यज्ञिय ’ ( यज्ञ करणारा ) असा अर्थ सायणांनीं केला आहे तो ‘ यज्ञ ’ शब्द ‘ अपसाम् ’ याच्या संबंधानें आणि अन्वयानें अपरपर्याय असा आल्यामुळें उघड होतो. यज्ञ शब्दाचा हा अर्थ पाश्चात्य विद्वान् मान्य करीत नाहींत पण या आणि यासारिख्या दुसऱ्या मंत्रांवरून तो उघड दिसतो.

६. ‘ दर्भ आंथरणारे जन ’ = ‘ वृक्तबर्हिषो नरः ’ म्हणजे यज्ञ करणारे जन; यजमान, ऋत्विज इत्यादि सेवक.

अग्नीचें ‘ घर ’ म्हणजे यज्ञगृह, जेथें अग्नि पेटत असतो तें.

आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन् ।
सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः ॥७

आ । रोदसी इति । अपृणत् । आ । स्वः । महत् । जातम् । यत् । एनम् । अपसः । अधारयन् ।
सः । अध्वराय । परि । नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽहितः ॥ ७ ॥

नमस्यत हव्यदातिं स्वध्वरं दुवस्यत दम्यं जातवेदसम् ।
रथीर्ऋतस्य बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ ८ ॥

नमस्यत । हव्यऽदातिम् । सुऽअध्वरम् । दुवस्यत । दम्यम् । जातऽवेदसम् ।
रथीः । ऋतस्य । बृहतः । विऽचर्षणिः । अग्निः । देवानाम् । अभवत् । पुरःऽहितः ॥ ८ ॥

## भाषायाम्.

७. यद् ( =यदा ) जातम् एनं ( =जातमात्रमग्निम् ) अपसः ( =कर्मवन्तो यजमाना ) अधारयन् ( =अस्थापयन् ) [ तदा स ] रोदसी आ अपृणत् ( =द्यावापृथिव्यौ तेजसापूरयत् ) । महत् स्वः आ [ अपृणत् ] ( =महदन्तरिक्षमपूरयत् ) । कविः ( =क्रान्तदर्शी ) चनोहितः ( =यजमानगृहे निहितान्नः ) स वाजसातये ( =अन्नलाभाय=अन्नमानेतुम् ) अत्यो न ( =भारसहोश्व इव ) अध्वराय परि नीयते ( =यज्ञार्थं नीयते ) ॥

८. [ हे ऋत्विजः ], हव्यदातिं ( =हविषो दातारं ) स्वध्वरं ( =शोभनस्याध्वरस्य कर्तारम् ) [ अग्निं ] नमस्यत ( =पूजयत ) । दम्यं ( =दमेभ्यो गृहेभ्यो हितं ) जातवेदसं ( =जातानां वेदितारं सर्वज्ञं ) [ तं ] दुवस्यत ( =परिचरत ) । बृहतः ( =महत ) ऋतस्य ( =यज्ञस्य ) रथीः ( =नेता ) विचर्षणिः ( =विशेषेण द्रष्टा ) अग्निर्देवानां पुरोहितोभवत् ॥

७. जेव्हां कर्मकारी [ उपासक जन ] अग्नि उपजतांच त्याला स्थापिते झाले, तेव्हां तो द्यावांपृथिवींला व्यापिता झाला, [आणि] महा अन्तरिक्षाला [ व्यापिता झाला ]. तो प्रज्ञावान् [ आणि ] अन्नदायक [अग्नि] अश्वाला अन्नासाठीं [ नेल्या]प्रमाणें अध्वरासाठीं इकडे तिकडे नेला जातो.

७. He filled heaven and earth, he filled the great firmament, when [as he was] born the worshippers established him [on the altar]. That wise [and] beneficent one is carried about for the sacrifice even as a horse for carrying food.

८. हविर्दायक, [ आणि] चांगला यज्ञ करणारा [ जो अग्नि त्या]ला पूजा. घराचें बरें करणारा [ जो ] सर्वज्ञ [ अग्नि त्या]ला तुम्ही भजा. महा यज्ञाचा वाहक [ असा जो ] महाप्रज्ञ अग्नि [तो] देवांचा पुरोहित झाला आहे.

8. Adore [Agni] the giver of oblation [and] the performer of good sacrifices. Worship [Agni] the friend of the home, the knower of all creatures. Agni, the carrier of the great sacrifice, [and] possessed of great, knowledge, has become the priest of the gods.

---

७. 'अग्नि उत्पन्न झाला आणि त्याला उपासकांनीं स्थापन करितांच त्यानें आपल्या तेजानें द्यावापृथिवींला आणि अंतरिक्षाला भरून टाकिलें,' असा भावार्थ. उत्तरार्धाचें तात्पर्य असें कीं, अन्न घेऊन यावयाचें असलें म्हणजे ज्याप्रमाणें ओझें वाहण्यास समर्थ अशा घोड्याला नेतात त्याप्रमाणें यज्ञ संपादनार्थ अग्नीला एका वेदीवरून दुसऱ्या वेदीवर नेतात. म्हणजे तेथें अग्नीला नेऊन त्याच्या द्वारें यज्ञ पूर्ण झाला म्हणजे तो पाहिजे तितकें अन्न प्राप्त करून देतो.

८. 'महा यज्ञाचा वाहक' = 'ऋतस्य बृहतो रथीः.' म्हणजे मोठमोठ्या यज्ञांत दिलेलें हवि देवांप्रत घेऊन जाणारा.

'घराचें बरें करणारा' = 'दम्यमूः.' म्हणजे सर्व घरांत राहून घरांतील मनुष्यांला सुख देणारा; 'घरगुती,' 'गृहमित्र.'

तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः ।
तासामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥ ९ ॥

तिस्रः । यह्वस्य । सम्ऽइधः । परिऽज्मनः । अग्नेः । अपुनन् । उशिजः ।
अमृत्यवः ।
तासाम् । एकाम् । अदधुः । मर्त्ये । भुजम् । ऊं इति । लोकम् ।
ऊं इति । द्वे इति । उप । जामिम् । ईयतुः ॥ ९ ॥

विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्त्स्वधितिं न तेजसे ।
स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत् ॥ १० ॥ १८

विशाम् । कविम् । विश्पतिम् । मानुषीः । इषः । सम् । सीम् । अ-
कृण्वन् । स्वऽधितिम् । न । तेजसे ।
सः । उत्ऽवतः । निऽवतः । याति । वेविषत् । सः । गर्भम् । एषु ।
भुवनेषु । दीधरत् ॥ १० ॥ १८ ॥

---

## भाषायाम्.

९. यह्वस्य (=महतः) परिज्मनः (=परितो गन्तुः सर्वजगद्व्यापिनः) अग्नेः तिस्रः समिधः (="प्रकाशिकाः पार्थिववैद्युतसूर्यरूपास्तिस्रस्तन्वः") उशिजः (=कामयमानानुपासकान्) अपुनन् (=अशोधयन्)। तासाम् एकां भुजं (=लोकानां पालयित्रीं सतीं) मर्त्ये (=मृत्युलोके पृथिवीरूपे) अदधुः (=निदधुरस्थापयन्)। [शिष्टे] द्वे जामिम् उ लोकम् उप ईयतुः (=मर्त्यलोकस्य बन्धुभूतम् अपरं लोकम् अन्तरिक्षलक्षणं जग्मतुः) ॥

अथवा तिस्रः समिध आघारसमिधौ द्वे अनुयाजसमिच्चैकेति। तासां समिधामेकामनूयाजसमिधं मर्त्ये इह लोके भोगहेतुमनूयाजपर्यन्तमदधुः। धारयन्ति। प्रजा वा अनूयाज इति प्रजात्वेनानूयाजानां संस्तवात् तदाश्रयत्वाच्चानूयाजसमिधः। इतरे द्वे समिधौ अन्तरिक्षे दिव्यभोगहेतू उपेयतुः। उपगच्छतः। त्रीन्परिधींस्तिस्रः समिध इति हि निगमः। इति सायणः ॥

"उ इति पादपूरणः ॥"

१०. कविं विशां विश्पतिं (=मेधाविनं मनुष्याणां राजानं) सीं (=तम् अग्निं) मानुषीरिषः (=मानुष्य इषः=मनुष्यसंबन्धीन्यन्नानि) स्वधितिं न तेजसे सम् अकृ-

९. महान् [ आणि ] परि-व्यापी अग्नीच्या [ ज्या ] तीन अ-मर प्रकाशमान तनू त्या भक्तिमान् उपासकांला पावन करित्या झाल्या. त्यांतून एक पालन करणारी जी तिला मृत्युलोकीं स्थापिते झाले. [ दुसऱ्या ] दोघी [ मृत्युलोकाचा] बंधु [ जो दुसरा ] लोक त्याप्रत गेल्या.

9. The three immortal bright forms of the great and pervading Agni purified the loving [worshippers]. One of them [that is] liberal they established on mortal earth. The other two went to the sister world.

१०. जनांच्या त्या जनपतीस, तरवारीला धारेसाठीं तीक्ष्ण केल्या]प्रमाणें, मानवी अन्नें तीक्ष्ण करितीं झालीं. तो उंच प्रदेशांमधून [ आणि ] नीच प्रदेशांमधून व्यापीत व्यापीत जातो. तो या भुवनाच्या पोटीं गर्भ धारण करवो.

10. Him, the wise king of the people, human nourishments did whet like a sword for sharpness. He goes over heights and depths filling [all]. May he impregnate these creatures.

९. 'त्रैलोक्यभर ज्याची गति असा जो अग्नि, त्याच्या तीन विभूति आहेत; या ह्या कीं पृथिवीवर विस्तवाच्या रूपानें प्रसिद्ध आहे ती एक, अन्तरिक्षांत विजेच्या रूपानें दृष्टीस पडते ती दुसरी, आणि द्युलोकांत सूर्यरूपानें दृष्टीस पडते ती तिसरी. यांतून एक विभूति उपासक लोकांनीं पृथिवीवर स्थापिली आणि दुसऱ्या दोन विभूति आकाशांत जाऊन राहिल्या.'

'पावन करित्या झाल्या' म्हणजे प्राचीन काळापासून करीत आल्या आहेत.

१०. 'तीक्ष्ण करितीं झालीं' = 'सम् अकृण्वन्.' म्हणजे प्रबळ करितीं झालीं. अग्नि मूळचा प्रबळ तर खराच, पण उपासक जनांनीं त्याला हविरन्नें दिलीं तेव्हां तो पाजळलेली तरवार जशी शत्रूला कापिते त्याप्रमाणें शत्रूला कापून टाकण्यास समर्थ झाला आहे.

'भुवनाच्या पोटीं गर्भ धारण करवो' = 'एषु भुवनेषु गर्भं दीधरत्.' म्ह० हीं जीं या पृथिवीवरील भूतें त्यांच्या पोटीं गर्भ राहील असें करो.

**स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु नानदन्न सिंहः ।**
**वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥११**

सः । जिन्वते । जठरेषु । प्रजज्ञिऽवान् । वृषा । चित्रेषु । नानदत् । न । सिंहः ।
वैश्वानरः । पृथुऽपाजाः । अमर्त्यः । वसु । रत्ना । दयमानः । वि । दाशुषे ॥ ११ ॥

**वैश्वानरः प्रत्नथा नाकमारुहद्दिवस्पृष्ठं भन्दमानः सुमन्मभिः ।**
**स पूर्ववज्जनयञ्जन्तवे धनं समानमज्मं पर्येति जागृविः ॥ १२ ॥**

वैश्वानरः । प्रत्नऽथा । नाकम् । आ । अरुहत् । दिवः । पृष्ठम् । भन्दमानः । सुमन्मऽभिः ।
सः । पूर्वऽवत् । जनयन् । जन्तवे । धनम् । समानम् । अज्मम् । परि । एति । जागृविः ॥ १२ ॥

---

ण्वन् (=तैक्ष्ण्यार्थम् असिं यथा संस्कुर्वन्ति तथा समकुर्वन्) । स उद्वतो निवतो वेविषत् याति (=उच्छ्रायवतो नीचैर्भाववतश्च प्रदेशान् अतिशयेन व्याप्नुवन् गच्छति)। स एषु भुवनेषु गर्भं दीधरत् (=एतानि भुवनानि भूतजातानि यथा गर्भं धारयन्ति तथा करोतु) ॥

स एषु भुवनेषु गर्भमरण्या दीधरत् अधारयत् । इति सायणः ॥

---

## भाषायाम्.

११. प्रजज्ञिवान् (=प्रकर्षेण ज्ञातवान्) वृषा (=वीरः) स चित्रेषु जठरेषु (=विचित्रेषु नानारूपेषूदरेषु) नानदत् सिंहो न (=अत्यर्थं शब्दं कुर्वन् सिंह इव) जिन्वते (=वर्धते) । पृथुपाजाः (=विस्तीर्णतेजा) अमर्त्यो दाशुषे वसु रत्ना वि दयमानः (=हविर्दत्तवते यजमानाय धनानि रत्नानि च प्रयच्छन्) वैश्वानरो [जठरेषु जिन्वते] ॥

१२. वैश्वानरः सुमन्मभिर्भन्दमानः (=प्रशस्तैः स्तोतृभिः स्तूयमानः सन्) दिवः पृष्ठं नाकं (=द्युलोकस्य पृष्ठभूतं स्वर्गं) प्रत्नथा (=चिरंतनः कश्चिदिव) आ अरुहत् (=आरुहत्) । जागृविः (=जागरूकः) स पूर्ववत् जन्तवे धनं जनयन् (=पूर्वेभ्य ऋषिभ्य इव धनमुत्पादयन् सन्) समानम् अज्मं परि एति (=सर्वेषां देवानां साधारणं मार्गम् आकाशलक्षणं सूर्यरूपेण परिगच्छति) ॥

११. तो प्रज्ञावान् वीर विचित्र उदरांत, महानाद करणाऱ्या सिंहाप्रमाणें, वृद्धिंगत होतो. विस्तीर्ण तेजोयुक्त असा मृत्युरहित वैश्वानर जो हविर्दात्या यजमानाला पुष्कळ धन [आणि] संपत्ति देतो [ तो वृद्धिंगत होतो. ]

१२. वैश्वानर [उत्पन्न होतांच] तो सत्कवींनीं स्तविला होत्साता, [ एकाद्या ] वृद्धासारिखा द्युलोकाचें पृष्ठ जो स्वर्ग त्यावर चढला. तो जागरूक [ वैश्वानर ] प्राचीन लोकांसाठीं जसें [ धन मिळवून देत असे त्या]प्रमाणें जनासाठीं धन मिळवून देत देत [सर्वदेव]साधारण मार्गानें परिभ्रमण करितो.

11. He the wise hero grows in the various stomachs even as the roaring lion,—Vais'vânara of far-stretching splendor [and] immortal,conferring wealth and riches on the sacrificer [grows in the various stomachs].

12. Vais'vânarà, praised by the great poets,ascended heaven the summit of the sky, like an old man. He the watchful one, creating wealth for the creatures as for ancient beings, goes round the common course.

१२. ' [ सर्वदेव]साधारण मार्ग '= ' समानम् अज्मम्.' म्हणजे ज्या मार्गानें वरुण, अश्वी, उषा इत्यादिक सर्व देव प्रातःकाळी उगवून पश्चिमेकडे भ्रमण करितात त्या मार्गानें.

ऋतावानं यज्ञियं विप्रमुक्थ्य१मा यं दधे मातरिश्वा दिवि क्षयम्।
तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे ॥१३॥

ऋतऽवानम् । यज्ञियम् । विप्रम् । उक्थ्यम् । आ । यम् । दधे ।
मातरिश्वा । दिवि । क्षयम् ।
तम् । चित्रऽयामम् । हरिऽकेशम् । ईमहे । सुऽदीतिम् । अग्निम् ।
सुविताय । नव्यसे ॥ १३ ॥

शुचिं न यामन्निषिरं स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधम्।
अग्निं मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिनं बृहत् १४

शुचिम् । न । यामन् । इषिरम् । स्वःऽदृशम् । केतुम् । दिवः । रोचनऽस्थाम् । उषःऽबुधम् ।
अग्निम् । मूर्धानम् । दिवः । अप्रतिऽस्कुतम् । तम् । ईमहे । नमसा ।
वाजिनम् । बृहत् ॥ १४ ॥

---

## भाषायाम्.

१३. ऋतावानं (=सत्यवन्तं) यज्ञियं (=पूज्यं) विप्रं (=मेधाविनम्) उक्थ्यं (=प्रशस्यं) दिवि क्षयं (=द्युलोके निवसन्तं) यम् [अग्निं] मातरिश्वा आ दधे (=मातरिश्वा नाम देवः स्वर्गादाहृत्य पृथिव्यां स्थापितवान्) तं चित्रयामं (=नानाविधगमनं) हरिकेशं (=पिङ्गलार्चिषं) सुदीतिं (=शोभनदीप्तिमन्तम्) अग्निं नव्यसे सुविताय (=नवतराय धनाय) [वयम्] ईमहे (=याचामहे) ॥

१४. शुचिं (=शुद्धं) यामन् (=यामनि=यज्ञे) इषिरं (=गमनवन्तं) स्वर्दृशं (=सूर्यसदृशं) दिवः केतुं (=द्युलोकस्य ध्वजं) रोचनस्थां (=रोचमाने द्युलोकस्योपरितने प्रदेशे तिष्ठन्तम्) उषर्बुधम् (=उषसि प्रबुध्यमानं) दिवो मूर्धानं (=द्युलोकस्य शिरोभूतम्) अप्रतिष्कुतम् (=अप्रतिहतं) वाजिनं (=प्रबलं) तम् अग्निं बृहत् नमसा (=बृहता स्तोत्रेण) ईमहे (=याचामहे) ॥

१३. ज्या सत्यवान्, पूज्य, मेधावी, स्तुत्य आणि द्युलोकनिवासी [ अग्नी]ला मातरिश्वा [ पृथिवीवर ] स्थापिता झाला, त्या चित्रगामी, पिंगलकेशी [ आणि ] उत्तमतेजस्वी अग्नीला आम्ही अ- ंत नूतन धनासाठीं प्रार्थितों.

१४. पवित्र आणि यज्ञांत पल, आणि सूर्याप्रमाणें दीप्तिमा-, द्युलोकाचा ध्वज, द्युलोकांतील दीप्यमान प्रदेशीं असणारा, प्रभातकाळीं जागृत होणारा, द्युलोकाचा माथा, अप्रतिहत [ आणि] बळ असा जो अग्नि, त्याला मोठें स्तोत्र म्हणून आम्ही प्रार्थितों.

13. We pray for the newest wealth that Agni of the veriegated path, of tawny hair, [and] excellent brightness, full of truth, worthy of worship, wise, praiseworthy and residing in heaven, whom Mâtaris'-vâ established [on earth].

14. Pure, and ènergetic in the sacrifice, resembling the sun, the banner of heaven, placed on the brilliant regions of the sky, awaking in the early morning, the pinnacle of heaven, irresistible [and] mighty—we entreat that Agni with a great hymn.

---

१३. 'मातरिश्वा.' सू. ६१ मं. १ आणि त्याजवरील टिपा पहा.

१४. या मंत्रांत बहुतकरून सगळे शब्द अग्नीचे विशेषणवाचक आहेत.

'द्युलोकाचा ध्वज' = 'केतुं दिवः' म्हणजे द्युलोकांत सूर्यादिकांचीं जीं अनेक तेजें त्यांतें दाखविणारा, त्यांचा सूचक.

'द्युलोकांतील देदीप्यमान प्रदेशीं असणारा' = 'रोचनस्थाम्' म्हणजे सूर्यरूपानें द्युलोकाच्या अत्यंत उंच प्रदेशीं फिरणारा.

'प्रभात काळीं जागृत होणारा' = 'उषर्बुधम्.' म्हणजे याचें आह्वान करण्यासाठीं प्रातःकाळीं सगळे लोक ज्याला पेटवितात असा.

'द्युलोकाचा माथा' = 'दिवो मूर्धानम्.' म्हणजे द्युलोकांतील जीं अनेक तेजें त्यामध्यें श्रेष्ठतेजोभूत असा.

मन्द्रं होतारं शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिम् ।
रथं न चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद्राय ईमहे ॥१५॥१९

मन्द्रम् । होतारम् । शुचिम् । अद्वयाविनम् । दमूनसम् । उक्थ्यम् । विश्वऽचर्षणिम् ।
रथम् । न । चित्रम् । वपुषाय । दर्शतम् । मनुःऽहितम् । सदम् । इत् । रायः । ईमहे ॥ १५ ॥ १९ ॥

## भाषायाम्.

१५. मन्द्रम् (=आह्लादकरं प्रियं ) शुचिं (=शुद्धम् ) अद्वयाविनम् (=अकुटिलं) दमूनसं ( =दमेभ्यो गृहेभ्यो हितम् ) उक्थ्यं ( =प्रशस्यं ) विश्वचर्षणिं ( =विश्वस्य द्रष्टारम् ) [ एतादृशं ] होतारं रथं न चित्रं (=रथवन्नानावर्णं ) वपुषाय दर्शतं ( =रूपार्थे दर्शनीयं सुन्दररूपं) मनुर्हितं (=मनुष्येभ्यः कल्याणम् [ अग्निं ] सदम् इत राय ईमहे ( =सदैव धनानि याचामहे ) ॥

## सूक्तम् ३–२३७.

विश्वामित्र ऋषिः । वैश्वानरोऽग्निर्देवता । जगती छन्दः ॥

वैश्वानराय पृथुपाजसे विपो रत्ना विधन्त धरुणेषु गातवे ।
अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषत् ॥१

वैश्वानराय । पृथुऽपाजसे । विपः । रत्ना । विधन्त । धरुणेषु । गातवे ।
अग्निः । हि । देवान् । अमृतः । दुवस्यति । अथ । धर्माणि । सनता । न । दूदुषत् ॥ १ ॥

## भाषायाम्.

१. पृथुपाजसे ( =बहुतेजसे ) वैश्वानराय धरुणेषु गातुं ( =यज्ञेषु गायनाय ) विपः ( =विपश्चितो ) रत्ना विधन्त (=रत्नानि अविधन्त=स्तोत्राणि परिचरन्ति कुर्वन्ति ) । हि ( =यस्मात्कारणात् ) अमृतः ( =मरणरहितः ) अग्निर्देवान् दुवस्यति ( =हविषां प्रदानेन परिचरति ) । अथ ( =अत एव ) धर्माणि ( =यज्ञकरणादीन धर्मान् ) [ कोपि ] सनता न दूदुषत् ( =सातत्येन न=कदापि न नाशयितुं शक्नुयात् ) ॥

१५. प्रिय, शुद्ध, निष्कपट, मायाळू, स्तुत्य आणि विश्वदर्शी होता, रथाप्रमाणें अनेक वर्णांचा, रूपानें सुंदर, आणि मनुष्यहितकारी असा जो अग्नि त्याजपाशीं आम्ही सदैव संपत्ति याचितों.

15. We always pray for wealth [Agni] the dear, pure, sincere, kind, praiseworthy and all-seeing invoker, many-coloured like a chariot, handsome in his body, and beneficent to mankind.

---

## सूक्त ३–२३७.

ऋषि–विश्वामित्र. देवता–वैश्वानर अग्नि. वृत्त–जगती.

## HYMN 3-237.

To *Agni Vais'vânara*. By *Vis'vâmitra*. Metre—*Jagatî*.

१. विस्तीर्णतेजोयुक्त जो वैश्वानर, त्याजप्रीत्यर्थ विद्वान् लोक यज्ञांत गाण्याकरितां स्तोत्रें रचितात. कारण अमर अग्नि देवांची उपासना करितो. म्हणूनच कोणी कधींहि धर्मांचा नाश करूं शकणार नाहीं.[१]

1. For Vais'vânara shining far and wide wise men prepare hymns to sing [them] in sacrifices. For immortal Agni worships the gods. Hence no one shall ever destroy the ordinances.

१. 'कधींहि...... नाहीं'= 'सनता न.' सनता ही 'सनत्' शब्दाची तृतीया आहे.

अन्तर्दूतो रोदसी दस्म ईयते होता निषत्तो मनुषः पुरोहितः।
क्षयं बृहन्तं परि भूषति द्युभिर्देवेभिरग्निरिषितो धियावसुः ॥ २ ॥

अन्तः। दूतः। रोदसी इति। दस्मः। ईयते। होता। निऽसत्तः। मनुषः। पुरःऽहितः।
क्षयम्। बृहन्तम्। परि। भूषति। द्युऽभिः। देवेभिः। अग्निः। इषितः। धियाऽवसुः॥ २ ॥

केतुं यज्ञानां विदथस्य साधनं विप्रासो अग्निं महयन्त चित्तिभिः।
अपांसि यस्मिन्नधि संदधुर्गिरस्तस्मिन्त्सुम्नानि यजमान आ चके ॥ ३ ॥

केतुम्। यज्ञानाम्। विदथस्य। साधनम्। विप्रासः। अग्निम्। महयन्त। चित्तिऽभिः।
अपांसि। यस्मिन्। अधि। सम्ऽदधुः। गिरः। तस्मिन्। सुम्नानि। यजमानः। आ। चके॥ ३ ॥

---

## भाषायाम्.

२. [देवानां] दूतः [सन्] दस्मः (=पराक्रमकारी) [अग्नी] रोदसी अन्तः (=द्वयोर्लोकयोर्मध्ये) ईयते (=गच्छति)। मनुषः (=यजमानस्य) होता पुरोहितः (=आह्वानकारी पुरोहितः सन्) निषत्तः (=निषण्णो भवति यज्ञगृहे)। देवेभिरिषितः (=देवैः प्रेषितो) धियावसुः (=धीमानग्निर्द्युभिः=तेजोभिर्) बृहन्तं क्षयं (=महान्तं स्वकीयं गृहं यागमण्डपरूपं) परि भूषति (=अलंकुरुते)॥

३. यज्ञानां केतुं (=प्रज्ञापकं ध्वजं) विदथस्य साधनम् (=उपासनायाः साधनभूतम्) अग्निं विप्रासः (=विप्रा विपश्चितश्) चित्तिभिः (=कर्मभिर्) महयन्त (=पूजयन्ति)। यस्मिन् [अग्नावधि] गिरः (=स्तोतारः) अपांसि संदधुः (=संदधते) यजमानस्तस्मिन् सुम्नानि (=सुखानि) आ चके (=कामयते)॥

२. [ देवांचा ] दूत [ होऊन ] पराक्रमी [ अग्नि ] द्युलोक आणि पृथिवी यांमध्यें फिरतो, मनुष्याचा होता [ आणि ] पुरोहित [होऊन] तो [ यज्ञगृहीं ] बसतो. देवांनीं पाठविलेला मेधावी अग्नि [ आपलें ] मोठें घर प्रकाशांनीं अलंकृत करितो.

2. [As the divine] messenger the victorious hero passes through the two worlds. [As] man's invoker [and] priest he sits down. Wise Agni sent by the gods adorns [his] great home with effulgence.

३. यज्ञांचा ध्वज [ आणि ] उपासनेचें साधन असा जो अग्नि त्याला विद्वान् लोक कर्मांनीं पूजितात. स्तवनकर्ते उपासकजन ज्याचे ठायीं [ सर्व ] कर्में अर्पण करितात, त्या [ अग्नी]च्या ठायीं यजमान सुखांची वांछा करितो.

3. Banner of sacrifices [and] the means of worship, the wise worship Agni with [their] works. The sacrificer hopes for comforts in him in whom the prayerful direct their works.

---

२. ' [ आपलें ] मोठें घर ' = ' बृहन्तं क्षयम्.' म्हणजे यज्ञगृह जें तेंच.

३. अग्नीच्या द्वारें उपासना होत असे म्हणून त्याला उपासनेचें साधन असें म्हटलें आहे. यज्ञांचा ध्वज म्हणजे जेथें जेथें यज्ञ होतो तेथें तेथें अग्नि नाहीं असें होणें नाहीं.

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः॥४

पिता । यज्ञानाम् । असुरः । विपःऽचिताम् । विऽमानम् । अग्निः ।
वयुनम् । च । वाघताम् ।
आ । विवेश । रोदसी इति । भूरिऽवर्पसा । पुरुऽप्रियः । भन्दते ।
धामऽभिः । कविः ॥ ४ ॥

चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ५।१०.

चन्द्रम् । अग्निम् । चन्द्रऽरथम् । हरिऽव्रतम् । वैश्वानरम् । अप्सुऽस-
दम् । स्वःऽविदम् ।
विऽगाहम् । तूर्णिम् । तविषीभिः । आऽवृतम् । भूर्णिम् । देवासः ।
इह । सुऽश्रियम् । दधुः ॥ ५ ॥ १० ॥

---

## भाषायाम्.

४. यज्ञानां (=यज्ञियानां यजनकर्तॄणां) पिता विपश्चितामसुरः (=विदुषां सहायो) वाघतां विमानं वयुनं च (=ऋत्विजां कर्मसाधनं ज्ञानसाधनं च) [एतादृशः] अग्निर् भूरिवर्पसा (=नानाविधरूपे) रोदसी (=द्यावापृथिव्यौ) आ विवेश (=प्रविशति)। पुरुप्रियः (=बहुभिरिष्टः) कविः (=मेधावी) [स] धामभिर्भन्दते (=कर्मभिः स्तूयते सेव्यते)॥

५. चन्द्रम् (=आह्लादकरं) चन्द्ररथम् (=आह्लादको रथो यस्य तं) हरिव्रतं (=? "पिङ्गलवर्णम्") अप्सुसदम् (=उदकेषु अन्तरिक्षे विद्युद्रूपेण सीदन्तं) स्वर्विदं (=स्वर्गस्य लम्भयितारं दातारं) विगाहं (=सर्वत्र व्याप्तं) तूर्णिं (=शीघ्रगामिनं) तविषीभिरावृतं (=बलैरावेष्टितं) भूर्णिं (=वेगवन्तं) सुश्रियं (=शोभनदीप्तिं) वैश्वानरम् [अग्निं] देवासः (=देवा) इह (=अस्मिन्मृत्युलोके) दधुः (=स्थापितवन्तः)॥

४. यजकांचा पिता, विद्वानांचा सहाय, ऋत्विजांचें कर्मसाधन आणि ज्ञानसाधन [असा जो] अग्नि, [त्या]नें नानारूप द्यावापृथिवींस व्यापून टाकिलें आहे. बहुप्रिय [आणि] प्रज्ञावान् अग्नि कर्मांच्या योगानें स्तविला जातो.

५. आह्लादकारक ज्याचा रथ, पिंवळा ज्याचा वर्ण, उदकांत ज्याचा वास असा जो स्वर्गदायी आह्लादकारक [आणि] सर्वव्यापी, शीघ्रगामी, बलवेष्टित, वेगवान्, [आणि] सुश्री [अग्नि] वैश्वानर, त्याला देव या लोकीं स्थापिते झाले.

4. Father of the sacrificers, ally of the poets, source of action and of knowledge to the priests, Agni has pervaded earth and heaven of many forms. Dear to many, learned Agni is worshipped with works.

5. The gods have established in this world [Agni] Vais'vânara of glittering [colour], who has a glittering chariot, who is tawny-coloured, whose seat is in [the celestial] waters, who is the giver of heaven, [who is] deep, [and] quick, who is waited upon by powers, [and] [who is] impetuous [and] full of great glory.

५. 'उदकांत.' म्हणजे 'अंतरिक्षांत.'

अग्निर्देवेभिर्मनुषश्च जन्तुभिस्तन्वानो यज्ञं पुरुपेशसं धिया ।
रथीरन्तरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः ॥६॥

अग्निः । देवेभिः । मनुषः । च । जन्तुऽभिः । तन्वानः । यज्ञम् । पुरुऽपेशसम् । धिया ।
रथीः । अन्तः । ईयते । साधदिष्टिऽभिः । जीरः । दमूनाः । अभिशस्तिऽचातनः ॥ ६ ॥

अग्ने जरस्व स्वपत्य आयुन्यूर्जा पिन्वस्व समिषो दिदीहि नः ।
वयांसि जिन्व बृहतश्च जागृव उशिग्देवानामसि सुक्रतुर्विपाम् ॥७॥

अग्ने । जरस्व । सुऽअपत्ये । आयुनि । ऊर्जा । पिन्वस्व । सम् । इषः । दिदीहि । नः ।
वयांसि । जिन्व । बृहतः । च । जागृवे । उशिक् । देवानाम् । असि सुऽक्रतुः । विपाम् ॥ ७ ॥

---

## भाषायाम्.

६. देवेभिर्मनुषश्च जन्तुभिः (=देवैः साकं मनुर्जातस्यापत्यैः=मानवैश्च साकं) पुरुपेशसं (=नानारूपं) यज्ञं धिया (=प्रज्ञया) तन्वानः (=कुर्वन्) जीरः (=क्षिप्रकारी) दमूनाः (= गृहेभ्यो हितः=कृपालुः) अभिशस्तिचातनः (=यज्ञविघ्नकारिणां नाशयिता) [एतादृशः] अग्निः साधदिष्टिभिः (=साधितयज्ञैर्देवैः) [सहितो] रथीः (=तेषां नायकः सन्) अन्तरीयते (=द्यावापृथिव्योर्मध्ये गच्छति) ॥

७. हे अग्ने, [त्वं] स्वपत्ये (=शोभनापत्ययुक्ते) आयुनि (=आयुषि विषये =तादृशमायुर्दातुं) जरस्व (=स्तुतो भव=स्तुतः सन् सुसंतानयुक्तमायुर्देहि) ऊर्जा (=हविरन्नेन) पिन्वस्व (=सिच्यस्व=पुष्टो भव) । इषो नः सं दिदीहि (=अस्मभ्यमन्नादिसंपदः संदीप्यस्व=वयं संपदो यथा लभेमहि तथा त्वं दीप्यस्व) च (=अपि च) हे जागृवे (=सदैव जागरूक), बृहतो [यजमानस्य] (=तदर्थं) वयांसि जिन्व (=अन्नानि देहि) । [त्वं] देवानाम् उशिक् (=देवान् कामयमानो) विपां [च] सुक्रतुः (=विदुषां च सुष्ठुकर्ता फलदाता) असि ॥

६. देवांसहित आणि मानवांसहित नानारूप यज्ञाला [आपल्या] प्रज्ञेनें संपादणारा, क्षिप्रगामी, 'दयाळू [ आणि ] यज्ञविघ्नकारी शत्रूंचा नाशक असा अग्नि यज्ञसाधक [ देवां ]सह [ त्यांचा ] नायक [ होत्साता ] द्यावापृथिवींमधून फिरतो.

६. Agni who learnedly performs the multiform sacrifice in company with the gods and with the sons of man, who is impetuous, kind, [and] a destroyer of the reviling infidels, passes through heaven and earth at the head of [the gods] who fulfil the sacrifice.

७. हे अग्नी, तूं सुसंतानयुक्त आयुष्य [ देण्या]विषयीं स्तविला जा. तूं हविरन्नानें पुष्ट हो. [ आणि ] चांगला प्रकाशून आम्हांला अन्नसंपत्ति दे. आणि हे जागरूक [ अग्नी ], मोठ्या [ यजमाना]ला अन्नें दे. तूं देवांवर प्रीति करणारा [ आणि ] विद्वान् [ मनुष्यां]चा फलदाता आहेस.

7. Be thou praised, o Agni, in respect of [long] life accompanied by good progeny. Be thou nourished with sacrificial food. [And] do thou shine wealth unto us. And give food to the great [sacrificer], o ever-wakeful [Agni]. Thou art a lover of the gods and a patron of the learned.

६. 'अग्नि देवांस घेऊन येतो आणि मनुष्यांचा यज्ञ सिद्धीस नेऊन त्या त्या देवांसहित पुनः फिरत फिरत द्यावापृथिवींमधून जातो,' असा भावार्थ.

विश्पतिं यह्वमतिथिं नरः सदा यन्तारं धीनामुशिजं च वाघताम् ।
अध्वराणां चेतनं जातवेदसं प्र शंसन्ति नमसा जूतिभिर्वृधे ॥८॥

विश्पतिम् । यह्वम् । अतिथिम् । नरः । सदा । यन्तारम् । धीनाम् । उशिजम् । च । वाघताम् ।
अध्वराणाम् । चेतनम् । जातऽवेदसम् । प्र । शंसन्ति । नमसा । जूतिऽभिः । वृधे ॥ ८ ॥

विभावा देवः सुरणः परि क्षितीरग्निर्बभूव शवसा सुमद्रथः ।
तस्य व्रतानि भूरिपोषिणो वयमुप भूषेम दम आ सुवृक्तिभिः॥९॥

विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव । शवसा । सुमत्ऽरथः ।
तस्य । व्रतानि । भूरिऽपोषिणः । वयम् । उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥ ९ ॥

---

## भाषायाम्.

८. विश्पतिं (=विशां पतिं राजानं) यह्वं (=महान्तम्) अतिथिं धीनां यन्तारं (=स्तुतीनां नियामकं) वाघतां चोशिजम् (=उपासकानां कामयितारम्) अध्वराणां चेतनं (=यज्ञानां प्रज्ञापकं) जातवेदसं (=जातानां वेदितारं सर्वज्ञम्) [अग्निं] वृधे (=स्वकीयाभिवृद्धये) नरः (=मनुष्या) नमसा जूतिभिः (=नमस्कारेण स्तोत्रैश्च) प्र शंसन्ति (=प्रकर्षेण स्तुवन्ति) ॥

९. विभावा (=दीप्तिमान्) देवः (=द्योतमानः) सुरणः (=अतिशयेन कमनीयः) सुमद्रथः (=शोभनरथः) अग्निः शवसा (=बलेन) क्षितीः (=लोकान्) परि बभूव (=परिवेष्टयति)। भूरिपोषिणः (=बहूनां पोषयितुस्) तस्य व्रतानि (=चरितानि) दमे (=गृहे) सुवृक्तिभिः (=शोभनैः स्तोत्रैः) उप भूषेम (=प्रकाशयेम)॥

८. महान्, राजा, अतिथि, स्तुतींचा नियामक, आणि उपासकांवर प्रीति करणारा, यज्ञांचा प्रकाशक, [ आणि ] सर्वज्ञ असा जो अग्नि त्याला मनुष्यें, [ आपल्या ] अभिवृद्धीसाठीं नमस्कारानें [आणि] स्तुतींनीं सदैव स्तवितात.

९. दीप्तिमान्, देदीप्यमान, अत्यंत रमणीय, [ आणि ] सुरथ [ असा जो ] अग्नि [ तो ] लोकांला वेष्टून राहतो. त्या बहुपोषक अग्नीचीं चरितें आम्ही [ आपल्या ] घरीं चांगल्या स्तोत्रांनीं प्रसिद्ध करूं.

8. Men for prosperity ever praise with obeisance and hymns [Agni] the great king of men, the guest, the controller of hymns and the lover of worshippers, the light of sacrifices, who knows all beings.

9. Brilliant, divine, comely, [and] having a beautiful chariot, Agni has surrounded the world with [his] strength. Let us with good hymns proclaim in the house the deeds of that great giver of nourishments.

---

८. 'स्तुतींनीं'=' जूतिभिः'. 'जूति' शब्दाचा मूळ अर्थ प्रेरणा असा आहे. या ठिकाणीं मोक्षानें प्रेरिलेल्या म्हणजे उच्चारिलेल्या ज्या स्तुति त्या, असा अर्थ विवक्षित दिसतो.

वैश्वानर तव धामान्या चके येभिः स्वर्विदभवो विचक्षण ।
जात आपृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना १०

वैश्वानर । तव । धामानि । आ । चके । येभिः । स्वःऽवित् । अभवः । विऽचक्षण ।
जातः । आ । अपृणः । भुवनानि । रोदसी इति । अग्ने । ता । विश्वा । परिऽभूः । असि । त्मना ॥ १० ॥

वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥११॥२१॥

वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअपस्यया । कविः ।
उभा । पितरा । महयन् । अजायत । अग्निः । द्यावापृथिवी इति । भूरिऽरेतसा ॥ ११ ॥ २१ ॥

---

## भाषायाम्.

१०. हे वैश्वानर, हे विचक्षण ( =सर्वदर्शिन् ), येभिः स्वर्विद् अभवः ( =यैस्तेजोभिः स्वर्गस्य दाताभवस् ) [ तानि ] तव धामानि (=तेजांसि) आ चके (=अभिष्टौमि ) । जातः ( =जातमात्रो ) भुवनानि रोदसी ( =सर्वाणि भूतजातानि द्यावापृथिव्यौ च ) आ अपृणः ( =आपूरयः ) । हे अग्ने, ता विश्वा ( =तानि विश्वानि भुवनानि तत्सर्वं जगत् ) त्मना परि भूरसि ( =तस्य सर्वस्य जगतः परिग्रहीता रक्षिता भवसि ) ॥

११. वैश्वानरस्य दंसनाभ्यः ( =पराक्रमवतीभ्यः क्रियाभ्यः सकाशात् ) बृहत् (=कार्यं जायते ) । कविः (=मेधावी ) [ स ] एकः (=एक एव ) स्वपस्यया (=सुष्ठुचतुरतया ) अरिणात् ( =धनं ददाति ) । अग्निः उभा पितरा ( =उभौ जगतः पितरौ ) भूरिरेतसा द्यावापृथिवी ( =बहुरेतस्कौ द्यावापृथिव्यौ ) महयन् ( =पूजयन्= तयोः पूजयिता ) अजायत ॥

१०. हे वैश्वानरा, हे प्राज्ञा, तूं ज्या [ तेजांच्या योगा]नें स्वर्गदायी झाला आहेस तीं तुझीं तेजें मी स्तवितों. तूं उत्पन्न होतांच सकल भुवनांला आणि द्यावापृथिवींला भरून टाकिता झालास. हे अग्नी, तीं सर्व भुवनें तूं एकटा पोशितोस.

११. वैश्वानराच्या पराक्रमांनीं मोठें [ कार्य होतें ]. मेधावी [ वैश्वानर ] एकटा आपल्या चातुर्यानें [ धन ] देत असतो. बहुरेतस्क जे उभय आईबाप द्यू आणि पृथिवी, त्यांचा मान राखणारा असा अग्नि उत्पन्न झाला.

10. O all-seeing Vais'vânara, I praise thy splendors with which thou hast become the giver of heaven. So soon as born thou didst fill all creation, [fill] earth and heaven. Thou art the protector, o Agni, of that universe.

11. Much [is achieved] by the exploits of Vais'vânara. [That] wise [one] alone gives with his great skill. Agni was born to honour both the prolific parents, heaven and earth.

---

११. 'बहुरेतस्क उभय आईबाप' =' भूरिरेतसा उभा पितरा.' म्हणजे ज्यांपासून असंख्य प्राण्यांची उत्पत्ति होते असे जे जगताचे आईबाप पृथिवी आणि द्यू, ते.

## सूक्तम् ४-२३८.

आप्रीसूक्तमिदम् । सू. १८८ ।
विश्वामित्र ऋषिः । त्रिष्टुभ् छन्दः ॥

**समित्संमित्सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्वः ।**
**आ देव देवान्यजथाय वक्षि सखा सखीन्त्सुमना यक्ष्यग्ने ॥ १ ॥**

समित्ऽसमित् । सुऽमनाः । बोधि । अस्मे इति । शुचाऽशुचा । सुऽमतिम् । रासि । वस्वः ।
आ । देव । देवान् । यजथाय । वक्षि । सखा । सखीन् । सुऽमनाः । यक्षि । अग्ने ॥ १ ॥

**यं देवासस्त्रिरहन्नायजन्ते दिवेदिवे वरुणो मित्रो अग्निः ।**
**सेमं यज्ञं मधुमन्तं कृधी नस्तनूनपाद्घृतयोनिं विधन्तम् ॥ २ ॥**

यम् । देवासः । त्रिः । अहन् । आऽयजन्ते । दिवेऽदिवे । वरुणः । मित्रः । अग्निः ।
सः । इमम् । यज्ञम् । मधुऽमन्तम् । कृधि । नः । तनूऽनपात् । घृतऽयोनिम् । विधन्तम् ॥ २ ॥

---

### भाषायाम्.

१. समित्समित् ( =अत्यर्थं समिद्धस्त्वम् ) अस्मै सुमना बोधि ( =अस्मभ्यम् अनुकूलमनस्को भव ) । शुचाशुचा ( =अत्यन्ततेजसा ) वस्वः सुमतिं रासि ( =धनविषयकम् अनुग्रहं प्रयच्छ कुरु ) । हे देव, देवान् यजथाय ( =यज्ञाय ) आ वक्षि ( =आवह ) । हे अग्ने, सुमनाः ( =अनुकूलमनस्कस्त्वं ) सखा ( =मित्रभूतः सन् ) सखीन् ( =मित्रभूतान् देवान् ) यक्षि ( =यजस्व=पूजय ) ॥

२. हे तनूनपात्, यं [ यज्ञं ] दिवेदिवे (=प्रतिदिनं) त्रिरहन् (=अहनि त्रिवारं) वरुणो मित्रोऽग्निश् [ चेत्येते ] देवासः ( =देवा ) आजयन्ते ( =तन्वते ) स [ त्वं ]१ (=यस्मात्ते देवास्तथा कुर्वन्ति अतः कारणात् ) विधन्तं (=परिचरन्तं त्वां पूजयन्तम्) इमं नो यज्ञं मधुमन्तं घृतयोनिं [ च ] कृधि ( =मधुयुक्तं घृतोदरं च कुरु=माधुर्यपुष्ट्युपेतमेघोदकपरिणामं कुरु ) ॥

१. अस्य नो यज्ञस्य मधुरं घनवत्पोषकं च मेघोदकमेव फलं भवत्विति भावः ॥

**अपश्चिदेष विभ्वो३ दमूनाः प्र सध्रीचीरसृजद्विश्वश्चन्द्राः ।**
**मध्वः पुनानाः कविभिः पवित्रैर्द्युभिर्हिन्वन्त्यक्तुभिर्धनुत्रीः ॥**

अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् । विश्वऽचन्द्राः ।
मध्वः । पुनानाः । कविऽभिः । पवित्रैः । द्युऽभिः । हिन्वन्ति । अक्तुऽभिः । धनुत्रीः ॥ १६ ॥

**अनु कृष्णे वसुधिती जिहाते उभे सूर्यस्य मंहना यजत्रे ।**
**परि यत्ते महिमानं वृजध्यै सखाय इन्द्र काम्या ऋजिप्याः ॥ १७**

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । जिहाते इति । उभे इति । सूर्यस्य । मंहना । यजत्रे इति ।
परि । यत् । ते । महिमानम् । वृजध्यै । सखायः । इन्द्र । काम्याः । ऋजिप्याः ॥ १७ ॥

---

वान् अस्ति ) । दीद्यानः (=दीप्तिमान् इन्द्रो ) नृभिः ( =सहायभूतैर्मरुद्भिः सहितः सन् ) सूर्यम् उषसं गातुं ( =पृथिवीम् ) अग्निं च साकं ( =सममेव युगपदेव ) अजनत् ( =उदपादयत् ) ॥

---

## भाषायाम्.

१६. एष दमूनाः ( =गृहस्य हितकारी ) [ इन्द्रो ] विभ्वः (= व्याप्ताः ) सध्रीचीः ( =संगता ) विश्वश्चन्द्राः ( =विश्वस्याह्लादयित्रीः ) पवित्रैः कविभिर्मध्वः पुनानाः (=शोधयितृभिरग्निवायुसूर्यरूपैर्मेधाविभिः सोमान् शोधयित्रीर् ) अपश्चित् ( =उदकान्यपि ) प्रासृजत् (=प्रकर्षेण सृष्टवान् ) । धनुत्रीः ( =शीघ्रगमनशीलास्ता ) द्युभिरक्तुभिः ( =रात्रौ दिवा च ) हिन्वन्ति ( =सर्वान् स्वस्वव्यापारेषु प्रेरयन्ति ) ॥

१७. सूर्यस्य मंहना (=सूर्यरूपस्य तव महिम्ना ) उभे कृष्णे ( =कृष्णवर्णे ) वसुधिती ( =धननिधिभूते ) यजत्रे ( =यजनार्हे अहश्च रात्रिश्चेति द्वे=अहोरात्रौ ) अनु जिहाते ( =पुनःपुनरावृत्य वर्तेते ) यत् (=यस्मात् कारणात् ) हे इन्द्र, काम्याः (=तव प्रिया ) ऋजिप्याः ( =शीघ्रगतयः ) सखायो [ मरुतो ] वृजध्यै ( =शत्रून् हिंसितुं ) परि ते महिमानं [ तिष्ठन्ति ] (=तव महिमानं=महान्तं त्वां परितिष्ठन्ति ) ।

हा कृपाळू इंद्र विस्तीर्ण, सर्वाल्हादक, [आणि] नि- करणाऱ्या कवींच्या द्वारें सो- ला निर्मळ करणारीं उद- उत्पन्न करिता झाला. तीं ामी उदकें दिवसा आणि जगाला आपापल्या का- प्रेरितात.

16. That friend Indra created even the Waters, far-spread, collected, pleasing to all, [ and ] cleaning the sweet somas through the purifying wise ones. The quick waters send forth [ all beings to their work] nights and days.

१७. धननिधि [ आणि ] पू- असे कृष्णवर्ण अहोरात्र जे ोहि एकामागून एक भ्रमण करितात ते सूर्य[रूप तुज इन्द्रा]- या माहात्म्यानें [करितात]; का- ण कीं हे इन्द्रा, [ शत्रूंचा ] ना- । करण्यासाठीं ते तुझे प्रिय वेग- वान् मित्र तुझ्या महिम्याच्या स- भोंताली मिळतात.

17. By the greatness of [thee], the resplendent one, both the dark [Night and Day], treasures of blessings [and] worthy of being honoured, follow each the other; because thy beloved friends, the impetuous [ Maruts], attend, o Indra, on thy greatness to destroy [the enemies].

---

१६. सूर्य, उषा, पृथिवी आणि अग्नि यांस इंद्रानें निर्माण केलीं असें वरच्या मंत्रांत सांगितलें. यांत सांगतो कीं, उदकांलाहि इन्द्रानेंच उत्पन्न केलें. येथें ‘ उदकें ’ म्ह० सायणाचार्यांनीं भौतिक वृष्ट्युदकें असा अर्थ केला आहे; तरीहि अंतरिक्ष असा अर्थ केला अस- तां चांगला जुळेल (‘ अपः’ शब्दाचा अंतरिक्ष हा अर्थ वेदांत प्रसिद्ध आहे ). सें केलें तर ‘ संगत ’ म्हणजे महावका- शरूपानें विस्तृत, ‘ विश्वश्चन्द्र ’ म्हणजे चंद्र आणि तारे इत्यादिकांनीं आल्हाद- कारक, ‘ मध्वः ’ म्हणजे मधुर, ‘ पवित्राः कवयः ’ म्ह. आपल्या प्रकाशानें सर्व शुद्ध करणारे जे सूर्यरूपानें उगवणारे स- विता, मित्र, अग्नि इत्यादि देव, ते; आ- णि ‘ हिन्वन्ति ’ म्ह० प्रकाशादिकेंकरून हित करितात; असा अर्थ.

१७. ‘ मरुतांच्या साहाय्यानें तूं वृ- त्रादिक शत्रूंचा नाश करितोस म्हणूनच रात्र आणि दिवस हीं आपआपलीं कामें करितात.’

पतिर्भव वृत्रहन्त्सूनृतानां गिरां विश्वायुर्वृषभो वयोधाः ।
आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्य ॥

पतिः । भव । वृत्रऽहन् । सूनृतानाम् । गिराम् । विश्वऽआयुः । वृषभः । वयःऽधाः ।
आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ १८ ॥

तमङ्गिरस्वन्नमसा सपर्यन्नव्यं कृणोमि सन्यसे पुराजाम् ।
द्रुहो वि याहि बहुला अदेवीः स्वश्च नो मघवन्त्सातये धाः ॥१९

तम् । अङ्गिरस्वत् । नमसा । सपर्यन् । नव्यम् । कृणोमि । सन्यसे पुराऽजाम् ।
द्रुहः । वि । याहि । बहुलाः । अदेवीः । स्वरिति स्वः । च । नः । मघऽवन् । सातये । धाः ॥ १९ ॥

यस्मात् कारणात् त्वं वृत्रादीन् महत्साहाय्येन नाशयसि अतः कारणात् त महिम्ना अहोरात्री स्वस्वकार्यं कुरुत इति भावः ॥

## भाषायाम्.

१८. हे वृत्रहन् ( =वृत्रस्य हन्तरिन्द्र ), विश्वायुः ( =सर्वायुर्युक्तो ) वयोधाः ( =बलस्य दाता ) वृषभः (= स्वामी ) [ त्वं ] सूनृतानां गिरां पतिः ( =प्रियाणाम् अस्मदीयानां स्तुतीनां पालकः ) भव । शिवेभिः सख्येभिः ( =कल्याणकरैः प्रसादैः सह ) नः आ गहि ( =अस्मान् आगच्छ ) । महान् [ त्वं ] सरण्यन् महीभिरूतिभिः ( =सत्वरो महतीभी रक्षाभिः सह ) [ अस्मान् आगच्छ ] ॥

१९. [ हे इन्द्र ], तं [ त्वा ] ( =अतस्त्वाम् ) अङ्गिरस्वत् नमसा सपर्यन् ( =अङ्गिरस इव नमस्कारेण पूजयन्नहं ) पुराजां ( =पुरातनकाले जातं पुरातनं त्वां ) सन्यसे नव्यं कृणोमि ( =संभजनार्थं नूतनं करोमि=नूतनोसीति कृत्वा स्तोत्रेण संभजे ) । [ अतस्त्वं ] बहुला अदेवीर्द्रुहः ( =देवान् अपूजयतो बहून् शत्रून् ) वि याहि ( =विशेषेण मारय ) च ( =अपि च ) हे मघवन्, नः सातये स्वः धाः ( =अस्मभ्यं संभोगार्थं धनं देहि ) ॥

हे वृत्रघ्न [ इन्द्रा ], स-
न्न [ आणि ] अन्नदाता
सा जो तूं, तो [आमच्या]
ोत्रांचा पति हो. तूं क-
कारक मैत्र्यांसह आम्हांप्रत
हान् तूं महा संरक्षणांसहित
र [ ये ].

18. Full of all life do thou, o killer of Vṛitra, thou the hero that givest food, become the lord of [our] sweet prayers. Do thou the great one come running unto us with great protections.

१९. हे इन्द्रा, म्हणून तुज
ातनाला मी अंगिरसांप्रमाणें न-
मस्कारानें पूजून संभजनासाठीं नवा
करितों. [ तर तूं ] अनेक जे दे-
वहीन शत्रु त्यांस मारून टाक
आणि हे मघवन्, आम्हांला उप-
भोगासाठीं वैभव दे.

19. Therefore worshipping thee as the Angirases [did] with obeisance, I make thee the ancient one new for to honour. Annihilate the many godless enemies and give us, o Maghavan, prosperity for to enjoy.

१९. अङ्गिरसांविषयीं सू. १ मं. ६ आणि सू. ५१ मं. ३ टीप पहा.

**मिहः पावकाः प्रतता अभूवन्त्स्वस्ति नः पिपृहि पारमासाम्।**
**इन्द्र त्वं रथिरः पाहि नो रिषो मक्षूमक्षू कृणुहि गोजितो नः ॥२०॥**

मिहः । पावकाः । प्रऽतताः । अभुवन् । स्वस्ति । नः । पिपृहि । पारम् । आसाम् ।
इन्द्र । त्वम् । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । कृणुहि । गोऽजितः । नः ॥ २० ॥

**अदेदिष्ट वृत्रहा गोपतिर्गा अन्तः कृष्णाँ अरुषैर्धामभिर्गात्।**
**प्र सूनृता दिशमान ऋतेन दुरश्च विश्वा अवृणोदप स्वाः ॥ २१ ॥**

अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अन्तरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् ।
प्र । सूनृताः । दिशमानः । ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ २१ ॥

सन्यसे सनीयसे सनतराय विशेषेण पुरातनायेति पाश्चात्याः। सन्यसे संभजनार्थम् इति नित्यं सायणः ॥

---

## भाषायाम्.

२०. [ हे इन्द्र ], पावकाः (=शोधयित्र्यो) मिहः (=आपः) प्रतता अभूवन् (=लोके प्रकर्षेण प्रसृता अभूवन्)। नः (=अस्मान्) आसां (=तासां) पारं (=तीरं) पिपृहि (=नय)। हे इन्द्र, रथिरः (=रथी) त्वं नः (=अस्मान्) रिषः (=शत्रोः सकाशात्) पाहि। मक्षूमक्षू (=अतिशीघ्रं) नः गोजितः कुरु (=गवां जेतॄन्कुरु=गवादिधनयुक्तान् कुरु) ॥

२१. वृत्रहा (=वृत्रस्य हन्ता) गोपतिः (=गवां स्वामी) [ इन्द्रो ] गा अदेदिष्ट (=अदिशत्=अप्रयच्छत्)। [ स ] कृष्णान् अन्तः अरुषैर्धामभिः (=आरोचमानैस्तेजोभिः कृष्णवर्णेषु शत्रुषु गोहर्तृषु मध्ये) गात् (=अगच्छत्)। ऋतेन (=सत्यरूपेण यज्ञेन साधनेन) सूनृताः (=प्रिया गाः) प्र दिशमानः (=अङ्गिरोभ्यः प्रयच्छन् स) स्वा विश्वा दुरः (=स्वकीयानि सर्वाणि द्वाराणि) अप अवृणोत् (=उद्घाटयत्) ॥

[ हे इंद्रा ], पावन क-
प्रवाह जिकडेतिकडे प्रसृत
तूं आम्हांला सुखरूपपणें
पैल तीरीं ने. हे इन्द्रा, रथी
जो तूं तो आम्हांला संकटा-
रक्ष. आम्हांला लवकर ल-
गाई जिंकणारे कर.

२१. वृत्रघातक गोस्वामी इ-
गाई मुक्त करून देता झाला,
काळया शत्रूंच्या मध्यें आपल्या
रोचमान तेजांनीं प्रवेश करिता
झाला. तो सत्य उपासनेच्या योगानें
प्रिय गाईला मुक्त करून देऊन
आपलीं सर्व कवाडें उघडीं करिता
झाला.

20. The purifying waters became spread far and wide. Take us to the other end of them with safety. Do thou the charioteer, o Indra, preserve us from harm, make us quickly and quickly conquerors of cows.

21. The killer of Vritra [and] lord of the cows made a present of the cows; he entered among the black [enemies] with his resplendent lustre. By the true worship he, making a present of the cows, threw open all his own doors.

---

२०. 'तूं मेघोदकरूप गाई सोडवून इतकी विपुळ मेघवृष्टि करविलीस, कीं लोकांला आपण बुडून मरूं अशी भीति पडली. तर हे इंद्रा, तूं आम्हांला शत्रूच्या इत्यादिक संकटापासून रक्ष आणि आम्हांला गोधन प्राप्त करून दे.'

२१. 'इंद्र काळ्या शत्रूंच्या (मेघावरोध करणाऱ्या असुरांच्या) आंत भेदून जाऊन त्यांचीं द्वारें आपलींशीं करून त्यांतून गाई मोकळ्या करिता झाला. हें सर्व खरा धर्म अशी जी यज्ञरूप सेवा तिच्या योगानें करिता झाला.'

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥२२॥
शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥ ८ ॥

## भाषायाम्.

२२. अस्मिन् भरे वाजसातौ ( =संग्रामे युद्धे च ) मघवानं ( =धनवन्तं ) नृतमं ( =शूरतमम् ) इन्द्रं शुनं ( =सुखमुद्दिश्य ) हुवेम ( =आह्वयेम ) । [ अस्मात् ] शृण्वन्तम् उग्रं ( =प्रबलं ) वृत्राणि घ्नन्तं ( =शत्रून् घ्नन्तं ) धनानां संजितं ( =सम्यग्जेतारं ) [ तं ] समत्सु ( =युद्धेषु ) ऊतये ( =रक्षणाय ) [ हुवेम ] ॥

## सूक्तम् ३२-२६६.

विश्वामित्र ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

इन्द्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत्ते ।
प्रप्रुथ्या शिप्रे मघवन्नृजीषिन्विमुच्या हरी इह मादयस्व ॥ १ ॥
इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यंदिनम् । सवनम् ।
चारु । यत् । ते ।
प्रऽप्रुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य । हरी इति ।
इह । मादयस्व ॥ १ ॥

## भाषायाम्.

१. हे सोमपते ( =सोमस्याधिपते ), इमं सोमं पिब । यत् ( =यस्मात् ) माध्यंदिनं सवनं ( =मध्याह्नसंबन्धि सवनं “ निष्केवल्याख्यं शस्त्रं ” ) ते ( =तव ) चारु ( =प्रियं ) [ वर्तते ] । हे मघवन्, हे ऋजीषिन् ( =गतसारसोमवन्निन्द्र ), हरी विमुच्य ( =अश्वौ रथाद्विमुच्य ) शिप्रे प्रप्रुथ्य ( =तयोर्हनू अन्नत्येन मासेन पूरयित्वा इह मादयस्व ( =सोमपानेन हृष्टो भव ) ॥

२२. धनसमृद्ध [ आणि ] अत्यंत शौर्यवान् इंद्राला सुखाकरितां या लढाईत [ आणि ] समरांगणांत आम्ही बोलावूं. ऐकून घेणारा, प्रबळ [ आणि ] शत्रूंला मारणारा [आणि] लूट जिंकणारा असा जो इंद्र, त्या]ला आम्ही साहाय्यासाठीं युद्धांमध्यें बोलावूं.

22. Let us invoke for blessing in this fight, in [this] struggle, Indra possessed of wealth [and] most brave—[invoke] in battles for protection mighty [Indra] who hears [our prayer], who slays the enemies, who conquers booties.

---

## सूक्त ३२–२६६.

ऋषि–विश्वामित्र. देवता–इंद्र. वृत्त–त्रिष्टुप्.

१. हे सोमपती इन्द्रा, तूं हा सोम पी, कारण तुला मध्याह्नेचें सवन प्रिय आहे. हे मघवन्, हे ऋजीषी, तूं येथें घोडे सोडून, त्यांच्या हनवट्या [अन्नानें] भरून हर्ष पाव.

## HYMN 32–266.

To *Indra*. By *Vis'râmitra*. Metre—*Trishṭubh*.

1. Drink this soma, o Indra lord of soma! since the midday-rite is dear to thee. O Maghavan, o drinker of the soma, unharness the horses, fill the chins and be gratified here.

---

१. 'हनवट्या '=' शिप्रे.' हा अर्थ सायणानुसार केला आहे. दुसरा संभवत नाहीं, हनवट्या भरून म्हणजे तोंड भरून असें तात्पर्य असावें.

'ऋजीषी.' सू. ६४ मं. १२ पहा.

**गवाशिरं मन्थिनमिन्द्र शुक्रं पिबा सोमं ररिमा ते मदाय**
**ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व ॥ २**

गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् । ररिम । ते । मदाय ।
ब्रह्मऽकृता । मारुतेन । गणेन । सऽजोषाः । रुद्रैः । तृपत् । आ वृषस्व ॥ २ ॥

**ये ते शुष्मं ये तविषीमवर्धन्नर्चन्त इन्द्र मरुतस्त ओजः ।**
**माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥ ३**

ये । ते । शुष्मम् । ये । तविषीम् । अवर्धन् । अर्चन्तः । इन्द्र । मरुतः । ते । ओजः ।
माध्यंदिने । सवने । वज्रऽहस्त । पिब । रुद्रेभिः । सऽगणः । सुऽशिप्र ॥ ३ ॥

---

## भाषायाम्.

२. हे इन्द्र, [ त्वं ] गवाशिरं ( =गव्यस्य पयस आशीर्मिश्रणं यस्मिंस्तं ) शुक्रं ( =श्वेतं ) मन्थिनं ( =" मन्थसंयुक्तं ") [ सोमं ] पिब । [ इमं ] सोमं ते मदाय ररिम ( =तव हर्षाय प्रायच्छाम ) । ब्रह्मकृता रुद्रैर्मारुतेन गणेन सजोषाः ( =तव स्तोत्रकृता रुद्रपुत्राणां मरुतां गणेन युक्तः सन् ) तृपत् ( =आ तृप्तेः ) आ वृषस्व ( =सर्वतो जठरे सिञ्च=पिब ) ॥

३. हे वज्रहस्त ( =वज्रधारिन् ), हे सुशिप्र ( =सुहनुमन् ) इन्द्र, ये मरुतस्ते ( =तव ) शुष्मं ( =तेजः ) ये [ तव ] तविषीं ( =बलं ) [ ये ] [ त्वाम् ] अर्चन्तः ( =स्तुवन्तः सन्तः ) ते ( =तव ) ओजः ( =कीर्तिम् ) अवर्धन् ( =अवर्धयन्=वर्धयन्ति ) तै रुद्रेभिः ( =रुद्रपुत्रैर्मरुद्भिः ) सगणः ( =संगतः सन् ) माध्यंदिने सवने [ सोमं ] पिब ॥

. हे इंद्रा, तूं गोरसयुक्त, [म]न्थयुक्त [ आणि ] शुभ्र सोम पी. [आम्ही] [ हा ] सोम तुला माद[ना]करितां म्हणून अर्पण केला आहे. [स्त]ोत्रकारी जो रुद्रपुत्र मरुतांचा [ग]ण, त्यांजबरोबर तूं तृप्ति होईप[र्यं]त पी.

३. हे इन्द्रा, जे तुझें तेज [वाढवितात ], जे [ तुझें ] बळ [वा]ढवितात, जे मरुत् [ तुला ] [स्]तविणारे होत्साते तुझा पराक्रम [ वाढवितात ], त्या रुद्रपुत्रांसहित तूं, हे वज्रहस्ता, हे सुमुखा [ इन्द्रा ], मध्याह्नीच्या सवनांत [ सोम ] पी.

2. Drink, o Indra, the white juice mixed with milk, mixed with barley meal. We have offered it for thy exhilaration. Accompanied by the praying troop of the Maruts—the sons of Rudra—drink thou to thy satisfaction.

3. Drink, o Indra, thou armed with the thunderbolt, thou possessed of a handsome chin [the soma] in the midday worship in company with the Maruts the sons of Rudra who promote thy strength, who [promote] thy power, [and who ] with hymns [ promote ] thy glory.

---

२. 'मन्थयुक्त '=' मन्थिनम्. ' म्हणजे ज्यांत मंथ घातला आहे असा.

'स्तोत्रकारी.' म्हणजे इंद्राचें स्तवन करणारा. सू. ५२ मं. १५ पहा.

त इन्न्वस्य मधुमद्विविप्र इन्द्रस्य शर्धो मरुतो य आसन् ।
येभिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥ ४ ॥

ते । इत् । नु । अस्य । मधुऽमत् । विविप्रे । इन्द्रस्य । शर्धः । मरुतः
ये । आसन् ।
येभिः । वृत्रस्य । इषितः । विवेद । अमर्मणः । मन्यमानस्य । मर्म

मनुष्वदिन्द्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।
स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि॥५॥९

मनुष्वत् । इन्द्र । सवनम् । जुषाणः । पिब । सोमम् । शश्वते
वीर्याय ।
सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णाः ।
सिसर्षि ॥ ५ ॥ ९ ॥

---

## भाषायाम्.

४. ये मरुतः इन्द्रस्य शर्धः ( =बलं सेनारूपम् ) आसन् ते इत् नु अस्य मधुमत् विविप्रे ( =त एव माधुर्योपेतं वाक्यं क्षिप्रं यथा तथा प्रैरयन् ) । येभिर् [ मरुद्भिर् ] इषितः (=प्रेरितः सन्) [स इन्द्रः] अमर्मणो मन्यमानस्य (=न कोपि मम हन्तेत्यभिमन्यमानस्य ) वृत्रस्य मर्म ( =यस्मिन्स्थाने मरुतौ सत्यां स मरिष्यति तद् ) विवेद ( =अज्ञासीत् ) ॥

५. हे इन्द्र, मनुष्वत् सवनं जुषाणः ( =मनोर्यथा पूर्वं सेवितवानसि तथेदानीं मम यज्ञं सेवमानः ) शश्वते वीर्याय ( =शाश्वताय वीरबलाय=तादृशबलप्राप्तये ) सोम पिब । सः ( =तादृशः=पीतसोमस्त्वं ) हे हर्यश्व ( =हरिदश्ववन्निन्द्र ), यज्ञैः (=यजनीयैः ) सरण्युभिः ( =वेगवद्भिर् ) [ मरुद्भिः सह ] आ ववृत्स्व ( =आगच्छ ) अपो अर्णा सिसर्षि [ च ] ( =अन्तरिक्षादुदकं प्रापय च ) ॥

मरुत् इंद्राचें सैन्य
च मरुत् त्याला मधुर व-
लले; ज्या [ मरुतां]नीं
[ इन्द्र ] आपण अमर
मसें समजणाऱ्या वृत्राचें
गता झाला.

हे इन्द्रा, तूं मनू[च्या य-
ाणें [ माझा ] यज्ञ सेवन
सोम पी आणि अखंड वी-
पाव. हे पीताश्व [ इन्द्रा ],
गवन्त [ आणि ] यजनीय
मरुतां]सहित येथें ये [ आणि ]
तरिक्षापासून उदकांची वृष्टि

4. Those very Maruts who became the army of Indra, spoke sweetly to him; encouraged by whom he discovered the vulnerable point of Vritra who thought he was invulnerable.

5. O Indra, accept thou [my] sacrifice as [thou didst that of] Manu, [and], drink the soma for to [receive] inexhaustible prowess. Then come thou hither, o thou possessed of tawny horses, in company with the impetuous [and] adorable [Maruts], [and] send forth the waters from the heavens.

त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँ इव प्रासृजः सर्तवाजौ ।
शयानमिन्द्र चरता वधेन वव्रिवांसं परि देवीरदेवम् ॥ ६

त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव ।
असृजः । सर्तवै । आजौ ।
शयानम् । इन्द्र । चरता । वधेन । वव्रिऽवांसम् । परि । देवीः ।
देवम् ॥ ६ ॥

यजाम इन्नमसा वृद्धमिन्द्रं बृहन्तमृष्वमजरं युवानम् ।
यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥ ७ ॥

यजामः । इत् । नमसा । वृद्धम् । इन्द्रम् । बृहन्तम् । ऋष्वम् । अजरम् ।
युवानम् ।
यस्य । प्रिये इति । ममतुः । यज्ञियस्य । न । रोदसी इति । महिमानम् । ममाते इति ॥ ७ ॥

---

## भाषायाम्.

६. हे इन्द्र, देवीः ( =द्योतमाना अपः ) परि वव्रिवांसं ( =परित आवृत्य वर्तमानं ) शयानम् ( =एकत्र निश्चलत्वेन वर्तमानम् ) अदेवं ( =देवहीनं देवानपूजयन्तं ) वृत्रं चरता वधेन ( =शीघ्रेण वज्रेण ) जघन्वान् ( =हतवान् ) त्वं यद् ( =यस्मात्कारणाद ) आजौ ( =युद्धे ) अत्यानिव ( =अश्वानिव ) अपः सर्तवै प्रासृजः ( =मेघोदकानि सर्तुं प्रमृष्टवान् मेघोदकानि प्रमृज्य तानि वर्धितवान् ) ॥

७. [ अतः कारणाद् ] वृद्धं ( =प्रवृद्धं ) बृहन्तं ( =महान्तम् ) ऋष्वं ( =स्तोतव्यम् ) अजरं ( =जरारहितं ) युवानम् ( =अत एव नित्यतरुणं ) [ त्वाम् ] इन्द्रं नमसा यजाम इत् ( =नमस्कारोपलक्षितेन हविरन्नेन कुशिका वयं पूजयाम एव ) ॥ यज्ञियस्य यस्य [ तव ] महिमानं ( =महत्त्वं ) प्रिये रोदसी ( =प्रियतमे द्यावापृथिव्यौ ) न ममतुः [ न ] ममाते ( =न परिच्छेत्तुमशक्नुतां नाप्यधुना शक्नुतः ) ॥

६. Thee, o Indra, who having slain Vritra didst send forth the waters to flow even as horses in a battle—[having slain] with the swift thunderbolt the godless [Vritra] that lay hemming the divine waters;—

[६. हे] इन्द्रा, तूं जो वृत्राला [मारून यु]द्धांत घोडे सोडिल्याप्र[माणें उद]कें सोडून वाहविता झा[लास, आणि] आपो ] देवींला वेष्टून रा[हणाऱ्या] देवहीन वृत्राला वेगवान् [वज्रानें] जो मारिता झालास ],

7. We will worship with oblation thee Indra who art powerful, great, praiseworthy, free from old age, ever young, adorable Indra whose greatness dear Heaven and Earth did not measure [and] do not measure.

[७. त्या] त्या तुज प्रवृद्ध, महान्, [स्तुत्य,] अजर [ आणि ] नित्य त[रुण इ]न्द्राला आम्हीं हवीनें भजूं; [ज्या पू]जनीय [ इन्द्रा]चा महिमा [प्रिय] द्यावापृथिवींनीं मोजला नाहीं–[आणि] द्यावापृथिवी मोजीत नाहींत ].

६, ७. 'हे इन्द्रा, ज्यापेक्षां तूं वृ[त्रा]ला मारून उदकवृष्टि करिता झालास, [त्या]पेक्षां आम्ही तुजला भजावें. कारण तुझा महिमा मोजण्यास द्यावापृथिवीहि समर्थ नाहींत.'

इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति वि
दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ।

इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि । देवाः । न । मि
विश्वे ।
दाधार । यः । पृथिवीम् । द्याम् । उत । इमाम् । जजान । सू
उषसम् । सुऽदंसाः ॥ ८ ॥

अद्रोघ सत्यं तव तन्महित्वं सद्यो यज्जातो अपिबो ह सोमं
न द्याव इन्द्र तवसस्त ओजो नाहा न मासाः शरदो वरन्त ॥

अद्रोघ । सत्यम् । तव । तत् । महिऽत्वम् । सद्यः । यत् । जात
अपिबः । ह । सोमम् ।
न । द्यावः । इन्द्र । तवसः । ते । ओजः । न । अहा । न । मासा
शरदः । वरन्त ॥ ९ ॥

## भाषायाम्.

८. इन्द्रस्य पुरूणि (=बहूनि) सुकृता कर्म (=सुकृतानि सुष्ठु कृतानि कर्माणि चरितानि) व्रतानि (=शासनानि च) विश्वे देवा [अपि] न मिनन्ति (=न हिंसन्ति)। यः सुदंसाः (=सुपराक्रम इन्द्र) इमां पृथिवीम् उत द्यां दाधार (=दधार) सूर्यमुषसं [च] जजान ॥

९. हे अद्रोघ (=द्रोहरहित), तव तत् (=एतद्वक्ष्यमाणं) महित्वं (=महत्त्वं) सत्यं (=नित्यं) [भवति] यत् [त्वं] जातः सद्यः सोमम् अपिबो (=जातमात्रायैव तुभ्यं जनाः पानार्थं सोमं प्रार्पितवन्तः)। हे इन्द्र, तवसस्ते ओजः (=बलवतस्तव तेजो) न द्यावः (=न तेजस्विनो द्युप्रदेशा) न अहा (=न दिवसा) न मासा न शरदः (=न वर्षाण्यपि) वरन्त (=वारयितुं शक्नुवन्ति) ॥
तेजस्विनस्तव तेजः सर्वाणि तेजांस्यतिगच्छतीत्यर्थः ॥

इंद्राचीं अनेक सुचरितें [] पराक्रम सर्व देव भंगूं नाहींत. जो या पृथिवीला घूला धारण करिता झाला, [जो] महा पराक्रमी [इंद्र] [आणि] उषेला उत्पन्न झाला.

8. Not all the gods can harm the many well-done deeds [and] the laws of Indra; who supported this Earth and Heaven [and who], performer of great deeds, created the sun [and] the dawn.

हे द्रोहरहित [इन्द्रा], [य]ा महिमा सत्य आहे, कीं तूं [जन्म]ाबरोबर सोम पिता झालास. [इन्द्र]ा, तुज बलवंताचें तेज द्यु[प्र]कास आणि दिवसांस आणि [मा]सांस आणि वर्षांसहि अनिवार्य [आ]हे.

9. This greatness of thine is indisputable, o benign [Indra], that thou didst drink the soma as soon as thou wast born. Not the brilliant regions of heaven, nor the days, nor months, nor years can withstand thy splendor, thou the mighty one.

९. 'झाल्याबरोबर सोम पिता झा[ला]स'=' सद्यो जातो अपिबः सोमम्.' [म्ह]णजे, 'तूं जन्मतांच तुझें देवत्व आणि देवश्रेष्ठत्व लोकांनीं मान्य करून तुला सोम अर्पण करून तुझी उपासना करायास आरंभ केला.'

त्वं सद्यो अपिबो जात इन्द्र मदाय सोमं परमे व्योमन्।
यद्ध द्यावापृथिवी आविवेशीरथाभवः पूर्व्यः कारुधायाः॥१०॥

त्वम्। सद्यः। अपिबः। जातः। इन्द्र। मदाय। सोमम्। प॒ विऽओमन्।
यत्। ह। द्यावापृथिवी इति। आ। अविवेशीः। अथ। अ॒ पूर्व्यः। कारुऽधायाः॥ १०॥ १०॥

अहन्नहिं परिशयानमर्ण ओजायमानं तुविजात तव्यान्।
न ते महित्वमनु भूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाः॥११॥

अहन्। अहिम्। परिऽशयानम्। अर्णः। ओजायमानम्। तुवि॒ जात। तव्यान्।
न। ते। महिऽत्वम्। अनु। भूत्। अध। द्यौः। यत्। अन्यया स्फिग्या। क्षाम्। अवस्थाः॥ ११॥

---

## भाषायाम्.

१०. हे इन्द्र, त्वं जातः सद्यो मदाय परमे व्योमन् सोममपिबः ( =जातमात्र ए हर्षप्राप्तयेऽतिशयोत्कृष्ट आकाशे सोमं पीतवानसि )। यद्ध ( =यदा च ) द्यावापृथिवी ( =द्यावापृथिव्यौ ) आ अविवेशीः (=सर्वत्र प्रविष्टवानसि ) अथ ( =तदानीं ) पूर्व्यः कारुधाया अभवः ( =पुरातनः स्तोतृणां धारयिताभवः ) ॥

११. हे तुविजात ( =जातप्रबल ), तव्यान् ( =तवीयान्=अतिशयेन बलवांस्त्वम् ) अर्णः परिशयानं ( =मेघोदकं परितो वर्तमानम् ) [ अत एव ] ओजायमानं ( =बलमाचरन्तम्=आत्मानं बलवन्तं मन्यमानम् ) अहिं ( =वृत्रकृपमहिम् ) अहन् ( =हतवानसि )। यद् ( =यदा ) अन्यया स्फिग्या ( =एकतरया कक्ष्या ) क्षाम् अवस्थाः ( =पृथिवीम् अवच्छादयतिष्ठः ) अध ( =तदानीं ) ते महित्वं ( =तव महिमानं ) द्यौर्नानु भूत् ( =द्यौर्नान्वभवत् न ज्ञातवान् ) ॥

वृत्रं हत्वा त्वं यदा स्वकीयं महत् स्वरूपम् अदर्शयस्तदानीम् एकयैव कक्ष्या समग्रां पृथिवीम् आच्छादितवानसि इदं तव शरीरं द्योरपि महत्तरं सत् तेनापि न ज्ञातपरिमाणमित्यर्थः॥

हे इंद्रा, तूं जन्मतांच आकाशांत मादासाठीं सोम झालास. आणि तूं तेव्हां थिवीभर प्रवेश करून स्तो- पुरातन पोषणकर्ता झालास.

10. Thou didst for exhilaration drink the soma, o Indra, in the highest firmament so soon as thou wast born. And when thou didst wholly occupy the heaven and the earth, thou didst become the ancient supporter of the worshippers.

११. हे जातप्रबळ [ इन्द्रा ], ाय बळवान् असा जो तूं तो कासभोंतालीं निजून राहिले- [ आणि ] बळाचा डौल घा- ऱ्या अहीला मारिता झालास. जेव्हां एके टिरीनें पृथिवीला आ- ादून उभा राहिलास, तेव्हां तुझें ाशालत्व द्यूलाहि समजलें नाहीं.

11. O [Indra] born mighty, thou the mightiest one didst slay the Serpent that lay around the water and thought himself strong. The heaven did not find thy greatness when thou stoodst covering the earth with one hip.

---

१०. 'तूं जन्मतांच' आकाशांत अ- ब स्थानीं चढलास आणि तेथून त्वां कळ द्यावापृथिवींस व्यापिलें. तेव्हां क्षणीं लोक तुला सोम अर्पण करूं गले, आणि तूं स्तोतेजनांना पोषण- र्ता झालास.'

११. वृत्ररूप सर्पाला मारून जेव्हां इन्द्रानें आपलें मोठें स्वरूप प्रगट केलें, तेव्हां त्याच्या एका टिरीनें सर्व पृथिवी झांकली. उरलेलें शरीर द्युपेक्षांहि मोठें असल्यामुळें त्याचा अंत द्युला लागला नाहीं.

यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः ।
यज्ञेन यज्ञमव यज्ञियः सन्यज्ञस्ते वज्रमहिहत्य आवत् ॥ १२ ॥

यज्ञः । हि । ते । इन्द्र । वर्धनः । भूत् । उत । प्रियः । सुतऽसोमः ।
मियेधः ।
यज्ञेन । यज्ञम् । अव । यज्ञियः । सन् । यज्ञः । ते । वज्रम् । अहिऽहत्ये । आवत् ॥ १२ ॥

यज्ञेनेन्द्रमवसा चक्रे अर्वागैनं सुम्नाय नव्यसे ववृत्याम् ।
यः स्तोमेभिर्वावृधे पूर्व्येभिर्यो मध्यमेभिरुत नूतनेभिः ॥ १३ ॥

यज्ञेन । इन्द्रम् । अवसा । आ । चक्रे । अर्वाक् । आ । एनम् । सुम्नाय । नव्यसे । ववृत्याम् ।
यः । स्तोमेभिः । ववृधे । पूर्व्येभिः । यः । मध्यमेभिः । उत । नूतनेभिः ॥ १३ ॥

## भाषायाम्.

१२. हे इन्द्र, यज्ञो हि ते वर्धनो भूत् ( =तव बलस्य वर्धयिताभवत् ) उत ( =अपि च ) सुतसोमो मियेधः ( =अभिषुतसोमवत् पश्चादि हव्यं ) प्रियः ( =प्री- तिकरम्) [अभवत् ] । यज्ञियः ( =यज्ञार्हः ) [ सन् ] [ त्वं ] यज्ञेन यज्ञम् अव ( =यज्ञियं यज्ञस्य कर्तारं रक्ष ) । अहिहत्ये ( =वृत्रहनने ) यज्ञस्ते वज्रम् आवत् ( =तव वज्रम् अरक्षत् ) ॥

१३. यज्ञेन अवसा ( =हव्येन ) [ च ] इन्द्रम् [ उपासकजनः ] अर्वाक् आ चक्रे ( =स्वस्याभिमुखम् आवर्तयति ) । एनम् [ इन्द्रं ] नव्यसे सुम्नाय ( =अतिश- येन नूतनस्य सुखस्यानाय ) आ ववृत्याम् ( =अस्मत्समीपम् आवर्तयेयम् ) । य [ इन्द्रः ] पूर्व्येभिः स्तोमेभिर्ववृधे ( =पुरातनैः सूक्तैर्वृद्धबलो भवति ) यो मध्य- मेभिः ( =मध्यमकालसंबन्धिभिः स्तोत्रैर् ) [ ववृधे ] । उत ( =अपि च ) नूतनेभिः ( =अधुनातनैः स्तोत्रैर् ) [ वर्धते ] ॥

[illegible] इंद्रा, यज्ञ तुझें वळ[illegible]रा झाला, आणि ज्यांत [illegible]ादिला जातो असें हवन [illegible]य झालें. यज्ञार्ह होत्साता [illegible]च्या द्वारें यज्ञ करणाऱ्या [illegible]ाला रक्ष. यज्ञ तुझ्या वज्रा-[illegible]त्रहननाच्या वेळीं रक्षिता

12. A sacrifice became, o Indra, thy invigorator, and an offering accompanied by the soma [became] dear to thee. Through sacrifice do thou, worthy of sacrifice, protect the performer of a sacrifice. It was a sacrifice that helped thy thunderbolt in the destruction of the Serpent.

[illegible]३. यज्ञानें [ आणि ] हवीनें [illegible]ासकजन ] इंद्राला आपणा-[illegible] वळवितो. त्याला मी अत्यंत [illegible]न सुखाकरितां मजकडे वळ-[illegible]न; जो [ इंद्र ] पुरातन स्तो-[illegible]नीं वाढला, जो मध्यम [ स्तो-[illegible]]नीं आणि नूतन [ स्तोत्रां]-[illegible] वाढतो.

13. [ The worshipper ] brings Indra towards himself by means of sacrifice and oblation. May I turn him towards myself for the newest favour—him who grew strong by ancient hymns, who [grew] by medieval [hymns] and [who grows] by modern [hymns].

१२. यांत यज्ञ शब्दाचे 'यजन' [illegible]णि 'यजन करणारा' असे दोन अर्थ आले आहेत. यज्ञाचें माहात्म्य यांत दर्शविलें आहे.

**विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।**
**अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥ १४**

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् ।
इन्द्रम् । अह्नः ।
अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यान्तम् । उभये ।
हवन्ते ॥ १४ ॥

**आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।**
**समु प्रिया आववृत्रन्मदाय प्रदक्षिणिदभि सोमास इन्द्रम् ॥१५**

आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशम् । सि-
सिचे । पिबध्यै ।
सम् । ऊं इति । प्रियाः । आ । अववृत्रन् । मदाय । प्रऽदक्षिणित् ।
अभि । सोमासः । इन्द्रम् ॥ १५ ॥

---

## भाषायाम्.

१४. यद् (=यदा) धिषणा (=इन्द्रं स्तवानीति बुद्धिः) मा (=मां) विवे[ष] (=व्याप्नोति) [तदा] [अहं स्तुतिं] जजान (=उत्पादयामि) । पार्यादह्न (=शत्रुसंबन्धिनो दिवसात्पुरो युद्धदिनात्पुर) इन्द्रं स्तवै (=स्तवानि) यथा य[त्र] (=तस्मिन् दिने प्रसक्ते सति) [स] नः (=अस्मान्) अंहसः (=दुःखात्) पीपरत् (=पारं नयेत्) । नावेव यान्तं [तम्] उभये हवन्ते (=नद्यादिषु नौ कया गच्छन्तं पुरुषं यथोभयकूलवर्तिनो जना आह्वयन्ति तथा युद्धे वर्तमान उभयपक्षजनास्तमाह्वयन्ति) ॥

१५. आपूर्णः कलशः (=सोमेन परिपूर्णो द्रोणकलशः) सेक्ता कोशमिव (=उ[द]सेचको जलपात्रं यथा सिञ्चति जलेन पूरयति तथा) अस्य पिबध्यै (=इन्द्रा[य] पातुं) स्वाहा (=स्वाहेति शब्देन) सिसिचे (=सिक्तोस्ति) । प्रियाः सोमास (=सोमा) मदाय (=हर्षोत्पत्तये) प्रदक्षिणित् (=प्रादक्षिण्येन) इन्द्रम् अभि सम् उ आ अववृत्रन् (=इन्द्रं प्रति वर्तन्ताम्=अभिगच्छन्तु) ॥

जेव्हां स्तवन करण्याची इच्छा मनांत येते तेव्हांच [स्तवन] करीत असतों. मी युद्धाच्या दिवसा पूर्वींच [इंद्राची स्तुति करतों] कीं जेणें करून तो आ[पल्याला त्य]ा दिवशीं संकटाच्या पार [नेईल.] नावेंतून जाणाऱ्यासारिखा त्याप्रत दोनीकडचे लोक [हांक म]ारितात.

14. So soon as the desire to praise [him] seizes me I make a [hymn]. Let me praise Indra before the day of battle that he may save us from danger on that day. Both sides call to him as to one who goes in a boat.

[त]ानें प्यावा म्हणून, [सोमा]नें] भरलेला हा कलश [स्वाह]ा म्हणून ओतला जात आहे, [नावाडी पखा]ल ओतल्याप्रमाणें पिण्यासाठीं [ओ]तला जात आहे. प्रिय सोमरस [हर्ष] आणण्यासाठीं इंद्राप्रत प्रद[क्षिण]ा करून प्राप्त होओत.

15. A jar filled [with soma] is poured out with svâhâ for him to drink even as a waterman pours out a skin-bag. May the dear somas approach Indra, keeping him on their right, for his exhilaration.

न त्वा गभीरः पुरुहूत सिन्धुर्नाद्रयः परि षन्तो वरन्त ।
इत्था सखिभ्य इषितो यदिन्द्रा दृळ्हं चिदरुजो गव्यमूर्वम् ॥

न । त्वा । गभीरः । पुरुऽहूत । सिन्धुः । न । अद्रयः । परि । सन्तः । वरन्त ।
इत्था । सखिऽभ्यः । इषितः । यत् । इन्द्र । आ । दृळ्हम् । चित् । अरुजः । गव्यम् । ऊर्वम् ॥ १६ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥१७॥११

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १७ ॥ ११ ॥

---

## भाषायाम्.

१६. हे पुरुहूत इन्द्र (=बहुभिराहूतेन्द्र), यद् (=यदा) इषितः (=तव सखिभिरङ्गिरोभिः प्रेरितः सन्) दृळ्हं चित् (=अतिप्रबलमपि) गव्यम् ऊर्वम् (=गवां गोष्ठं पणिभिर्हृतानां मेघोदकरूपाणां गवां निरोधस्थानं) सखिभ्यः (=सखीनामङ्गिरसामर्थम्) इत्था आ अरुजः (=सम्यगभाङ्क्षीः) [तदा] न गभीरः सिन्धुः (=अगाधः समुद्रः) न [च] परि सन्तः (=परितो वर्तमाना) अद्रयः (=पर्वताः) त्वा (=त्वां) वरन्त (=वारयितुमशक्नुवन्) ॥

१७. अस्मिन् भरे वाजसातौ (=संग्रामे युद्धे च) मघवानं (=धनवन्तं) नृतमं (=शूरतमम्) इन्द्रं शुनं (=सुखमुद्दिश्य) हुवेम (=आह्वयेम)। [अस्मान्] शृण्वन्तम् उग्रं (=प्रबलं) वृत्राणि घ्नन्तं (=शत्रून् घ्नन्तं) धनानां संजितं (=सम्यग्जेतारं) [तं] समत्सु (=युद्धेषु) ऊतये (=रक्षणाय) [हुवेम] ॥

हे इंद्रा, सख्यांनीं उ-
ळेला होत्साता तूं जेव्हां
ये अति प्रबळ असाहि
ठा फोडिता झालास, ते-
हूता, अगाध समुद्राला
ार्य झालास, सभोंतालीं
या पर्वतांला अनिवार्य झा-

16. When prompted by thy friends, o Indra, thou didst for their benefit break open even the impregnable stall of the cows, neither the deep ocean, o thou invoked by many, nor the mountains that lay around, could, ward thee off.

. धनसमृद्ध [ आणि ]
शौर्यवान् इंद्राला सुखा-
ा लढाईत [ आणि ] स-
गणांत आम्ही बोलावूं. ऐकून
रा, प्रबळ [ आणि ] शत्रूंला
णारा [आणि] लूट जिंकणारा
असा जो इंद्र, त्या]ला आम्ही
हाण्यासाठीं युद्धांमध्यें बोलावूं.

17. Let us invoke for blessing in this fight, in [this] struggle Indra possessed of wealth [and] most brave—[invoke] in battles for protection mighty [Indra] who hears [our prayer], who slays the enemies, who conquers booties.

## सूक्तम् ३३-२६७.

"संवादो नदीभिर्विश्वामित्रस्योक्तिर्नीर्णाः । तत्र नदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः । षष्ठीसप्तम्योरित्यिन्द्रस्तुतिः" । अयमर्थः । "चतुर्थीषष्ठ्यष्टमीदशमीनां नदीवाक्यत्वात्तत्र एव ऋषयः । शिष्टानां विश्वामित्रवाक्यत्वात्स एव ऋषिः" ॥ इन्द्रो देवता ॥ अन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः॥

**प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।**
**गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥ १**

प्र । पर्वतानाम् । उशती इति । उपऽस्थात् । अश्वे इवेत्यश्वेऽइव ।
विसिते इति विऽसिते । हासमाने इति ।
गावाऽइव । शुभ्रे इति । मातरा । रिहाणे इति । विऽपाट् । शुतुद्री ।
पयसा । जवेते इति ॥ १ ॥

---

### भाषायाम्.

१. उशती (=उशत्यौ वत्समिव समुद्रं कामयमाने) विपाट् शुतुद्री (=एतन्नामके नद्यौ) विषिते हासमाने अश्वे इव (=मन्दुरासकाशाद् विमुक्ते परस्परं स्पर्धमाने वडवे इव) मातरा (=मातरौ सवत्से) रिहाणे (=वत्सं लेढुमिच्छन्त्यौ) शुभ्रे गावेव (=शोभमाने गावाविव) पर्वतानाम् उपस्थात् (=उत्सङ्गात्) पयसा प्र जवेते (=उदकेन युक्ते त्वरया समुद्रं प्रति गच्छतः) ॥

पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव । स च पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः संभेदमाययावनुययुरितरे । अथोत्तितीर्षुर्विश्वामित्रोऽगाधजले ते नद्यौ दृष्ट्वोत्तरणार्थमाद्याभिस्तिसृभिरस्तुवाव ॥ इति सायणः ॥

## सूक्त ३३-२६७.

...१-३ विश्वामित्र; ४ ... विश्वामित्र; ६ नद्या; ...मित्र; ८ नद्या; ९ वि...; १० नद्या; ११-१३ ...मित्र. देवता—इन्द्र. वृत्त— ...; शेवटची ऋचा मात्र अ-

## HYMN 33-267.

To *Indra*. The *Rishis* are as follows: 1-3 *Vis'vâmitra*; 4 The *Rivers*; 5 *Vis'vâmitra*; 6 The *Rivers*; 7 *Vis'vâmitra*; 8 The *Rivers*; 9 *Vis'vâmitra*; 10 The *Rivers*; 11-13 *Vis'vâmitra*. Metre—*Trishṭubh*, the last verse being an *Anushṭubh*.

[ तबेल्यांतून ] सोडले- ...कमेकांबरोबर ईर्ष्या कर- ...ज्या दोन घोड्या त्यांप्रमाणें, [अथवा ] सवत्स [आणि] [ वा- ...ला ] चाटावयास इच्छिणाऱ्या ...दोन शोभायमान गाई त्यांप्र- ...णें, विपाट् [ आणि ] शुतुद्री ...युक्त होत्सात्या आपला प्रवाह ...ऊन पर्वतांच्या मांडीवरून धांवत ...हेत.

1. Like two mares left loose [from the stable] [and] racing with each other, [or] like two beautiful mother cows, wishing to lick [ their calves], the affectionate Vipâṭ [and] S'utudrî are hurrying down with their water from the slope of the mountains.

---

१. अशी कथा आहे कीं, विश्वामित्र ...पैजवन सुदास नांवाच्या राजाचा ...हित झाला, आणि पौरोहित्य करून ...संपादन केलें आणि विपाट् आणि ...द्री या दोन नद्यांच्या संगमाजवळ ...ला. दोन्हीहि नद्यांला पाणी पुष्कळ ...आणि आपणास उतार होणार ...असें पाहून, पाणी उतरावें आणि ओलांडून जातां यावें अशा हेतूनें ...ा तीन ऋचा विश्वामित्रानें म्हटल्या.

या सूक्तांत विश्वामित्र आणि विपाट शुतुद्री या दोन नद्यांचा संवाद आहे.

पहिल्या ऋचेंत नद्या, शर्यत धांवणाऱ्या दोन घोड्या धांवतात तशा अथवा वासराच्या मायेनें धांवणाऱ्या गाई धांवतात तशा, समुद्राकडे धांवत आहेत असें सांगितलें आहे.

'विपाट्' आणि 'शुतुद्री.' या दोन्ही नद्या पंजाबांत आहेत. 'शुतुद्री'ला आतां 'सतलज' म्हणतात, विपाश् ही

**इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः ।**
**समाराणे ऊर्मिभिः पिन्वमाने अन्या वामन्यामप्येति शुभ्रे**

इन्द्रेषिते इतीन्द्रऽइषिते । प्रऽसवम् । भिक्षमाणे इति । अच्छ
 द्रम् । रथ्याऽइव । याथः ।
समाराणे इति सम्ऽआराणे । ऊर्मिऽभिः । पिन्वमाने इति । अन्
 वाम् । अन्याम् । अपि । एति । शुभ्रे इति ॥ २ ॥

**अच्छा सिन्धुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म ।**
**वत्समिव मातरा संरिहाणे समानं योनिमनु संचरन्ती ॥ ३ ॥**

अच्छ । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् ।
 सुऽभगाम् । अगन्म ।
वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरिहाणे । समानम् । योनिम्
 अनु । संचरन्ती इति सम्ऽचरन्ती ॥ ३ ॥

---

**भाषायाम्.**

२. प्रसवं भिक्षमाणे (=इन्द्रकर्तृकं यत् प्रेरणं तद् याचमाने) [अत एव] इन्द्रेषिते (=इन्द्रेण प्रेषिते) समाराणे (=परस्परं संगच्छमाने) ऊर्मिभिः पिन्वमाने (=तरङ्गैः परिसरप्रदेशान् वर्धयिष्यौ) [युवां] रथ्येव (=रथारूढौ कौचित् पुरुषाविव) अच्छा समुद्रं याथः (=समुद्रं प्रति गच्छथः)। हे शुभ्रे (=शोभमाने विपाट्छुतुद्र्यौ), वाम् अन्या (=युवयोरेकतरा) अन्याम् अपि एति (=अपरां परिगच्छति तया सह संगच्छते)॥

३. मातृतमाम् (=अतिशयेन मातरं मातृसदृशीं) सिन्धुं (=नदीं शुतुद्रीम्) अच्छ अयासम् (=आगच्छम्)। उर्वीं (=महतीं) सुभगां (=सौभाग्यवतीं) विपाशम् अगन्म (=आगच्छाम=आगच्छम्)। वत्सं संरिहाणे मातरेव (=वत्सं जिह्वया लेढुमिच्छन्त्यौ मातरौ यथा तथा) समानं योनिम् अनु संचरन्ती (=समानं स्थानं समुद्रं गच्छन्त्यौ) [नद्यौ प्रति आगच्छम्]॥

हे [ नद्यांनो ], [इंद्राची] इच्छिणाऱ्या, इंद्रानें प्रेरिले- परस्पर एकत्र मिळणाऱ्या [णी ] [ आपल्या ] लाटांनीं ळच्या प्रदेशांला ] पुष्ट क- रा तुम्ही, रथींप्रमाणें समु- त जातां. हे शोभिवंत [ न- ], तुम्हांतून एक दुसरीवर न पडते.

2. Desirous of propulsion [by Indra], [and] propelled by Indra, joined each to the other [and] nourishing [the surrounding country] with your waves, you go towards the sea, like two charioteers. O fair ones, one of you falls upon the other.

३. अतिशयेंकरून मातेसा- [ जी शुतुद्री ] नदी [ तिज]प्रत मी आलों आहें. विशाल [ आणि ] सौभाग्यवती [ जी ] विपाश् [ तिज]प्रत मी आलों आहें. वत्साला चाटूं इच्छिणाऱ्या आया [ धांवतात त्या]प्रमाणें एकच स्थानाप्रत धांवत जाणाऱ्या [ ज्या ] दोन [नद्या, त्यांजप्रत मी आलों आहें ].

3. I have come to the best of mothers the river [S'utudrî]—we have come to the vast [and] blessed Vipâṭ: [the rivers that are] like two mothers desirous of licking their calf, [and] running towards one common place.

शुतुद्रीची शाखा होय. शुतुद्री ही नदी प्रसिद्ध आहे, आणि स्नान करिते वेळीं 'इमं मे गङ्गे यमुने' इत्यादिक मंत्र म्हणतात त्यांत तिचें नांव येतें.

विश्वामित्राला विपाट् शुतुद्री यांच्या संगमाजवळ ( म्हणजे 'अमृतसर' पासून कांहीं थोड्या अंतरावर ) उतार पाहिजे होता; यावरून विश्वामित्र पंजाबांत अथवा त्याच्या आसपास राहत असे असें सिद्ध होतें. शुतुद्री हिला कितीएक दुसऱ्या नद्या मिळाल्या म्हणजे तीच पुढें सिन्धुनदी होते.

२. यांत दोन्हीहि नद्यांचा संगम होऊन त्या समुद्राकडे धांवत आहेत आणि जातां जातां आसपासच्या शेतांला पाण्यानें समृद्ध करीत आहेत असें तात्पर्य आहे.

'इंद्रानें प्रेरिलेल्या'='इन्द्रेषिते.' म्ह-

**एना व॒यं पय॑सा॒ पिन्व॑माना॒ अनु॒ योनिं॑ दे॒वकृ॑तं॒ चर॑न्तीः ।**
**न वर्त॑वे प्रस॒वः सर्ग॑तक्तः कि॒युर्विप्रो॑ न॒द्यो॑ जोहवीति ॥ ४**

ए॒ना । व॒यम् । पय॑सा । पिन्व॑मानाः । अनु॑ । योनि॑म् । दे॒वऽकृ॑तं ।
चर॑न्तीः ।
न । वर्त॑वे । प्र॒ऽस॒वः । सर्ग॑ऽतक्तः । कि॒म्ऽयुः । विप्रः॑ । न॒द्यः॑ ।
जो॒ह॒वी॒ति ॥ ४ ॥

**रम॑ध्वं मे॒ वच॑से सो॒म्याय॒ ऋता॑वरी॒रुप॑ मुहू॒र्तमेवैः॑ ।**
**प्र सिन्धु॒मच्छा॑ बृह॒ती म॑नी॒षाव॒स्युर॑ह्वे कुशि॒कस्य॑ सू॒नुः ॥५॥१२॥**

रम॑ध्वम् । मे॒ । वच॑से । सो॒म्याय॑ । ऋत॑ऽवरीः । उप॑ । मु॒हू॒र्तम् । एवैः॑ ।
प्र । सिन्धु॑म् । अच्छ॑ । बृ॒ह॒ती । म॒नी॒षा । अ॒व॒स्युः । अ॒ह्वे॒ । कु॒शि॒-
कस्य॑ । सू॒नुः ॥ ५ ॥ १२ ॥

---

## भाषायाम्.

४. नद्यौ प्रत्यूचतुः ॥

वयम् एना ( =अनेन ) पयसा ( =उदकेन ) पिन्वमानाः ( =परिसरप्रदेशान् वर्धयिन्त्यः सत्यो ) देवकृतं योनिम् अनु चरन्तीः (=देवेन इन्द्रेण कृतं स्थानं समुद्रमनुलक्ष्य गच्छन्त्य ) [ आस्महे ] । [ अस्माकं ] सर्गतक्तः प्रसवः ( =गमने प्रवृत्त उद्योगो ) न वर्तवे [ भवति ] ( =निवर्तयितुं शक्यो न भवति ) ॥

५. हे ऋतावरीः ( =ऋतावर्यः नद्यः ), मे सोम्याय वचसे ( =मम सोमसंबन्धिने वचनाय ) मुहूर्तं ( =मुहूर्तमात्रम् ) एवैः ( =गमनेभ्यः ) उप रमध्वम् ( =उपरता भवत ) । अवस्युः ( =प्रसादेच्छुः ) कुशिकस्य सूनुः ( =कुशिकस्य राजर्षेः पुत्रो विश्वामित्रोहं ) बृहती मनीषा ( =बृहत्या स्तुतिबुद्ध्या ) सिन्धुम् अच्छ ( =त्वां शुतुद्रीं प्रति ) अह्वे ( =प्रकर्षेणाह्वयामि ) ॥

सोम्याय उत्तीर्याहं सोमं संपादयामीत्येवं सोमसंपादिने वचसे तदर्थम् इति सायणः ॥

[आम्ही] या उदकानें ...गाऱ्या [आणि] देव...नाप्रत जाणाऱ्या [आ-गमनाविषयीं [आमचा] थांबवितां येत नाहीं. को-च्छेनें [हा] विप्र [आ-नद्यांला पुकारीत आहे?

4. We are enriching [all] with this water [and are] running towards the god-appointed place. [Our] work of passing on cannot be stopped. With what object does the poet call out to the rivers?

. हे नद्यांनो, तुम्ही माझ्या ...क्त वचनाकरितां थांबा. मुहूर्तभर धांवणें बंद करा. ...ची इच्छा करणारा जो मी ...काचा पुत्र त्या म्या मोठ्या ...नें [तुज] नदीप्रत हाक ...ली.

5. For my prayer, accompanied by soma, do ye tarry, o rivers, for a short while from [your] swift marches. Desirous of [thy] favour I, the son of Kus'ika, called out to [thee] the river, with great devotion.

---

मेघोदकांचा निरोध करणाऱ्या वृ...ा इंद्रानें मारून मेघोदकें मुक्त के-...ळें ज्या वाहूं शकल्या अशा.

इंद्राची प्रेरणा वांछिणाऱ्या' ह्याचाहि ...भावार्थ वृत्रहननाच्या संबंधानेंच काढिला ...ाहिजे. वृत्रानें कोंडून ठेविलेल्या स्थि-...तींत असतां तेथून आपली सुटका ...व्हावी आणि आपण आपल्या मार्गानें जावें अशी मोकळीक मिळण्यासाठीं इं-द्रानें वृत्रहनन करावें अशी इच्छा क-रणाऱ्या.

' 'एक दुसरीवर पडते' म्हणजे ए-कीचा संगम दुसरीशीं होतो.

३. यांत विश्वामित्र म्हणतो, 'मी या मातेसारिख्या दोन नद्यांप्रत आलों आहें.'

---

४. यांत नद्यांनीं विश्वामित्राला दि-लें उत्तर आहे. 'आम्हांला इंद्रानें ने-...न दिलेल्या स्थानाप्रत (समुद्राप्रत,) ...आम्ही वाटेंत शेतें सुपीक करीत करीत ...त आहों. आमच्यानें थांबवणार नाहीं. ...कां हाका मारीत आहेस?'

५. यांत विश्वामित्र नदींला हाक मारण्याचें कारण सांगत आहे. तें हें कीं, माझ्या मनांत सोम आणि स्तुति (इं-द्राला?) अर्पण करावयाची आहे, या-स्तव मला लवकर जाण्यासाठीं तुम्ही घटकाभर न चालतां उभ्या रहा.

इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम् ।
देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥ ६

इन्द्रः । अस्मान् । अरदत् । वज्रऽबाहुः । अप । अहन् । वृत्रम्
रिऽधिम् । नदीनाम् ।
देवः । अनयत् । सविता । सुऽपाणिः । तस्य । वयम् । प्रऽसवे
यामः । उर्वीः ॥ ६ ॥

प्रवाच्यं शश्वधा वीर्यं १ तदिन्द्रस्य कर्म यदहिं विवृश्चत् ।
वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः ॥ ७ ॥

प्रऽवाच्यम् । शश्वधा । वीर्यम् । तत् । इन्द्रस्य । कर्म । यत् । अहिं
विऽवृश्चत् ।
वि । वज्रेण । परिऽसदः । जघान । आयन् । आपः । अयनम् । इच्छ-
मानाः ॥ ७ ॥

---

## भाषायाम्.

६. वज्रबाहुः ( =वज्रयुक्तो बाहुर्यस्यासौ तादृश ) इन्द्रः अस्मान् अरदत् ( =अ-स्वनत्=अस्मदर्थं गमनमार्गं कृतवान् ) । [स] नदीनां परिधिं (=नदीनां परितो वर्तमानं ) वृत्रम् अप अहन् (=हतवान् ) । सुपाणिः शोभनकरः सविता देवः [अस्मान्] अनयत् ( =मेघभेदनं कृत्वा अस्मभ्यं मार्गमदर्शयत् ) । तस्य प्रसवे ( =शासने ) उर्वीः ( =विशाला ) वयं यामः ( =गच्छामः ) ॥

७. इन्द्रस्य तद् वीर्यं कर्म (=शौर्यं चरितं च=बलयुक्तं चरितं) शश्वधा (=सर्वदा) प्रवाच्यं (=प्रकर्षेण वचनीयं ) यत् [ सः ] अहिं विवृश्चत् (=वृत्ररूपं सर्पं चिच्छेद) । [स ] परिषदः ( =परितः सीदत आसीनान् प्रतिबन्धकारिणोऽसुरान् ) वज्रेण जघान । [ तदानीम् ] अयनम् इच्छमाना आपः ( =गमनम् इच्छन्ति मेघोदकानि ) आयन् ( =अगच्छन् ) ॥

इति प्रसङ्गवशादिन्द्रस्य नदीभ्यां कृता स्तुतिः ॥

...म्हाला वज्रबाहु इंद्रानें ...आहे, त्याणें नद्यांचा वे-...वृत्र त्याला मारिलें. सु-... सविता देव त्याणें मार्ग ...ला. त्याच्या प्रेरणानें आ-...शाल होत्साया जात आहों.

6. Indra armed with the thunderbolt made the path for us. He slew Vritra the besieger of the rivers. The divine Savitâ of good hands showed us the path. We the wide ones are going under his propulsion.

इंद्राचें हें शौर्य आणि ...नित्य वाखाणण्यास योग्य ... कीं त्याणें अहीचें हनन केलें; ...वेढा घालणाऱ्यांस वज्रानें मा-...र झाला; गमनाविषयीं उत्सुक ...कें निघून बाहेर वाहलीं.

7. This exploit [and] achievement of Indra is ever worthy of being celebrated, that he cut the Serpent. He slew the besiegers [of the waters] with the thunderbolt. The waters desirous of going went forth.

---

६. नद्यांचें उत्तर. 'मेघोदकांस अव-...धून राहणाऱ्या वृत्राला मारून मेघो-...कें मोकळीं करून आमच्या पात्रांत ...वाह वाहे असें इंद्रानें केलें आहे, आणि ...र्णेंच समुद्राकडेस जाण्याचा मार्ग आ-...ंस लावून दिला आहे. यास्तव आ-...यानें थांबवत नाहीं.'

यांत सविता हें पद इंद्रार्थीं समजलें पाहिजे. कारण इंद्र हा देव सवितृरूपच आहे. सू. ६ मं. २ आणि टीप पहा.

७. यांत प्रसंगास आलेली इंद्राची स्तुति नदींनीं केली आहे.

'अहि' म्हणजे वृत्ररूप सर्प. सू. ३२ मं. १ आणि टीप पहा.

**एतद्वचो जरितर्मापि मृष्ठा आ यत्ते घोषानुत्तरा युगानि ।**
**उक्थेषु कारो प्रति नो जुषस्व मा नो नि कः पुरुषत्रा नमः**

एतत् । वचः । जरितः । मा । अपि । मृष्ठाः । आ । यत् ।
घोषान् । उत्ऽतरा । युगानि ।
उक्थेषु । कारो इति । प्रति । नः । जुषस्व । मा । नः । नि । ः
रिति कः । पुरुषऽत्रा । नमः । ते ॥ ८ ॥

**ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन ।**
**नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः ॥**

ओ इति । सु । स्वसारः । कारवे । शृणोत । ययौ । वः । दूरात् ।
अनसा । रथेन ।
नि । सु । नमध्वम् । भवत । सुऽपाराः । अधःऽअक्षाः । सिन्धवः ।
स्रोत्याभिः ॥ ९ ॥

---

## भाषायाम्.

८. हे जरितः (=स्तोतः), एतत् (=वक्ष्यमाणं) वचः (=वचनं) मा अपि मृष्ठाः (=मा विस्मार्षीः) यत् (=तच्च) ते (=तव) उत्तरा युगानि (=उत्तराणि युगानि=आगामीनि याज्ञिकानि दिनानि) आ घोषान् (=घोषयेयुः)। [तदेतद्वचनम्]। हे कारो (=कवे), उक्थेषु (=स्तोत्रेषु) नः (=अस्मान्) प्रति जुषस्व (=प्रतिसेवस्व=प्रतिस्तोत्रमस्मानपि स्तुहि)। नः पुरुषत्रा मा नि कः (=पुरुषेषु मास्मान्निकार्षीः=पुंभूतानां देवादीनां स्तुतिषु क्रियमाणासु वयं स्त्रिय इति कृत्वा मास्मानवमन्यस्व)। नमस्ते (=तुभ्यं नमोस्तु)॥

९. हे स्वसारः (=परस्परं स्वसृभूता नद्यः), कारवे [मह्यम्] ओ षु शृणोत (=मम स्तोतुर्वचनं सुष्ठु शृणुत)। [अहं] दूरात् वः (=युष्मान्) अनसा रथेन (=शकटेन रथेन च) ययौ (=आगतोस्मि)। नि सु नमत (=आत्मना स्वयं प्रह्वा भवत)। सुपाराः (=रथादीनां तीरात्सुखेनावरोहणारोहणे यथा स्यातां तथा शोभनरोधसो) भवत। हे सिन्धवः (=नद्यः), स्रोत्याभिः (=अद्भिः) अधोअक्षाः (=रथाङ्गस्याक्षस्याधस्ताद्भवत)॥

हे कवी, तूं हें वचन वि-
सरूं नको आणि हें तुझ्या पुढच्या
दिवसांत गाजूं दे; हे कवी,
स्तोत्रांमध्यें आम्हांला सेवीत जा;
पुरुषांत आम्हांस तुच्छ मानूं
नको. तुला नमस्कार.

. हे भगिनी हो, तुम्ही
[ ह्या ] कवीचें वचन ऐका. मी
दुरून गाड्यांत बसून [ आणि ]
रथांत बसून तुम्हांप्रत आलों आहें.
खालीं उतरा. तुमचीं तीरें सुगम
होवोत. हे नद्यांनो, तुमचीं उदकें
आंसाच्या खालीं होओत.

8. Do not, o poet, forget this word, which let thy future [festive] days proclaim: accept us, o poet, in [ thy ] hymns. Do not despise us among males. Fare thee well.

9. Hear the poet o sisters! I have come a long way by a cart, by a chariot. Be ye low. May your banks be easy of access. May your waters be below the axle, o rivers!

---

... 'हें वचन ध्यानांत ठेव आणि ह्याचा तूं प्रत्येक यज्ञाच्या दिवशीं मोठ्यानें उच्चार करीत जा. वचन हें कीं, जेव्हां तूं दुसऱ्यांची स्तुति करशील तेव्हां आम्ही बायका आहों म्हणून आमचा धिःकार करूं नको, तर आमचीहि स्तुति करीत जा. जा आतां, नमस्कार तुला.'

९. विश्वामित्र म्हणतो, 'मी दूरून गाडा आणि रथ यांत बसून आलों आहें; तर तुमचे प्रवाह उथळ होऊं द्या. आणि मला उतरून जाण्यास मार्ग द्या.'

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥१०

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात्
अनसा । रथेन ।
नि । ते । नंसै । पीप्यानाऽइव । योषा । मर्यायऽइव । कन्या । शश्वचै
ते इति ते ॥ १० ॥ १३ ॥

यदङ्ग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः ।
अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम् ॥११

यत् । अङ्ग । त्वा । भरताः । सम्ऽतरेयुः । गव्यन् । ग्रामः । इषितः
इन्द्रऽजूतः ।
अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः । आ । वः । वृणे । सुऽमतिम् ।
यज्ञियानाम् ॥ ११ ॥

---

भाषायाम्.

१०. हे कारो, (=स्तोतः), ते वचांसि (=तव वचनानि) आ शृणवाम (=शृणुमः) । दूरात् अनसा रथेन ययाथ (=यतः शकटेन रथेन च दूरादागतोसि) । पीप्याना योषेव ते नि नंसै (=पुत्रं स्तनं पाययन्ती माता यथा प्रह्वीभवति तथा त्वदर्थं वयं नमामः) । [अथवा] कन्या मर्याय शश्वचै इव ते [नंसै] (=पित्रे भ्रात्रे वा मनुष्याय परिष्वजनार्थं यथा नमति तथा वयं त्वदर्थं नमामः) ॥

नद्यः पूर्वं विश्वामित्रवाक्यं प्रत्याख्यायानयर्चा तस्य वाक्यम् आशुश्रुवुः । ......नंसै नमाम । प्रत्येकविवक्षयैकवचनम् । इति सायणः ॥

११. अङ्ग (=हे) [नदि], यत् (=यस्मात्) भरताः (=भरतकुलजा मदीयाः) त्वा संतरेयुः (=त्वां सम्यगुत्तीर्णा भवेयुः), गव्यन् इन्द्रजूत [इन्द्रेण] इषित [भरतानां] ग्रामः [संतरेत्] (=गा इच्छन्निन्द्रप्रेरित इन्द्रेणाभ्यनुज्ञातो भरताः मदीयानां समूहस्त्वां त्वदाज्ञया संतरेत्) [यतश्च] सर्गतक्तः प्रसवः (=गमना प्रवृत्तस्तेषाम् उद्योगः) अर्षात् ह (=उपरतो न भवेत्) [अतः कारणात्] यज्ञियानां वः सुमतिम् आ वृणे (=यज्ञार्हाणां युष्माकं शोभनां स्तुतिम् अहं संभजे) ।

सपरिवारस्य ममार्थं यस्माद् उत्तीरणमार्गं ददासि अतः कारणात् त्वां सुष्ठु यथा स्तोष्यामीत्यर्थः

हे कवी, आम्ही तुझें [ऐ]कितों. तूं दूरून गाडींत [आणि] रथांत बसून आला [आहेस.] थान पाजणाऱ्या स्त्री-[प्रमाणें] तुजकरितां मी खालीं नमतें, जशी बापाचे पाय धरण्यास त्याप्रमाणें तुजकरितां मी

10. We will hear thy words, o poet! Thou hast come a long way in a cart, in a chariot. I will bend myself to thee as a suckling woman, to thee even as a girl to her father for to prostrate.

[११]. हे नद्यांनो, ज्यापेक्षां [भरत]पुत्र तुम्हांला [ आतां ] तरून [जा]तील, गाई मिळविण्याविषयीं [उत्सु]क असा जो इंद्रानें प्रेरिलेला [आणि इंद्रानें ] उत्तेजन दिलेला [भर]तांचा समूह, [ तो तरून जा]ल ], [ आणि ज्यापेक्षां ] त्यांचा [ जो ] गमनाविषयीं उद्योग [तो] चालणार आहे, त्यापेक्षां मी तुम्हां पूजनीयांची उत्तम स्तुति करीन.

11. Since the sons of Bharata are now to pass together across thee, the assemblage [of the Bharatas], anxious for cows, and propelled and hastened by Indra, [is to cross over], and since their endeavour to progress is to flow on, I will sing a great hymn to you the worshipful ones.

---

१०. यांत नदी विश्वामित्रऋषींचें वाक्य मान्य करून त्याच्या म्हणण्याप्रमाणें उतरून पार जाण्यासाठीं उतार देऊं असें म्हणतात. मात्र यांत दिलेल्या दोन्ही उपमा कांहींशा दुर्बोध आहेत. 'श्णवाम' आणि 'नंसै' यांतील जो [व]चनव्यत्यय, त्याचीं उदाहरणें वेदांत [पु]ष्कळ येतच असतात.

११. विश्वामित्र म्हणतो, 'ज्या अर्थी हे [नद्]यांनो, तुम्ही आतां मला माझ्या परिवा[रास]ह उतरून जाण्यास मार्ग देत आहां, त्यापेक्षां मी तुमचें उत्तम स्तोत्र गाइन.'

'गाई मिळविण्याविषयीं उत्सुक'='गव्यन्.' म्हणजे नदी उतरून गेल्यानंतर त्यास गाईंचा लाभ होणार होता असें समजलें पाहिजे. हें जर खरें असेल, तर सुदासाचें पौरोहित्य करून विश्वामित्र धन मिळवून घरीं जात होता, असें म्हणण्यापेक्षां तो आपल्या कुळांतील वीर घेऊन नदीच्या पलीकडील शत्रूंच्या मुलखांतून लढाई करून गाई वळवून आणण्यासाठीं जात होता, असें म्हणणें

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम् ।
प्र पिन्वध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम् ॥

अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् । नदीनाम् ।
प्र । पिन्वध्वम् । इषयन्तीः । सुऽराधाः । आ । वक्षणाः । पृणध्वम् । यात । शीभम् ॥ १२ ॥

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
माद्दुष्कृतौ व्येनसाघ्न्यौ शूनमारताम् ॥ १३ ॥ १४ ॥

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।
मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ । शूनम् । आ । अरताम् ॥ ॥ १३ ॥ १४ ॥

---

## भाषायाम्.

१२. गव्यवः (=गा आत्मन इच्छन्तो) भरताः (=भरतकुलजाः कुशिका) अतारिषुः (=तां नदीं समतरन्)। विप्रः (=मेधावी विश्वामित्रो) नदीनां सुमतिं सम् अभक्त (=शोभनां स्तुतिं समभजत)। [हे नद्यः], सुराधाः (=सुराधसः=शोभनधनयुक्ता यूयम्) इषयन्तीः (=इषयन्त्यः=अन्नं संपादयन्त्यः सत्यः) प्र पिन्वध्वं (=सर्वान् प्रकर्षेण तर्पयत)। वक्षणाः (=कुल्या) आ पृणध्वम् (=आसमन्तात् पूरयत)। शीभं यात (=शीघ्रं गच्छत) ॥

१३. व ऊर्मिः (=युष्माकं तरङ्गः) शम्या उद्धन्तु (=युगकीला युग्यकटपार्श्वादिसंलग्ना ऊर्ध्वा यथा भवन्ति तथा गच्छतु)। हे आपः (=नद्यः), [यूयं] योक्त्राणि मुञ्चत (=रज्जूर्मुञ्चत=रज्जवो यथा स्पृष्टा न भवन्ति तथा गच्छत)। अदुष्कृतौ (=कल्याणकर्मकारिण्यौ) व्येनसा (=निष्पापे) अघ्न्यौ (=न केनापि तिरस्करणीये) [विपाट्छुतुद्र्यौ] मा शूनम् आ अरताम् (=हीनतां मा गच्छतां=समृद्धिं प्राप्नुताम्) ॥

एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातोऽतरदिति सायणः ॥

गाई मिळविण्याविषयीं भरत पार उतरले. कवी उत्तम स्तुति करिता झाला, द्यांनो ], सुधनसंपन्न ज्या ा सर्वांला अन्नसंपन्न करून करा. तुम्ही कालवे भरून तुम्ही [ आतां ] लवकर

12. The Bharatas, desirous of cows have crossed. The poet commenced a great praise of the rivers.—Do you the bounteous ones enrich [all], distributing food. Fill the channels. Go swiftly.

१३. तुमचा तरंग शिवळीला टो. हे नद्यांनो, तुम्ही चऱ्हा- ला लागूं नका. कल्याणकारक, ष्पाप [आणि] अविनाश्य अशा ा तुम्ही त्या समृद्धीप्रत पावा.

13. Let your wave strike the yokepins. Leave the ropes [untouched]. May you be prosperous—you who are benevolent, sinless [and] innocent.

---

चांगलें जुळतें.

'इंद्रानें प्रेरिलेला'='इन्द्रजूतः;' आणि 'गमनाविषयीं उद्योग' ='सवितकः प्रसवः'. यांवरून असें समजायाचें कीं, नद्या आपणांस इंद्रानें मार्ग लावून दिल्याप्रमाणें आपण समुद्राकडे जात आहों आणि गमनाविषयीं आपला जो उद्योग तो बंद होण्यासारखा नाहीं असें जसें ( मंत्र ४ यांत ) म्हणाल्या, त्याप्रमाणेंच विश्वामित्रहि म्हणत आहे कीं, 'आम्हांलाहि नदीपलीकडे जाण्याविषयीं आणि जाण्याचा उद्योग बंद न करण्याविषयीं इंद्राचीच प्रेरणा आहे. त्यापेक्षां नदीनें उतार द्यावा हें योग्य आहे.'

'भरत' म्हणजे येथें भरतकुळांतील पुरुष हे आणि कुशिक हे एकच समजले पाहिजेत. भरतांचें कुळ भारतादिकांत प्रसिद्धच आहे.

---

१२. विश्वामित्र म्हणतो, 'तुम्ही मार्ग दिला म्हणून आमचे सर्व लोक उतरून ले. आतां तुम्ही वाहा आणि सर्व प्रांतांला संतृप्त करून अन्नसमृद्ध करा.'

१३. यांत लिहिल्याप्रमाणें विश्वामित्रानें विपाश् आणि शुतुद्री यांची स्तुति करून उतरून गेला असें दाखविण्याकरितां हा मंत्र घातला आहे.

## सूक्तम् ३४-२६८.

विश्वामित्र ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः॥

इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून्।
ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे॥ १॥

इन्द्रः। पूःऽभित्। आ। अतिरत्। दासम्। अर्कैः। विदत्ऽवसुः दयमानः। वि। शत्रून्।
ब्रह्मऽजूतः। तन्वा। ववृधानः। भूरिऽदात्रः। आ। अपृणत्। रोदसी इति। उभे इति॥ १॥

मखस्य ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन्।
इन्द्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा॥ २॥

मखस्य। ते। तविषस्य। प्र। जूतिम्। इयर्मि। वाचम्। अमृताय भूषन्।
इन्द्र। क्षितीनाम्। असि। मानुषीणाम्। विशाम्। दैवीनाम्। उत। पूर्वऽयावा॥ २॥

---

### भाषायाम्.

१. पूर्भित् (=असुरपुरां भेत्ता) विदद्वसुः (=वसूनां धनानां लम्भयिता) शत्रून् वि दयमानः (=विशेषेण हिंसन्) इन्द्रः अर्कैः (=स्वतेजोभिर्) दासम् आ अतिरत् (=असुरं वृत्रादिकम् अजयत्)। ब्रह्मजूतः (=ब्रह्मणा स्तोत्रेण प्रेरितम्) तन्वा वावृधानः (=उपासकानां स्तोत्रेण शरीरे वर्धितो) भूरिदात्रः (=बहुविधदानोपेतः) [स] उभे रोदसी (=उभे द्यावापृथिव्यौ) आ अपृणत् (=आपूरितवान्)॥

२. अमृताय (=अमरणधर्माय तुभ्यं=त्वदर्थं) वाचं भूषन् (=स्तुतिं भावयन्=रचयन्नहं) मखस्य (=? "महनीयस्य स्तुत्यस्य") तविषस्य (=प्रबलस्य) ते (=तव) जूतिं प्र इयर्मि (=प्रेरणां प्रेरयामि=त्वां प्रेरयितुं स्तोत्रं कृत्वा तदुच्चारयामि)। हे इन्द्र, [त्वं] मानुषीणां क्षितीनां (=मनोः संबन्धिनीनां प्रजानाम्) उत दैवीनां विशां पूर्वयावा (=अपि च देवरूपाणां जनानां पुरोगन्ता) असि॥

आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः
महत्तद्वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥

आऽतिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियः । वसानः । चरति । स्वऽरोचिः ।
महत् । तत् । वृष्णः । असुरस्य । नाम । आ । विश्वऽरूपः । अमृतानि । तस्थौ ॥ ४ ॥

असूत पूर्वो वृषभो ज्यायानिमा अस्य शुरुधः सन्ति पूर्वीः ।
दिवो नपाता विदथस्य धीभिः क्षत्रं राजाना प्रदिवो दधाथे ॥
॥ २३ ।

असूत । पूर्वः । वृषभः । ज्यायान् । इमाः । अस्य । शुरुधः । सन्ति पूर्वीः ।
दिवः । नपाता । विदथस्य । धीभिः । क्षत्रम् । राजाना । प्रऽदिवः दधाथे इति ॥ ५ ॥ २३ ॥

---

दण्डैर्विशाले द्यावापृथिव्यौ परिच्छिन्ने चक्रुः " विष्टम्भकेनान्तरिक्षेणान्तरुदयच्छं"श्च ) । मही ( =महत्यौ ) समृते ( =परस्परं संगते ) ते द्यावापृथिव्यौ ) अन्तः ( =तयोर्मध्ये ) धायसे ( =धारणार्थम् ) [ अन्तरिक्षं ] धुः ( =निदधुः ) ॥

---

## भाषायाम्.

४. आतिष्ठन्तं ( =रथमधिरूढम् ) [ इन्द्रं ] विश्वे पर्यभूषन् ( =सर्वेपि कवयः परितोलमकुर्वन् ) । स्वरोचिः (=स्वकीयया प्रभया दीप्यमानः ) [ स ] श्रियो वसानः ( =दीप्तीः परिदधानश् ) चरति ( =गच्छति ) । असुरस्य वृष्णः ( =बलवतो वीरस्येन्द्रस्य ) तत् नाम ( =तत् पराक्रमकर्म वक्ष्यमाणं ) महत् [ भवति ] । विश्वरूपः ( =सर्वरूप इन्द्रः ) अमृतानि आ तस्थौ ( =? अमृतसदृशानि मेघोदकानि आ तस्थौ ( =अधिष्ठितवान्=तेषाम् अधिपतिर्बभूव ) ॥

५. पूर्वो वृषभः ( =पुरातनो वीरोयम् इन्द्रो ) ज्यायान् असूत ( =सर्वेषु देवेषु मध्येतिशयेन वृद्धोसूयत=उत्पन्नः ) । इमाः पूर्वीः शुरुधः ( =इमानि प्रसिद्धानि ...न्यन्नानि ) अस्य सन्ति (=इन्द्रस्यैव भवन्ति) । हे दिवो नपाता राजाना (=हे ...

हे सर्व रथारूढ इंद्राला [ ] झाले. स्वतेजस्वी [ इंद्र ] पांघरून संचार करितो. [व]ीराचा तो पराक्रम महान् [वि]श्वरूप [ इंद्र ] अमृतांचा [अधिप]ते झाला.

तो पुरातन वीर झाला. [मू]ल असाच झाला. हीं अ[न्न]ें त्याचीं आहेत. हे द्यूचे [उ]भय राजे हो, तुम्ही पुरातन [पा]सून यज्ञांतील स्तुतींमुळें [धा]रण करीत आलां आहां.

4. They all adorned [Indra] mounted [on his chariot]. Self-resplendent [and] clad in splendors he goes. Great [is] that exploit of the mighty warrior. Omniform [Indra] stood on things immortal.

5. The ancient hero [Indra] was born the eldest. These numerous nourishments are his. O kings, o sons of Dyaus, you have from ancient days received power from the praises in the sacrifice.

---

[अ]ंगीं बळ स्थापिते झाले.
[मा]त्रांनीं मोजिते झाले '=' मात्राभिः .' म्हणजे पृथिवीला मोजण्या-साठीं जणूं मोठमोठाल्या पर्वतांच्या रांगा स्थापिते झाले.

---

'दीप्तींस पांघरून संचार करितो' ... वसानश्चरति,' म्हणजे तेजः- सूर्यरूपानें. इंद्र हा देव सूर्यरूपच असें वेदांत प्रसिद्ध आहेच.

'अमृतांचा अधिपति झाला.'=' अ- [मृता]नि तस्थौ.' याचा अर्थ सायणाचार्य [अमृतां]चा अधिपति झाला असा समज- [ला]सें असेल.

[या] मंत्राच्या पहिल्या पादात सूर्यरूप [इंद्राच्या] अंगीं ज्या महा प्रभा आहेत त्या [दे]वींनींच दिलेल्या आहेत असें विवक्षित दिसतें.

५. 'द्यूचे पुत्र उभय राजे.' म्हणजे इंद्र आणि वरुण असें सायण म्हणतात तसेंच दिसतें.

'यज्ञांतील स्तुतींमुळें बळ धारण करीत आलां आहां.' म्हणजे पुरातन काळापासून तुम्हांसाठीं उपासक लोक यज्ञ करीत आले आहेत आणि त्या उपासकांनीं म्हटलेल्या स्तोत्रांच्या योगानें तुमचें बळ वाढत गेलें आहे.

त्रीणि राजाना विदथे पुरूणि परि विश्वानि भूषथः सदांसि
अपश्यमत्र मनसा जगन्वान्व्रते गन्धर्वाँ अपि वायुकेशान् ॥

त्रीणि । राजाना । विदथे । पुरूणि । परि । विश्वानि । भूषथः ।
सदांसि ।
अपश्यम् । अत्र । मनसा । जगन्वान् । व्रते । गन्धर्वान् । अपि ।
वायुऽकेशान् ॥ ६ ॥

तदिन्न्वस्य वृषभस्य धेनोरा नामभिर्ममिरे सक्म्यं गोः ।
अन्यदन्यदसुर्यं१ वसाना नि मायिनो ममिरे रूपमस्मिन् ॥ ७ ॥

तत् । इत् । नु । अस्य । वृषभस्य । धेनोः । आ । नामऽभिः । ममिरे ।
सक्म्यम् । गोः ।
अन्यत्ऽअन्यत् । असुर्यम् । वसानाः । नि । मायिनः । ममिरे । रू-
पम् । अस्मिन् ॥ ७ ॥

---

पुत्रौ राजानाविन्द्रावरुणौ), विदथस्य धीभिः (=यज्ञस्य स्तुतिभिः यज्ञे कृताभिः स्तुति-भिः) प्रदिवः क्षत्रं दधाथे (=पूर्वेष्वहःसु बलमधारयतम्) ॥

यज्ञे कृतया स्तुत्या प्रवर्धितबलौ प्राचीने काले इन्द्रावरुणौ पराक्रमं कृतव-न्तावित्यर्थः ॥

---

## भाषायाम्.

६. राजाना (=हे राजानौ इन्द्रावरुणौ), विदथे (=यज्ञे) त्रीणि पुरूणि [वा] (=बहूनि वा) विश्वानि (=सर्वाणि वा) सदांसि (=स्थानानि) परिभूषथः (=अलं कुरुथः)। अत्र (=?) मनसा जगन्वान् (=मनसा जग्मिवान् अहं) वायुकेशान् (=वायुवच्चलनरश्मीन्) गन्धर्वान् व्रते [वर्तमानान्] (=युवयोः शासने स्थि-तान्) अपश्यम् ॥

इमां सायण एवं व्याचष्टे। हे राजानाविन्द्रावरुणौ विदथेऽस्मिन्यज्ञे विश्वानि व्या-प्तानि पुरूणि यजनीयैः सोमादिभिः पूर्णानि त्रीणि सदांसि सवनानि परि भूषथः। सर्वतोलंकुरुथः। हे इन्द्र त्वं जगन्वान्। यज्ञं प्रति गतवानसि। अपि संभावना-याम्। यतोहमत्र व्रते यज्ञे वायुकेशान् वायुवच्चलनरश्मीन् गन्धर्वान् सोमरक्षका[न्] स्वानभ्राजादीन् मनसापश्यम्। ते च स्वानभ्राजादयस्तैत्तिरीयके स्पष्टमभिहित[ाः]

[ राजे हो, तुम्ही यज्ञा-
[ तिहींपेक्षांहि ] पुष्कळ,
ना ] सकळ स्थानें शोभ-
तां. तेथें मनानें जाऊन
या आज्ञेत वायुकेश गंध-
पाहता झालों.

[ जे उपासक ] या वी-
भत्या गाईचें नावांनीं
देतात, ते बलवान् [ इं-
नवें नवें बळ धारण करून
.. होत्साते आपलें रूप त्या-
यीं ठेवीत असतात.

6. O kings, in the sacrifice you adorn the three, [even] many,—[nay] all the seats. I, having gone there in my mind, saw in [your] order even the Gandharvas with airy hair.

7. [Those worshippers who] obtain the milk by the names from the milking cow of this hero, are clad in his every new prowess, and being wise place their form in him.

---

या मंत्राचा भावार्थ कठीण आहे. या भावार्थ असा दिसतो कीं 'इं-
णे वरुण प्रतिदिनीं प्रत्येक उपा-
 घरीं तीनदा, किंबहुना अधिक
सोमपान करण्यासाठीं जात अस-
उत्तरार्धाचा भावार्थ असा दिसतो
कीं प्रत्येक उपासकाच्या यज्ञांत
त्या मनोद्वारेंकरून जाऊन पाहिलें
तुमच्या सेवेंत गंधर्व माझ्या दृ-
ले.' असा भावार्थ दिसतो तरी
च्या यज्ञांत गंधर्व इंद्रावरुणाच्या
ष्टीस पडले असें म्हणणें म्हटलें
यज्ञाविषयीं आणि इंद्रावरुणावि-
र ठिकाणीं वेदांत जें सांगितलें
 आणि त्याला विशेष संबंध
असल्याप्रमाणें स्पष्टपणें दिसत नाहीं.

गंधर्व याविषयीं सू. २२ मं. १४ पहा.

७. हा मंत्र सर्व सूक्तांत विशेष कठिण आहे, आम्हीं बहुतकरून सायणानुसार अर्थ केला आहे. त्याचा भावार्थ असा कीं, 'इंद्राची कृपा ज्यांवर होते त्यांस नित्य नवें नवेंच बळ प्राप्त होतें, आणि ते उत्तरोत्तर इंद्रासारिखेच होऊन जातात.'

'नावांनीं' म्हणजे त्याच्या गाईचीं अनेक जीं नावें आहेत त्यांतून कोणत्याहि नांवानें. इंद्राची गाय म्हणजे इंद्राची प्रसन्नता, कृपा; धनादिसंपत्ति प्राप्त करून देणारा अनुग्रह.

तदिन्न्वस्य सवितुर्नकिर्मे हिरण्ययीममतिं यामशिश्रेत् ।
आ सुष्टुती रोदसी विश्वमिन्वे अपीव योषा जनिमानि वव्रे

तत् । इत् । नु । अस्य । सवितुः । नकिः । मे । हिरण्ययीम् । अमतिम् । याम् । अशिश्रेत् ।
आ । सुऽस्तुती । रोदसी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । अपिऽइव । योषा । जनिमानि । वव्रे ॥ ८ ॥

---

स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो । एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्निति । इति ॥

७. इमां दुर्बोधां सायण एवं व्याख्यातवान् । ये यजमाना वृषभस्याभिमतफलप्रदस्येन्द्रस्यार्थे धेनोर्गोर्नाममिर्विश्वायुर्विश्वव्यचा इत्यादिभिरुपलक्षितां गां सम्यं संभजन् तत्क्षीरादिकं हविर्नु क्षिप्रमाममिर आदुहन्ति । धातूनामनेकार्थत्वात् । तेन च हविषा यज्ञमनुष्ठाय देवभूयं प्राप्तास्ते कवयोऽन्यदन्यन्नूतनमसुर्यमसुराणां बलं वसाना आच्छादयन्त अत एव मायिनो मायया स्वीकृतकामरूपाः । यद्वा मायिनः प्रज्ञावन्तः सन्तोऽस्मिन्निन्द्रे रूपं स्वं स्वं रूपं निममिरे । इयत्तया परिच्छिद्य निदधुः ॥ इति ॥

---

## भाषायाम्.

८. यां हिरण्ययीम् अमतिं (=सुवर्णमयीं दीप्तिं) [ सविता ] अशिश्रेत् (=धारितवान्) तत् अस्य सवितुः (=ताम् अस्य सवितुरमतिं) नकिः इत् नु मे (=नैव कोपि मिमीते इयत्तया परिच्छेतुं शक्नोति) । सुस्तुती (=शोभनया स्तुत्या स्तुतः सन् स सविता) अपीव योषा जनिमानि (=यथा स्त्री अपत्यानि आवृणोति स्वकीयतया आलिङ्गति तथा) विश्वमिन्वे रोदसी (=सर्वव्यापिन्यौ द्यावापृथिव्यौ) आ वव्रे (=स्वकीयतया आवृणोति) ॥

| | |
|---|---|
| सवित्याचें हिरण्मय तो धारण करितो तें, मोजूं शकत नाहीं. तो स्तुतीच्या योगानें विश्व-व्यापृथिवींस स्त्रीनें मुलांला त्याप्रमाणें आलिंगितो. | 8. No one can measure the golden splendor of this Savitâ which he wears. By virtue of a good hymn he embraces the all-pervading earth and heaven even as a woman [embraces her] children. |

भावार्थः– 'सवित्याचें तेज अ-है, त्याला द्यावापृथिवी म्हणजे मुलें आहेत. परंतु हा जो महिमा आणि महा प्रकाश, तो त्याला पूर्वोक्त कवींसारिख्या कवींनीं केलेल्या स्तोत्रांच्या योगानें प्राप्त झालेला आहे.'

युवं प्रत्नस्य साधथो महो यद्दैवी स्वस्तिः परि णः स्यातम् ।
गोपाजिह्वस्य तस्थुषो विरूपा विश्वे पश्यन्ति मायिनः कृतानि ॥

युवम् । प्रत्नस्य । साधथः । महः । यत् । दैवी । स्वस्तिः । परि ।
नः । स्यातम् ।
गोपाऽजिह्वस्य । तस्थुषः । विऽरूपा । विश्वे । पश्यन्ति । मायिनः ।
कृतानि ॥ ९ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १० ॥
॥ २४ ॥ ३ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् ।
वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १० ॥ २४ ॥ ३ ॥

---

## भाषायाम्.

९. [ हे इन्द्रावरुणौ ], युवं प्रत्नस्य महः साधथः ( =युवां पुरातनस्य उपासकस्य श्रेयस्तेन प्रकारेण साधयथः स्म ) यत् ( =येन ) दैवी स्वस्तिः ( =दिव्यं श्रेयस् ) [ तमागच्छत् ] । [ अधुनापि युवां ] नः परि स्यातम् ( =अस्मान् परिरक्षतम् ) । गोपाजिह्वस्य ( =रक्षकजिह्वस्य=मा बिभीतेत्येतादृग्वचना वाग्यस्य तथोक्तस्य ) तस्थुषः ( =अतिशयेन स्थिरस्य ) [ इन्द्रस्य ] विश्वे मायिनः ( =सर्वे मेधाविनो ) विरूपा कृतानि ( =नानाविधानि वृत्रहननादीनि कर्माणि ) पश्यन्ति ॥

१०. अस्मिन् भरे वाजसातौ ( =संग्रामे युद्धे च ) मघवानं ( =धनवन्तं ) नृतमं ( =शूरतमम् ) इन्द्रं शुनं ( =सुखमुद्दिश्य ) हुवेम ( =आह्वयेम ) । [ अस्मान् ] शृण्वन्तम् उग्रं ( =प्रबलं ) वृत्राणि घ्नन्तं ( =शत्रून् घ्नन्तं ) धनानां संजितं ( =सम्यग्जेतारं ) [ तं ] समत्सु ( =युद्धेषु ) ऊतये ( =रक्षणाय ) [ हुवेम ] ॥

हे इंद्रावरुण हो ], [ उपासका]चें असें तेत होतां कीं, [त्याला] [ प्राप्त होत असे ]. म्ही आम्हांला रक्षा. बोलणारा [ आणि ] न स्थिर [ असा जो नानाविध पराक्रम स- क्षण लोक पाहतात.

9. You both, [o Indra and Varuṇa], [so] prospered the ancient worshipper, that divine prosperity [came to him]. Surround us [now] with protection. All wise men see the omniform deeds of [Indra] who has a tongue that says 'fear not,' [and] who is eternal.

धनसमृद्ध [ आणि ] शौर्यवान् इंद्राला सुखा- या लढाईत [ आणि ] स- ग्रामांत आम्ही बोलावूं– ऐकून ारा, प्रबळ [ आणि ] शत्रूंला णारा [आणि] लूट जिंकणारा असा जो इंद्र, त्या]ला आम्ही क्ष्यासाठीं युद्धांमध्यें बोलावूं.

10. Let us invoke for blessing in this fight, in [this] struggle Indra possessed of wealth [and] most brave—[invoke] in battles for protection mighty [Indra] who hears [our prayer], who slays the enemies, who conquers booties.

## सूक्तम् ३९–२७३.

विश्वामित्र ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

इन्द्रं मतिर्हृद आ वच्यमानाच्छा पतिं स्तोमतष्टा जिगाति
या जागृविर्विदथे शस्यमानेन्द्र यत्ते जायते विद्धि तस्य ॥

इन्द्रम् । मतिः । हृदः । आ । वच्यमाना । अच्छ । पतिम् । स्तोमऽतष्टा । जिगाति ।
या । जागृविः । विदथे । शस्यमाना । इन्द्र । यत् । ते । जायते । विद्धि । तस्य ॥ १ ॥

दिवश्चिदा पूर्व्या जायमाना वि जागृविर्विदथे शस्यमाना ।
भद्रा वस्त्राण्यर्जुना वसाना सेयमस्मे सनजा पित्र्या धीः ॥ २ ॥

दिवः । चित् । आ । पूर्व्या । जायमाना । वि । जागृविः । विदथे । शस्यमाना ।
भद्रा । वस्त्राणि । अर्जुना । वसाना । सा । इयम् । अस्मे इति । सनऽजा । पित्र्या । धीः ॥ २ ॥

---

### भाषाभाष्यम्.

१. स्तोमतष्टा (=स्तोमैः स्तोमकारिभिः स्तोतृभिः कृता) हृद आ वच्यमाना (=हृदयादुच्यमाना) मतिः (=स्तुतिः) पतिम् इन्द्रमच्छ जिगाति (=स्वामिनमिन्द्रं प्रति गच्छतु)।—हे इन्द्र, या जागृविः (=जागरूका=रात्रौ जाग्रती) विदथे शस्यमाना (=यज्ञ उच्चार्यमाणा च) यत् (=या) ते जायते (=त्वदर्थं जायते) तस्य विद्धि (=तस्या विद्धि=तां स्तुतिं जानीहि=तां गृहाण) ॥

२. इयं धीः (=इयं स्तुतिर्) दिवश्चिद् आ पूर्व्या जायमाना (=दिवसादपि पूर्वमुच्चार्यमाना) जागृविः (=रात्रौ जाग्रती) विदथे शस्यमाना (=यज्ञ उच्चार्यमाणा) भद्रा (=सुमङ्गलानि) अर्जुना (=शुक्लानि) वस्त्राणि (=उषःकालसंबन्धीनि तेजांसि) वसाना (=परिदधाना) [भवति]। सा अस्मे धीः (=अस्माकं स्तुतिः) पित्र्या (=पितृक्रमादागता) [अत एव] सनजा (=प्राची [भवति] ॥

-२७३.

श्वामित्र. देवता—
ष्टुप्.

र्गानीं केलेली [ आ-
तून उच्चारिली जात
स्तुति इंद्रस्वामीप्रत
हे इंद्रा, जी जागरूक
त उच्चारिली जाणारी
रचिली जाते, ती तूं

सूर्याच्याहि पूर्वी उत्पन्न
णारी, यज्ञामध्यें उच्चारिली जा-
री जागरूक [ स्तुति ] शुभ्र
गल वस्त्रें नेसलेली असते. ती ही
मची स्तुति वडिलांपासून आ-
ली सनातन होय.

## HYMN 39-273.

To *Indra.* By *Vis'vâmitra.* Metre— *Trishṭubh.*

1. May the hymn composed by the poets [and pronounced from the heart run to the lord Indra.— Accept, o Indra, the praise which is produced for thee, wakeful and sung in the sacrifice.

2. Born even before the day, wakeful, [and] sung in the sacrifice this hymn of ours is clad in white and auspicious raiments. It is our ancient ancestral hymn.

---

१. 'जागरूक.' म्हणजे इंद्राची स्तुति ण्याकरितां पुष्कळ रात्र असतांच गें होऊन बसलेल्या उपासकांनीं केली.

२. यांत देवस्तुतीचें स्वरूप फार त्तम रीतीनें वर्णिलेलें आहे.

'सूर्याच्याहि पूर्वी उत्पन्न होणारी' ' दिवश्चिदा पूर्व्या जायमाना.' म्हणजे र्योदयापूर्वी उच्चारिली जाणारी.

जागरूक म्हणण्याचें कारण वरच्या मंत्रावरील टीपेंत सांगितलेंच आहे.

'शुभ्र मंगल वस्त्रें नेसलेली.'=' अर्जुना भद्रा वस्त्राणि वसाना.' म्हणजे सूर्याचें कांहींहि तेज आकाशांत येण्यापूर्वी जीं उषेचीं शुभ्र आणि निर्मल तेजें, तद्रूपच वस्त्रें पांघरलेली.

' वडिलांपासून आलेली ' म्हणजे आमचे वाडवडील जशी स्तुति करीत आले आहेत त्याप्रमाणें आम्ही करीत आहों ती.

**यमा चिदत्र यमसूरसूत जिह्वाया अग्रं पतदा ह्यस्थात् ।**
**वपूंषि जाता मिथुना सचेते तमोहना तपुषो बुध्न एता ॥**

यमा । चित् । अत्र । यमऽसूः । असूत । जिह्वायाः । अग्रम् आ । हि । अस्थात् ।
वपूंषि । जाता । मिथुना । सचेते इति । तमःऽहना । तपुषः आऽईता ॥ ३ ॥

**नकिरेषां निन्दिता मर्त्येषु ये अस्माकं पितरो गोषु योधाः ।**
**इन्द्र एषां दृंहिता माहिनावानुद्गोत्राणि ससृजे दंसनावान् ॥ ४**

नकिः । एषाम् । निन्दिता । मर्त्येषु । ये । अस्माकम् । पितरः । गोषु । योधाः ।
इन्द्रः । एषाम् । दृंहिता । माहिनऽवान् । उत् । गोत्राणि । ससृजे । दंसनाऽवान् ॥ ४ ॥

---

## भाषायाम्.

३. अत्र ( =अस्माकं स्तुतिकाले ) यमसूश्चित् (=यमयोरश्विनोर्माता उषा अपि) यमौ ( =यमलौ तावश्विनौ ) असूत ( =उत्पादयति ) । [ तस्मिन्नेव काले ] जिह्वाया अग्रं पतत् आ अस्थात् हि ( =स्तोत्रकरणचपलं सत् तिष्ठति खलु ) । तपुषो बुध्ने ( =दिवसस्य मूले आरम्भे ) एता ( =आगतौ ) तमोहना ( =तमोनाशकौ ) मिथुना ( =मिथुनौ यमलावश्विनौ ) जाता ( =जातमात्रावेव ) वपूंषि सचेते ( =तेजांसि सेवेते धारयतः ) ॥

असूत । अश्विनोस्तत्र [ काले ] शस्यमानत्वात् । इति सायणः ॥

४. ये अस्माकं पितरः ( =अङ्गिरसो ) गोषु योधाः ( =पणिभिरपहृतासु गोषु योद्धारो वर्तन्ते ) एषां ( =तेषां ) मर्त्येषु नकिर्निन्दिता (=न कोऽपि दूषको भवति ) । माहिनावान् ( =महिमोपेतो ) दंसनावान् ( =पराक्रमवान् ) इन्द्रो [ हि ] एषां ( =तेषामङ्गिरसां ) दृंहिता गोत्राणि उत् ससृजे ( =पणिभिर्दृढीकृतानि गवां स्थानानि उद्धाट्य अपसृष्टवान् ) ॥

त्या वेळीं जुळ्यांची माता जुळ्यांना जन्म देते; आणि जिह्वेचें अग्र उडण्यास सिद्ध होऊन राहतें. दिवसाच्या आरंभीं येतात असे जे ते तमोनाशक जुळे, ते उत्पन्न होतांच तेज धारण करितात.

3. At its time the mother of the twins gives birth to the twins. The tip of the tongue stands ready to fly. The twins, that are destroyers of darkness and coming at the beginning of day, wear light so soon as they are born.

जे आमचे पितर गाईंकरितां युद्ध करीत होते त्यांची निंदा करणारा मनुष्यांमध्यें कोणीही नाहीं. [ कारण कीं ] महिमावान् आणि महापराक्रमवान् इन्द्र त्यांचे गाय कोंडून ठेविलेले गोठे उघडे करून सोडून देता झाला.

4. There is no reviler among men of those our fathers who fought about the cows. [For] Indra, possessed of greatness [ and ] performer of valorous deeds, broke open for them the fortified cowfolds.

३. जुळे म्हणजे अश्वीदेव. त्यांची आई म्हणजे येथें उषा समजली पाहिजे. ती अश्वींची आई म्हणण्याचें कारण असें कीं, अश्वी हे उषःकाळीं उगवत असतात. ते वर सांगितलेली स्तुति उत्पन्न होते त्यावेळीं उगवतात. त्या प्रसंगीं जिव्हेला स्फुरण येऊन ती देवस्तवन गाण्याविषयीं चंचळ होते.

४. 'जे पितर' म्हणजे अंगिरस. ते आदिक तेजोरूप आणि मेघोदकरूप गाई पणींनीं हरण करून नेल्या असतां, त्या परत आणण्याकरितां इंद्राच्या साहाय्यानें पणींबरोबर युद्ध करिते झाले; आणि त्यांच्या गाई जेथें पणींनीं कोंडून ठेविल्या होत्या, तीं ठिकाणें फोडून इंद्रानें गाई मुक्त करून दिल्या इत्यादि अंगिरसांची पूर्वी पुष्कळ वेळ आलेली कथा या आणि पुढील ऋचांमध्यें सांगितली आहे.

सखा ह यत्र सखिभिर्नवग्वैरभिज्ञ्वा सत्वभिर्गा अनुग्मन् ।
सत्यं तदिन्द्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियन्तम् ॥
॥

सखा । ह । यत्र । सखिऽभिः । नवऽग्वैः । अभिऽज्ञु । आ । स॰
भिः । गाः । अनुऽग्मन् ।
सत्यम् । तत् । इन्द्रः । दशऽभिः । दशऽग्वैः । सूर्यम् । विवेद
मसि । क्षियन्तम् ॥ ५ ॥ २९ ॥

इन्द्रो मधु संभृतमुस्रियायां पद्वद्विवेद शफवन्नमे गोः ।
गुहा हितं गुह्यं गूळ्हमप्सु हस्ते दधे दक्षिणे दक्षिणावान् ॥ ६ ॥

इन्द्रः । मधु । सम्ऽभृतम् । उस्रियायाम् । पत्ऽवत् । विवेद । शफऽ
वत् । नमे । गोः ।
गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । हस्ते । दधे । दक्षिणे ।
दक्षिणऽवान् ॥ ६ ॥

---

## भाषायाम्.

५. यत्र [ बिले ] सत्वभिः सखिभिर्नवग्वैः सखा इन्द्रः ( =इन्द्रस्तस्य शूराः सखायो नवग्वाश्च ) अभिज्ञु गा आ अनुग्मन् ( =अभिगतजानुकं यथा तथा गा अन्वगच्छन् ) तत् ( =तत्र बिले ) दशभिर्दशग्वैः [सहित] इन्द्रः सत्यं ( =नित्यं ) तमसि क्षियन्तं सूर्यम् ( =अन्धकारे वर्तमानं सूर्यं ) विवेद ( =लब्धवान् ) ॥

६. इन्द्रः उस्रियायां ( =गवि ) मधु संभृतम् [ अकरोत् ] ( =संभृतत्वेन स्थापितवान् ) । [ स ] पद्वत् विवेद ( =पादयुक्तं पशुधनं लब्धवान् ) । गोः शफवत् नमे ( =गोः खुरोपेतं धनं=खुरोपेतं गोरूपं धनम् अपहर्तृभ्यः पणिभ्यः सकाशात् स्ववशमानीतवान् ) । दक्षिणावान् ( =दानवान् दानशाली ) [ स ] गुहा हितं (=गुहायां वर्तमानं ) गुह्यम् अप्सु गूळ्हम् ( =अदृश्यं यथा तथोदकेष्वन्तर्हितं ) [ मायिनम् असुरं ] दक्षिणे हस्ते दधे ( =दधार=अगृहीत् ) ॥

जेथें सखा इंद्र आणि र सखे नवग्व गुडघ्यांनीं मागून गेले, तेथें दहा द- हेत इंद्र अंधकारांत अस- अविनाशी सूर्याला शोधून r झाला.

इंद्र गाईच्या अंगीं मधुर- मविता झाला. तो पाय अ- ा पशूंस प्राप्त करून देता ., तो खूर असलेल्या गाईस वाधीन करून घेता झाला. उ- दार इंद्र गुहेंत असलेल्या अदृश्य [ आणि ] पाण्यांत लपून राहि- लेल्या [ असुरा]ला आपल्या उ- जव्या हातांत धरिता झाला.

5. There Indra with the ten Das'agvas discovered the ever-lasting sun dwelling in darkness, where friend [Indra] and [his] friends the brave Navagvas, going on their knees, traced the cows.

6. Indra [has] the sweet juice gathered in the cow. He found the animals endowed with feet, he conquered the cattle endowed with hoofs. Bounteous [Indra] caught in his right hand the [demon] that lay invisible in the den and concealed in the waters.

---

५. 'नवग्व' आणि 'दशग्व' हे अंगिरसांपैकींच होते. सू. ६२ मं. ४ पहा.

६. यांत इंद्रानें गाईंची प्राप्ति करून देली आणि त्यांच्या अांगीं गोरस उत्पन्न केले, आणि गाईंस हरून नेणाऱ्या असु- राचा निग्रह केला, असें सांगितलें आहे. 'खूर असलेल्या गाईंस स्वाधीन क- रून घेता झाला '= शफवत् नमे गोः' हे शब्द कठिण आहेत. तरीहि 'शफवत् गोः' या पदांचा निर्वाह दुसऱ्या रीतीनें करण्याचा मार्ग दिसत नाहीं. शिवाय 'नमे' हें नमते या अर्थी जरी घेतां येईल तरी सायणानुसार आम्हीं केलेला अर्थ निघेल किंवा नाहीं याविषयीं सं- शय असून, 'नमें' हें सर्वानुदात्त नाहीं ही एक दुसरी अडचण आहेच.

ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरितादभीके ।
इमा गिरः सोमपाः सोमवृद्ध जुषस्वेन्द्र पुरुतमस्य कारोः ॥

ज्योतिः । वृणीत । तमसः । विऽजानन् । आरे । स्याम । दुःऽइ
अभीके ।
इमाः । गिरः । सोमऽपाः । सोमऽवृद्ध । जुषस्व । इन्द्र । पुरुऽतम
कारोः ॥ ७ ॥

ज्योतिर्यज्ञाय रोदसी अनु ष्यादारे स्याम दुरितस्य भूरेः ।
भूरि चिद्धि तुजतो मर्त्यस्य सुपारासो वसवो बर्हणावत् ॥ ८ ॥

ज्योतिः । यज्ञाय । रोदसी इति । अनु । स्यात् । आरे । स्याम
दुःऽइतस्य । भूरेः ।
भूरि । चित् । हि । तुजतः । मर्त्यस्य । सुऽपारासः । वसवः । बर्ह
णाऽवत् ॥ ८ ॥

---

## भाषायाम्.

७. तमसो विजानन् (=तमसः सकाशात् विशेषेण प्रादुर्भवन्) [इन्द्रो] ज्योतिर्वृणीत (=सूर्यरूपेण प्रकाशम् असेवत)। [अतो वयं] दुरितात् अभीके आरे स्याम (=पापसकाशाद् दूरे भवेम)। सोमपाः (=सोमस्य पातः) सोमवृद्ध (=सोमपानेन प्रवर्धितबल) हे इन्द्र, पुरुतमस्य कारोः (=स्तोत्रातिशयकरणेन महत्तमस्य स्तोतुर्मम) इमा गिरः (=इमाः स्तुतीर्) जुषस्व (=सेवस्व)॥

८. ज्योतिः (=सूर्यरूपं तेजो) यज्ञाय (=यज्ञस्य सिद्ध्यर्थं) रोदसी अनु स्यात् (=द्यावापृथिव्यावानीय तयोः पश्चात् स्वयमप्यागच्छतु)। [वयं] भूरेर्दुरितस्य आरे स्याम (=महतः पापस्य सकाशाद् दूरे भवेम)। हि (=यस्मात्कारणात्) हे वसवः (=साधवो देवाः), तुजतो मर्त्यस्य (=अतिशयेन देवभजनकर्म कुर्वतो मनुष्यस्य) बर्हणावत् (=शत्रुहिंसायुक्तं यथा तथा) भूरि चित् सुपारासः (=अत्यर्थमेव सुष्ठु पारयितारः=सुसहाया) [भवथ]॥

...धकारातून प्रगट ...रण करिता झाला ...पापासून दूर होऊं ... सोम पिणाऱ्या, हे ...ळ झालेल्या इंद्रा, ...कारी जो ह्या स्तोता सेवन कर.

7. Coming out conspicuously from darkness he wears effulgence. May we be far from sin. O Indra, that drinkest the soma, o thou invigorated by the soma, do thou accept these hymns of the most energetic poet.

...सूर्यरूप ] ज्योति य- ...वापृथिवींस पुढें घालून ...ही महा पापापासून दूर ... घडो. कारण हे चांगले ... हो, तुम्ही विशेषें करून ...ा मर्त्याला उत्तम साहाय्य ... [ आपला ] पराक्रम दाख- असतां.

8. May the light follow earth and heaven for the sacrifice. May we be far from the great sin. For you, o good [gods], are very much the helpers of the devout mortal, manifesting your power.

---

... 'सूर्य रूपानें इंद्र प्रकाशित झाला ... तर रात्रिरूप संकटांतून जसे आम्ही ... झालों आहों तसे पापापासून ... मुक्त होऊं असें घडो.'

८. 'द्यावापृथिवींस पुढें घालून येओ.' म्हणजे द्युमधील आणि पृथिवीवरील जे देव त्या सर्वांस घेऊन येओ.

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥
॥ २६ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽत
वाजऽसातौ
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि ।
जितम् । धनानाम् ॥ ९ ॥ २६ ॥ २ ॥

भाषायाम्.

९. अस्मिन् भरे वाजसातौ ( =संग्रामे युद्धे च ) मघवानं ( =धनवन्तं ) नृत
( =शूरतमम् ) इन्द्रं शुनं ( =सुखमुद्दिश्य ) हुवेम ( =आह्वयेम ) । [ अस्मान् ] शृ
ण्वन्तम् उग्रं ( =प्रबलं ) वृत्राणि घ्नन्तं ( =शत्रून् घ्नन्तं ) धनानां संजितं ( =सम्य
ग्जेतारं ) [ तं ] समत्सु ( =युद्धेषु ) ऊतये ( =रक्षणाय ) [ हुवेम ] ॥

सूक्तम् ४०—२७४.

विश्वामित्र ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे ।
स पाहि मध्वो अन्धसः ॥ १ ॥

इन्द्र । त्वा । वृषभम् । वयम् । सुते । सोमे । हवामहे ।
सः । पाहि । मध्वः । अन्धसः ॥ १ ॥

इन्द्र क्रतुविदं सुतं सोमं हर्य पुरुष्टुत ।
पिबा वृषस्व तातृपिम् ॥ २ ॥

इन्द्र । क्रतुऽविदम् । सुतम् । सोमम् । हर्य । पुरुऽस्तुत ।
पिब । आ । वृषस्व । ततृपिम् ॥ २ ॥

भाषायाम्.

१. हे इन्द्र, सोमे सुते ( =अभिषुते सति ) त्वा वृषभं ( =त्वां वीरं ) वयं ह
वामहे ( =आह्वयामः ) । स [ त्वं ] मध्वो अन्धसः पाहि ( =मधुरस्य सोमलक्ष
अन्नस्य भागं पिब ) ॥

नसमृद्ध [ आणि ] ...वान् इंद्राला सुखा- ...ईत [ आणि ] स- ...आम्ही बोलावूं. ऐकून ...बळ [ आणि ] शत्रूंला ...आणि] लूट जिंकणारा ...[ इंद्र, त्या]ला आम्ही ...र्थी युद्धांमध्यें बोलावूं.

9. Let us invoke for blessing in this fight, in [this] struggle, Indra possessed of wealth, [and] most brave— [invoke] in battles for protection mighty [Indra] who hears [ our prayer], who slays the enemies, who conquers booties.

---

...क्त ४०–२७४.

...–विश्वामित्र. देवता– ...द–गायत्री.

१. हे इंद्रा, सोम काढून आ- ...म्ही वीराला बोलावीत आहों. [ हा ] मधुर रस पी.

२. हे इंद्रा, हे बहुतांनीं स्त- ...वलेल्या, तूं काढिलेला प्रज्ञा ...उत्पन्न करणारा सोम प्रीतीनें ग्र- ...हण कर. [ हा ] तृप्तिकारक सोम [ ...आणि ] पोटांत ओत.

HYMN 40–274.

To *Indra*. By *Vis'vâmitra*. Metre—*Gâyatri*.

1. Having extracted the soma we are invoking thee, o Indra. Therefore do thou drink of the sweet juice.

2. Accept kindly the extracted soma that gives wisdom, o Indra praised of many! Drink and swallow the delectable juice.

---

* 'प्रज्ञा उत्पन्न करणारा '='क्रतु-... सोम पिल्यानें बळ प्राप्त होतें ही ...समजूत अशी आहे, तशीच त्यापासून उत्तम प्रज्ञा प्राप्त होते अशी ही समजूत आहे.

इन्द्र प्र णो धितावानं यज्ञं विश्वेभिर्देवेभिः ।
तिरः स्तवान विश्पते ॥ ३ ॥

इन्द्र । प्र । नः । धितऽवानम् । यज्ञम् । विश्वेभिः । देवेभिः ।
तिरः । स्तवान । विश्पते ॥ ३ ॥

इन्द्र सोमाः सुता इमे तव प्र यन्ति सत्पते ।
क्षयं चन्द्रास इन्दवः ॥ ४ ॥

इन्द्र । सोमाः । सुताः । इमे । तव । प्र । यन्ति । सत्ऽपते ।
क्षयम् । चन्द्रासः । इन्दवः ॥ ४ ॥

दधिष्वा जठरे सुतं सोममिन्द्र वरेण्यम् ।
तव द्युक्षास इन्दवः ॥ ५ ॥ १ ॥

दधिष्व । जठरे । सुतम् । सोमम् । इन्द्र । वरेण्यम् ।
तव । द्युक्षासः । इन्दवः ॥ ५ ॥ १ ॥

---

२. हे पुरुष्टुत ( =बहुभिः स्तुत ) इन्द्र, क्रतुविदं सुतं सोमं हर्य ( =प्रज्ञानस्य लम्भयितारम् अभिषुतं सोमं कामयस्व=कामेन पीत्वा संतृप्तो भव ) । पिब । तातृपिं ( =तर्पकं सोमम् ) आ वृषस्व ( =जठरे सिञ्च ) ॥

---

## भाषायाम्.

३. हे इन्द्र, हे स्तवान विश्पते ( =स्तूयमान विशां लोकानां पते ), विश्वेभिर्देवेभिः ( =सर्वैर्देवैः सहितस्त्वं ) नो धितावानं यज्ञम् ( =उत्तमहवीरूपेण धनेन युक्तमस्माकं यज्ञं ) प्र तिरः ( =प्रकर्षेण वर्धय ) ॥

४. हे इन्द्र, हे सत्पते, इमे सुताः ( =अभिषुताश् ) चन्द्रासः ( =आह्लादकरा ) इन्दवः सोमाः ( =सोमरसास् ) तव क्षयं प्र यन्ति ( =तव स्थानं गच्छन्ति ) ॥

५. हे इन्द्र, वरेण्यं सुतं सोमं ( =श्रेष्ठम् अभिषुतं सोमरसं ) जठरे दधिष्व ( =तवोदरे धारय )—द्युक्षास इन्दवस् तवै [ सन्ति ] ( =एते दिव्याः सोमास्तव भवन्ति ) ॥

हे इंद्रा, हे स्तविलेल्या तूं आमच्या समृद्ध य- देवांसह [ येऊन ] स-

हे इंद्रा, हे सत्पती, हे हे आल्हादकारक सोमरस ानाप्रत जात आहेत.

. हे इंद्रा, [हा] काढिलेला सोमरस तूं आपल्या उदरांत ण कर. [हे] द्युलोकनिवासी मरस असे [ होत ].

3. Promote with all the gods, o Indra, o praised lord of the people, our sacrifice rich in oblations.

4. These extracted soma juices that are delightful, are running to thy seat, o Indra, lord of the good.

5. Hold in thy stomach, o Indra, the excellent extracted soma—thine [are] these heavenly juices.

---

४. ' तुझ्या स्थानाप्रत '='तव क्षयम्.' णाचार्य ' तुझ्या उदरांत ' असा अर्थ करितात, पण तसा अवश्य नाहीं.

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे।
इन्द्र त्वादातमिद्यशः ॥ ६ ॥

गिर्वणः। पाहि। नः। सुतम्। मधोः। धाराभिः। अज्यसे।
इन्द्र। त्वाऽदातम्। इत्। यशः ॥ ६ ॥

अभि द्युम्नानि वनिन इन्द्रं सचन्ते अक्षिता।
पीत्वी सोमस्य वावृधे ॥ ७ ॥

अभि। द्युम्नानि। वनिनः। इन्द्रम्। सचन्ते। अक्षिता।
पीत्वी। सोमस्य। ववृधे ॥ ७ ॥

अर्वावतो न आ गहि परावतश्च वृत्रहन्।
इमा जुषस्व नो गिरः ॥ ८ ॥

अर्वाऽवतः। नः। आ। गहि। पराऽवतः। च। वृत्रऽहन्।
इमाः। जुषस्व। नः। गिरः ॥ ८ ॥

यदन्तरा परावतमर्वावतं च हूयसे।
इन्द्रेह तत आ गहि ॥ ९ ॥ २ ॥

यत्। अन्तरा। पराऽवतम्। अर्वाऽवतम्। च। हूयसे।
इन्द्र। इह। ततः। आ। गहि ॥ ९ ॥ २ ॥

---

## भाषायाम्.

६. हे गीर्वणः (=स्तुतिप्रियेन्द्र), नः सुतं पाहि (=अस्माकम् अभिषुतं सोमं पिब)। मधोर्धाराभिरज्यसे (=मधुरस्य सोमस्य धाराभिः सिच्यसे पूर्यसे)। हे इन्द्र, यशस्त्वादातमित् [भवति] (=यशस्त्वयैव दत्तं भवति=यशसो दाता त्वमेव भवसि) ॥

७. वनिनः (=हविषो दातुर्यजमानस्य) द्युम्नानि (=तेजस्वीनि हवींषि) अक्षिता (=क्षयरहितानि अखण्डितानि) इन्द्रम् अभि सचन्ते (=इन्द्रमभितः समवयन्ति)। [स] सोमस्य पीत्वी वावृधे (=सोमं पीत्वा प्रवृद्धो बभूव) ॥

८. हे वृत्रहन् (=वृत्रस्य हन्तरिन्द्र), अर्वावतः परावतश्च न आ गहि (

ोत्रकामी, तूं आम-
ग रस पी. तुला
सोमरसांच्या धारांनी
र्हों. हे इंद्रा, यशातें
आहेस.

ार उपासकाचीं समृद्ध
ाप्रत अक्षय सेवीत
[इंद्र] सोम पिऊन
ला आहे.

तूं आम्हांप्रत जवळून ये
हे वृत्रहन्त्या, तूं दुरून ये.
आमच्या स्तुति सेवन कर.
हे इंद्रा, जरी तुला दूर
त असतील आणि जवळ
त असतील [किंवा] मध्यें
त असतील, तरी तेथून तूं
े.

6. Drink of the extracted juice, o thou fond of praise! Thou art being filled with streams of the sweet [soma]. Thou only art the giver of glory, o Indra!

7. The rich oblations of the liberal sacrificer run towards Indra uninterruptedly. [Indra] has grown mighty by having drunk the soma.

8. Come unto us, o killer of Vṛitra, from near and from afar. Accept these our hymns.

9. Though thou mayest have been called to a distant place, and to one near at hand, or to an intermediate place, do thou come here thence, o Indra!

## सूक्तम् ४१–२७५.

विश्वामित्र ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

आ तू न इन्द्र मद्र्यग्घुवानः सोमपीतये ।
हरिभ्यां याह्यद्रिवः ॥ १ ॥

आ । तु । नः । इन्द्र । मद्र्यक् । हुवानः । सोमऽपीतये ।
हरिऽभ्याम् । याहि । अद्रिऽवः ॥ १ ॥

सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक् ।
अयुज्रन्प्रातरद्रयः ॥ २ ॥

सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः । आनुषक् ।
अयुज्रन् । प्रातः । अद्रयः ॥ २ ॥

---

मीपदेशाद्दूरदेशाच्च अस्मान् आगच्छ ) । इमा नो गिरो जुषस्व ( =एता अस्मा स्तुतीः सेवस्व ) ॥

९. हे इन्द्र, यत् परावतम् अर्वावतं च अन्तरा [ च ] हूयसे ( =यद्यपि त्वम् अन्यैरुपासकैर्दूरदेशं प्रति समीपदेशं प्रति च तथा दूरसमीपयोर्मध्यदेशं प्रति च हविर्ग्रहणार्थमाहूयसे ) तत इह आ गहि ( =तस्मात्स्थलादत्रागच्छ ) ॥

---

### भाषायाम्.

१. अद्रिवः ( =वज्रयुक्त ) हे इन्द्र, हुवानः ( =त्वमाहूयमानः सन् ) सोमपीतये ( =सोमपानाय ) मद्र्यक् नः ( =अस्मदभिमुखः सन्नस्मान् प्रति ) हरिभ्याम् आ तु याहि ( =हरिदश्वाभ्यां क्षिप्रमागच्छ ) ॥

२. ऋत्वियो नो होता सत्तः ( =ऋतौ यजनकर्तास्माकं होता निषण्णोस्ति ) । बर्हिरानुषक् तिस्तिरे ( =अनुषक्तं परस्परसंबद्धं यथा तथा स्तीर्णमभूत् ) । प्रातः ( =अस्मिन् प्रातः काले ) अद्रयोयुज्रन् ( =ग्रावाणः संगता अभूवन् ) । [ अत आगच्छ ] ॥

| –२७५. | HYMN 41–275. |
|---|---|
| ...मित्र. देवता— ...त्री. | To *Indra.* By *Vis'vâmitra.* Metre—*Gâyatrî.* |
| . हे वज्रधरा, आम्ही ...रीत आहों, तर तूं ...र्शी आपल्या पिव... इकडे सत्वर आ- | 1. Being praised come hither quickly unto us with thy golden horses, to drink the soma, o Indra, wielder of the thunderbolt! |
| ...म्य काळीं यजन कर- ...णारा आमचा होता ब- .... दर्भ एकमेकांस लागून ... आहेत. [ या ] प्रात:- ...[ ग्रावे ] पाषाण जोडिले | 2. Our invoker has sat down, who is always in season. The grass has been spread continuously. The pressing stones have been joined in the early morning. |

...होता बसला आहे.' म्हणजे ...ण्यास सिद्ध होऊन बसला

'पाषाण '=' अद्रय:.' म्हणजे सोमरस काढण्यासाठीं ग्रावे या नांवाचे जे पाषाण. ते जोडिले आहेत.

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद ।
वीहि शूर पुरोळाशम् ॥ ३ ॥

इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियन्ते । आ । बर्हिः । सीद ।
वीहि । शूर । पुरोळाशम् ॥ ३ ॥

रारन्धि सवनेषु ण एषु स्तोमेषु वृत्रहन् ।
उक्थेष्विन्द्र गिर्वणः ॥ ४ ॥

ररन्धि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् ।
उक्थेषु । इन्द्र । गिर्वणः ॥ ४ ॥

मतयः सोमपामुरुं रिहन्ति शवसस्पतिम् ।
इन्द्रं वत्सं न मातरः ॥ ५ ॥ २ ॥

मतयः । सोमऽपाम् । उरुम् । रिहन्ति । शवसः । पतिम् ।
इन्द्रम् । वत्सम् । न । मातरः ॥ ५ ॥ २ ॥

---

## भाषायाम्.

३. हे ब्रह्मवाहः (=स्तोत्रमेव वाहनं यस्य तादृश) शूर, इमा ब्रह्म (=एतानि स्तोत्राणि) क्रियन्ते [अस्माभिः] । आ बर्हिः सीद (=आगत्य बर्हिषि निषीद) पुरोळाशं वीहि (=पुरोडाशं नाम हविर्भक्षय) ॥

४. वृत्रहन् (=वृत्रस्य हन्तर्) गिर्वणः (=स्तोत्रप्रिय) हे इन्द्र, एषु नः सवनेषु (=एतेष्वस्माकं सोमयुक्तेषु यज्ञेषु) स्तोमेषु (=स्तोत्रेषु) उक्थेषु (=शस्त्रेषु) [च] रारन्धि (=रमस्व) ॥

५. मातरो वत्सं न (=मातरो गावो वत्सं यथा तथा) सोमपाम् उरुं शवसः पतिम् इन्द्रं (=सोमं पिबन्तं महान्तं बलस्य पतिम् इन्द्रं) मतयो रिहन्ति (=अस्माकं स्तुतयो लिहन्ति) ॥

...वाहना [इंद्रा], ...ं जात आहेत. तूं ये- ...स. हे शूरा, तूं पु- ...कर.

3. These hymns are being made, o thou who ridest on a hymn. Come and sit on the grass. Eat the offering, o brave Indra!

...त्रघ्ना, हे स्तुतिप्रिय ... आमच्या सवनांच्या ...च्या ठायीं आणि ...यीं रममाण हो.

4. Take pleasure in our offerings of soma in these hymns, o killer of Vṛitra, [and] in the recitals, o Indra fond of praise.

...ाला जशा माता तशा ...विशाल आणि बलपति ...[आमच्या] स्तुति प्रीतीनें ...आहेत.

5. The hymns lick with fondness Indra the drinker of soma, the great lord of strength, even as mothers lick their calf.

---

'स्तोत्रवाहन' = 'ब्रह्मवाहः.' ...ोड्यावर बसून आल्याप्रमाणें ...सून येणारा. उपासकांनीं स्तोत्र ...वर इंद्राचे घोडे आपलेआ... ...ले जात, अथवा तो स्तोत्रावर- ...त असे, म्हणून त्याला 'स्तोत्र- विशेषण दिलें आहे.

४. 'सवन' म्हणजे सोमाच्या योगानें जी उपासना ती. प्रतिदिवशीं तीन वेळ, म्हणजे प्रातःकाळीं, मध्याह्नीं आणि सायंकाळीं, अशीं तीन सवनें होत असत.

'स्तोम' म्हणजे स्तोत्र, आणि 'शस्त्र' म्हणजे विनस्वरानें म्हटलेले मंत्र.

स मन्दस्वा ह्यन्धसो राधसे तन्वा महे ।
न स्तोतारं निदे करः ॥ ६ ॥

सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे ।
न । स्तोतारम् । निदे । करः ॥ ६ ॥

वयमिन्द्र त्वायवो हविष्मन्तो जरामहे ।
उत त्वमस्मयुर्वसो ॥ ७ ॥

वयम् । इन्द्र । त्वाऽयवः । हविष्मन्तः । जरामहे ।
उत । त्वम् । अस्मऽयुः । वसो इति ॥ ७ ॥

मारे अस्मद्वि मुमुचो हरिप्रियार्वाङ्याहि ।
इन्द्र स्वधावो मत्स्वेह ॥ ८ ॥

मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् । याहि ।
इन्द्र । स्वधाऽवः । मत्स्व । इह ॥ ८ ॥

---

## भाषायाम्.

६. स [ त्वम् ] ( =अतस्त्वं ) महे राधसे ( =महते धनाय=महद्धनं दातुं ) तन्वा अन्धसो मदस्व ( =आत्मानं सोमस्य पानेन हर्षय ) । स्तोतारं निदे न करः ( =मद्रूपं तव स्तोतारं निन्दापात्रं मा कुरु ) ॥

७. हे इन्द्र, त्वायवो हविष्मन्तो वयं जरामहे ( =त्वत्कामाः सन्तो संभृतहविष्का वयं त्वां स्तुमः ) । उत हे वसो, त्वम् अस्मयुः ( =अपि च हे वसो, त्वमप्यस्मत्कामो ) [ भव ] ॥

८. हे हरिप्रिय ( =हरी हरिद्वर्णावश्वौ प्रियौ यस्य तादृश ), अस्मदारे मा वि मुमुचः ( =अस्मत्सकाशाद्दूरे तवाश्वान् मा मुञ्च ) । स्वधावः ( =स्वबलयुक्त ) इन्द्र, इह मत्स्व ( =इहैव माद्यस्व ) ॥

| | |
|---|---|
| इंद्रा ], तूं [आ-<br>त्ति [देण्या]साठीं<br>ग संतृप्त कर.<br>ग निंदेस पात्र | 6. Be exhilarated, therefore, with the soma to [give us] great wealth. Make not [thy] praiser an object of evil words. |
| तुझी वांछा क-<br>घेऊन [ तुला ]<br>ार हे वसू, तूंहि<br>छा करणारा [ हो ]. | 7. Fond of thee, and having prepared the offering we are praising thee, o Indra! Be thou also, fond of us, o Vasu! |
| वळे घोडे ज्याला प्रिय<br>अशा हे [ इंद्रा ], तूं [घो-<br>ड्यांपासून दूर सोडूं नको.<br>, हे बळवान् इंद्रा, तूं येथें<br>ानें हर्ष पाव. | 8. Do not unharness [thy horses] far from us, o thou who lovest the golden horses! Come hither. Be exhilarated here, o mighty Indra! |

वसू.' वसु हें इंद्राचें विशेषण वि-मापमाणें आहे. वेदांत अष्ट- वसु सांगितले आहेत त्यां पैकीं इंद्र हा एक होय. सू. ४५ मं. १ आणि टीप पहा.

अर्वाचं त्वा सुखे रथे वहतामिन्द्र केशिना ।
घृतस्नू बर्हिरासदे ॥ ९ ॥ ४ ॥

अर्वाञ्चम् । त्वा । सुऽखे । रथे । वहताम् । इन्द्र । केशिना ।
घृतस्नू इति घृतऽस्नू । बर्हिः । आऽसदे ॥ ९ ॥ ४ ॥

## भाषायाम्.

९. हे इन्द्र, केशिना (=स्कन्धप्रदेशे लम्बमानकेशयुक्तौ) तवाश्वौ त्वा सुखे अर्वाञ्चं वहतां (=सुखे रथे गृहीतासनं त्वाम् अत्रानयताम्)। घृतस्नू (=" श्रमजजलप्रस्रवणयुक्तौ ") [तवाश्वौ] बर्हिरासदे (=बर्हिष्युपवेशनार्थम्) [आवहताम्]

## सूक्तम् ४२-२७६.

विश्वामित्र ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

उप नः सुतमा गहि सोममिन्द्र गवाशिरम् ।
हरिभ्यां यस्ते अस्मयुः ॥ १ ॥

उप । नः । सुतम् । आ । गहि । सोमम् । इन्द्र । गोऽआशिरम् ।
हरिऽभ्याम् । यः । ते । अस्मऽयुः ॥ १ ॥

तमिन्द्र मदमा गहि बर्हिष्ठां ग्रावभिः सुतम् ।
कुविन्न्वस्य तृष्णवः ॥ २ ॥

तम् । इन्द्र । मदम् । आ । गहि । बर्हिःऽस्थाम् । ग्रावऽभिः । सुतम् ।
कुवित् । नु । अस्य । तृष्णवः ॥ २ ॥

## भाषायाम्.

१. हे इन्द्र, यस्ते [रथः] अस्मयुः (=यस्तव रथोऽस्मत्कामो वर्तते) [तदारूढस्त्वं] हरिभ्यां (=हरिदश्वाभ्यां) नो गवाशिरं सुतं सोमं (=गोरसयुक्तम् अभिषुतं सोमम्) उप आ गहि (=आगच्छ) ॥

२. हे इन्द्र, ग्रावभिः सुतम् (=अभिषुतं) बर्हिःष्ठां (=बर्हिषि तिष्ठन्तं) मदम् आ गहि (=तं मदकारकं सोमम् आगच्छ)। कुवित् नु (=प्रभूतम्) तृष्णवः (=तस्य सोमस्य पानेन तृप्तो भव) ॥

तुझे अयाळी रथांत तुला इकडे घोडे दर्भावर इकडे आणोत ].

9. May thy maned horses bring thee hither, o Indra, in thy comfortable chariot—[thy horses] dripping with clarified butter, to sit, on the grass.

—' घृतस्नू.' म्हणजे घृत आहे असे. सायणां- प्रमाणें येथें घृत म्हणजे चालण्याच्या श्रमापासून आंगांतून गळणारें पाणी.

---

४२–२७६.

विश्वामित्र. देवता— गायत्री.

HYMN 42-276.

To *Indra*. By *Vis'vâmitra*. Metre—*Gâyatrî*.

आमच्या काढिलेल्या सो- हे इंद्रा, जो तुझा [रथ] वांछा करणारा [होय], सून ] तूं तुझ्या पिवळ्या गोरसयुक्त सोमाप्रत ये.

1. Come to our extracted soma mixed with milk and malt with thy golden horses o Indra, [and] in thy [chariot] which [is] fond of us.

हे इंद्रा, तो जो ग्राव्यानें ला आणि दर्भावर ठेवि- हर्षकारक सोम, त्याजप्रत तूं करून तूं यथेच्छ संतृप्त हो.

2. Come to that exhilarating soma extracted with the stones and placed on the grass. Be thou greatly delighted with it.

इन्द्रमित्था गिरो ममाच्छागुरिषिता इतः ।
आवृते सोमपीतये ॥ ३ ॥

इन्द्रम् । इत्था । गिरः । मम । अच्छ । अगुः । इषिताः । इतः ।
आऽवृते । सोमऽपीतये ॥ ३ ॥

इन्द्रं सोमस्य पीतये स्तोमैरिह हवामहे ।
उक्थेभिः कुविदागमत् ॥ ४ ॥

इन्द्रम् । सोमस्य । पीतये । स्तोमैः । इह । हवामहे ।
उक्थेभिः । कुवित् । आऽगमत् ॥ ४ ॥

इन्द्र सोमाः सुता इमे तान्दधिष्व शतक्रतो ।
जठरे वाजिनीवसो ॥ ५ ॥ ५ ॥

इन्द्र । सोमाः । सुताः । इमे । तान् । दधिष्व । शतक्रतो इति शतऽक्रतो ।
जठरे । वाजिनीवसो इति वाजिनीऽवसो ॥ ५ ॥ ५ ॥

विद्मा हि त्वा धनंजयं वाजेषु दधृषं कवे ।
अधा ते सुम्नमीमहे ॥ ६ ॥

विद्म । हि । त्वा । धनम्ऽजयम् । वाजेषु । दधृषम् । कवे ।
अध । ते । सुम्नम् । ईमहे ॥ ६ ॥

## भाषायाम्.

३. इत इत्था इषिताः (=अस्मत्सकाशात् सत्यं प्रेरिता ) मम गिरः (=स्तुतयः ) इन्द्रमच्छ सोमपीतये आवृते अगुः ( =सोमपानार्थम् इन्द्रम् अत्रानेतुं तं गच्छन्तु ) ॥

४. सोमस्य पीतये (=सोमपानार्थम् ) इन्द्रं स्तोमैः (=स्तोत्रैर् ) इह हवामहे (=अत्र ह्वयामः ) । उक्थेभिः (=शस्त्रैः ) कुवित् आगमत् ( =बहुवारम् आगच्छतु ) ॥

५. हे इन्द्र, इमे सोमाः सुताः ( =अभिषुताः ) [ सन्ति ] । हे शतक्रतो (=बहुप्रज्ञ ), हे वाजिनीवसो (=धनवन्निन्द्र ), तान् जठरे दधिष्व (=तवोदरे धारय ) ।

६. हि ( =यस्मात्कारणात् ) हे कवे ( =मेधाविन् ), त्वा वाजेषु धनंजयं दधृषं विद्म ( =संग्रामेषु त्वं शत्रुधनानां जेता शत्रूणां धर्षकश्च भवसीति जानीमः ) । अध ते सुम्नम् ईमहे ( =अतः कारणात् तव सुखं याचामहे ) ॥

...दूर येथून प्रेरिले-
...स्तुति इंद्राला सोम
...आणण्याकरितां त्या-
...त.

...म पिण्यासाठीं इंद्राला
...त्रांनीं येथें बोलावितों.
...योगाने बहुवार येथें

...हे इंद्रा, हे सोम काढिले
...]. त्यांस हे बहुप्रज्ञा, हे
...पन्ना, तूं [ आपल्या ] उद-
...धारण कर.

... कारण कीं हे प्रज्ञावान्
... तूं युद्धांमध्यें धन जिंकणारा
...णि ] [ शत्रु ]धर्षक आहेस
आम्ही जाणतों. म्हणून आम्ही
धन याचितों.

3. May my hymns sent forth from here with sincerity go towards Indra to turn him hither for drinking the soma.

4. With praises we invoke Indra hither to drink the soma. May he come by [our] recitals.

5. These somas have been extracted. Hold them in thy belly, o Indra possessed of a hundred talents, o thou possessed of wealth.

6. For we know, o wise [Indra], that thou art the conqueror of spoil and a defeater of the enemies in battles. Therefore we are imploring thy bounty, o Indra.

---

' तुझें धन '=' ते सुम्नम्. ' तूं जें | धन उपासकाला देत असतोस तें.

इममिन्द्र गवाशिरं यवाशिरं च नः पिब ।
आगत्या वृषभिः सुतम् ॥ ७ ॥

इमम् । इन्द्र । गोऽआशिरम् । यवऽआशिरम् । च । नः । पिब
आऽगत्य । वृषऽभिः । सुतम् ॥ ७ ॥

तुभ्येदिन्द्र स्व ओक्ये३सोमं चोदामि पीतये ।
एष रारन्तु ते हृदि ॥ ८ ॥

तुभ्य । इत् । इन्द्र । स्वे । ओक्ये । सोमम् । चोदामि । पीतये
एषः । ररन्तु । ते । हृदि ॥ ८ ॥

त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे ।
कुशिकासो अवस्यवः ॥ ९ ॥ ६ ॥

त्वाम् । सुतस्य । पीतये । प्रत्नम् । इन्द्र । हवामहे ।
कुशिकासः । अवस्यवः ॥ ९ ॥ ६ ॥

---

## भाषायाम्.

७. हे इन्द्र, वृषभिः सुतं ( =बलवद्भिर्ग्रावभिरभिषुतम् ) इमं गवाशिरं यवाशिरं च नः [ सोमम् ] आगत्य पिब ( =पयआदिभिर्युक्तं यवमिश्रणोपेतं च सोमं प्रत्या- गत्य तं पिब ) ॥

८. हे इन्द्र, तुभ्य इत् ( =त्वदर्थमेव ) स्वे ओक्ये सोमं चोदामि ( =तव स्व- कीयभूते गृहे सोमं प्रेरयामि ) । एष ते हृदि रारन्तु (=तव हृदयेऽत्यर्थं रमताम् ) ॥

९. हे इन्द्र, [ वयम् ] अवस्यवः ( =रक्षणेच्छवः ) कुशिकासः ( =कुशिकगो- त्रोत्पन्ना उपासकाः ) सोमस्य पीतये ( =पानाय ) प्रत्नं त्वां हवामहे ( =पुरातनं त्वाम् आह्वयामः ) ॥

इंद्रा, प्रबळ ग्राव्यांच्या
ादिलेला आमचा हा
आणि यवयुक्त सोम तूं

: इंद्रा, तुजसाठींच हा
याला तुझ्या स्वताहाच्या
पाठवितों. हा तुझ्या अं-
ांत अत्यंत रममाण होओ.

. हे इंद्रा, आम्ही रक्षणेच्छु
िक तुज पुरातनाला सोम पि-
ासाठीं बोलावितों.

7. Come, o Indra, and drink this our soma mixed with milk and malt and extracted with the strong pressing stones.

8. I send for thee alone to drink, o Indra, the soma into thy own home. May it play in thy heart.

9. We Kus'ikas, desirous of help, are invoking thee the ancient one, o Indra, for to drink the soma.

१. 'कुशिक' म्हणजे विश्वामित्र- | कुळांतील पुरुष.

## सूक्तम् ४३–२७७.

विश्वामित्र ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

**आ याह्यर्वाङुप वन्धुरेष्ठास्तवेदनु प्रदिवः सोमपेयम् ।**
**प्रिया सखाया वि मुचोप बर्हिस्त्वामिमे हव्यवाहो हवन्ते ॥**

आ । याहि । अर्वाङ् । उप । वन्धुरेऽस्थाः । तव । इत् । अनु । प्रऽदिवः । सोमऽपेयम् ।
प्रिया । सखाया । वि । मुच । उप । बर्हिः । त्वाम् । इमे । हव्यऽवाहः हवन्ते ॥ १ ॥

**आ याहि पूर्वीरति चर्षणीराँ अर्य आशिष उप नो हरिभ्याम् ।**
**इमा हि त्वा मतयः स्तोमतष्टा इन्द्र हवन्ते सख्यं जुषाणाः ॥२॥**

आ । याहि । पूर्वीः । अति । चर्षणीः । आ । अर्यः । आऽशिषः । उप । नः । हरिऽभ्याम् ।
इमाः । हि । त्वा । मतयः । स्तोमऽतष्टाः । इन्द्र । हवन्ते । सख्यम् । जुषाणाः ॥ २ ॥

### भाषायाम्.

१. [ हे इन्द्र ], वन्धुरेष्ठाः ( =रथे तिष्ठन् सन् ) अर्वाङ् उप आ याहि ( =अ... आगच्छ ) । सोमपेयम् अनु प्र दिवस्तवेत् ( =सोमपानं पुरातनकालादारभ्य तवैव [ भवति ] । प्रिया सखाया उप बर्हिर्वि मुच ( =प्रियौ सखिभूतौ तवाश्वौ बर्हि... समीपे रथाद्विमुञ्च ) । इमे हव्यवाहः ( =हव्यस्य वाहका ऋत्विजस् ) त्वां हव... ( =त्वाम् आह्वयन्ति ) ॥

२. [हे इन्द्र], पूर्वीश्चर्षणीः अति आ याहि (=बहून् अन्योपासकजनान् अति... ऽभ्यागच्छ ) । हरिभ्यां ( =तव हरिद्वर्णाश्वाभ्यां युक्तः सन् ) नः (=अस्माकम् ) अ... आशिषः ( =देवान् गन्धर्वादेवकामाः प्रार्थनाः प्रति ) आ [ याहि ] । हि ( =यस... ...त्कारणात् ) हे इन्द्र, स्तोमतष्टाः ( =स्तोमकारिभी रचितास् ) [ तव ] सख्यं जुष... ( =मित्रत्वं सेवमाना=याचमाना ) इमा मतयः ( =एता अस्मदीयाः स्तुतयस् ) हवन्ते ( =त्वाम् आह्वयन्ति ) ॥

[illegible]३-२७७.

[illegible]वामित्र. देवता—[illegible]ष्टुप्.

[illegible] रथारूढ होऊन इकडे [illegible] काळापासून सोमपान [illegible]. तुझे प्रिय सखे जे [illegible]घोडे त्यांस ] [आमच्या] [illegible] सोड. हवि अर्पण क[illegible] ऋत्विज् तुला बोलावीत [illegible]

२. पुष्कळ लोकांस वगळून तूं [illegible] आमच्या भाविक प्रार्थनांप्रत [illegible] पिवळ्या घोड्यांनीं ये. कारण कीं, हे इंद्रा, स्तोत्रकर्त्यांनीं रचिलेल्या ह्या स्तुति तुझें सख्य [illegible] तुला बोलावीत आहेत.

## HYMN 43-277.

To *Indra*. By *Vis'vâmitra*. Metre—*Trishṭubh*.

1. Come hither, mounted on thy chariot. To thee only belongs from ancient time the drinking of the soma. Unharness the horses thy dear friends, near the sacred grass. These bearers of the oblation are calling thee.

2. Come thou, passing over many people, come to our anxious prayers with thy golden horses. For these hymns, composed by the poets, [and] desirous of [thy] friendship, are invoking thee, o Indra!

---

१. 'रथारूढ'='वन्धुरेष्ठाः.' अश्व[illegible] जेथें बसून रथ हाकावयाचा त्या [illegible]नावर बसलेला. म्हणजे, आपला [illegible] हाकीत इकडे ये.

२. 'पुष्कळ लोकांस वगळून'='अति [illegible]र्षणीः.' म्हणजे, दुसरे पुष्कळ उपा[illegible]सक लोक तुला बोलावीत असतील त्यांजकडेस न जातां इकडे ये.

'भाविक प्रार्थना'='अर्य आशिषः.' अक्षरशः तुजप्रत जाण्याविषयीं उत्सुक अशा ज्या, त्यांजप्रत.

आ नो यज्ञं नमोवृधं सजोषा इन्द्र देव हरिभिर्याहि तूयम्
अहं हि त्वा मतिभिर्जोहवीमि घृतप्रयाः सधमादे मधूनाम्

आ । नः । यज्ञम् । नमःऽवृधम् । सऽजोषाः । इन्द्र । देव । हरिऽभिः । याहि । तूयम् ।
अहम् । हि । त्वा । मतिऽभिः । जोहवीमि । घृतऽप्रयाः । सधऽमादे । मधूनाम् ॥ ३ ॥

आ च त्वामेता वृषणा वहातो हरी सखाया सुधुरा स्वङ्गा ।
धानावदिन्द्रः सवनं जुषाणः सखा सख्युः शृणवद्वन्दनानि ॥४॥

आ । च । त्वाम् । एता । वृषणा । वहातः । हरी इति । सखाया । सुऽधुरा । सुऽअङ्गा ।
धानाऽवत् । इन्द्रः । सवनम् । जुषाणः । सखा । सख्युः । शृणवत् । वन्दनानि ॥ ४ ॥

---

## भाषायाम्.

३. देव (=द्योतमान) हे इन्द्र, हरिभिः सजोषाः (=हरिद्वर्णैरश्वैर्युक्तस्त्वं) नमोवृधं (=स्तोत्रेण त्वां वर्धयितारं) नो यज्ञम् (=अस्माकं यज्ञं प्रति) तूयं (=शीघ्रम्) आ याहि (=आगच्छ)। हि (=यस्मात्) घृतप्रयाः (=घृतयुक्तहविर्लक्षणान्नवान्) अहं मतिभिः (=स्तुतिभिस्) त्वा मधूनां सधमादे (=मधुराणां सोमरसानां सहपानस्थाने त्वां) जोहवीमि (=अत्यन्तमाह्वयामि) ॥

४. च (=अपि च) त्वाम् एता (=एतौ) सखाया (=मित्रभूतौ) सुधुरा सुअङ्गा (=शोभनधुर्युक्तौ शोभनावयवयुक्तौ च) वृषणा हरी (=बलवन्तौ हरिद्वर्णाश्वौ) आ वहातः (=आवहताम्)। सखा (=सखिभूत) इन्द्रो धानावत् सवनं जुषाणः (=भृष्टयवोपेतं सोमाभिषवणं सेवमानः) सख्युर्वन्दनानि शृणवत् (=सखिभूतस्य मम स्तोत्राणि शृणुयात्) ॥

यमान इंद्रा, तूं, प्रबल करणाऱ्या प्रत तुझ्या पिवळ्या त्वर ये. कारण कीं, अन्न घेऊन स्तुतीं- तुला मधुर• सोमाच्या अत्यंत आळवीत

आणि वीर्यवंत, सुधुर सुंदरांगवंत ते सखे तुझे पि- घोडे तुला येथें आणोत. र्नीं युक्त जें सवन तें सेवून इंद्र [ मज ] सख्याचीं स्तवनें ो.

3. Come quickly, o resplendent Indra, accompanied by thy golden horses to our sacrifice that invigorates [thee] with a hymn. For offering the sacrificial food mixed with clarified butter, I am again and again invoking thee with praises to the drinking seat of the delicious somas.

4. May these thy friends the strong, well-yoked and handsome-limbed golden horses bring thee hither.—May friend Indra, enjoying the soma-offering accompanied by fried barley, hear the prayers of [ this ] his friend.

---

३. 'पानभूमीमध्यें '=' सधमादे.' जेथें सगळ्यांनीं मिळून सोमपान ाचें त्या ठिकाणीं.

४. 'सुधुर '=' सुधुरा.' म्हणजे ज्यांच्या र ठेविलेलें जुकड चांगलें शोभत आहे असे.

'धानांनीं.' भाजलेले यव जे त्यांस धाना असें म्हणत. ह्या धाना इंद्राला तशाच इंद्राच्या घोड्यांला अर्पण करण्याची चाल असे.

कुविन्मा॑ गो॒पां कर॑से॒ जन॑स्य कुविद्राजा॑नं मघवन्नृजीषिन् ।
कु॒विन्म॒ ऋषिं॑ पपि॒वांसं॑ सु॒तस्य॑ कु॒विन्मे॒ वस्वो॑ अ॒मृत॑स्य॒ शिक्षाः ॥

कुवित् । मा॒ । गो॒पाम् । कर॑से । जन॑स्य । कु॒वित् । राजा॑नम् । म॒घ॒वन् । ऋ॒जी॒षि॒न् ।
कुवित् । मा॒ । ऋषि॑म् । प॒पि॒ऽवांस॑म् । सु॒तस्य॑ । कु॒वित् । मे॒ । वस्वः॑ । अ॒मृत॑स्य । शिक्षाः॑ ॥ ५ ॥

आ त्वा॑ बृ॒हन्तो॒ हर॑यो यु॒जा॒ना अ॒र्वागि॑न्द्र सध॒मादो॑ वहन्तु ।
प्र ये द्वि॒ता दि॒व ऋ॒ञ्जन्त्याताः॒ सुसं॑मृष्टासो वृष॒भस्य॑ मू॒राः ॥ ६ ॥

आ । त्वा॒ । बृ॒हन्तः॑ । हर॑यः । यु॒जा॒नाः । अ॒र्वाक् । इ॒न्द्र॒ । स॒ध॒ऽमादः॑ । व॒ह॒न्तु॒ ।
प्र । ये । द्वि॒ता । दि॒वः । ऋ॒ञ्जन्ति॑ । आताः॑ । सु॒ऽसं॑मृष्टासः । वृ॒ष॒भस्य॑ । मू॒राः ॥ ६ ॥

---

## भाषायाम्.

५. हे इन्द्र, कुवित् मा जनस्य गोपां करसे (=बहुवारं मां जनस्य रक्षितारं कुर्वीति प्रार्थये=कुर्वेत्र)। हे मघवन् ऋजीषिन् (=सोमयुक्त हे धनवन्निन्द्र), कुवित् [मां] राजानं [करसे] (=मां राजानं कुर्वेत्र)। मा सुतस्य पपिवांसम् ऋषिं, कुवित् [करसे] (=मां पीतसोमम् ऋषिम्="अतीन्द्रियार्थस्य द्रष्टारं" कुर्वेत्र)। कुवित् मे अमृतस्य वस्वः शिक्षाः (=मां मरणरहितं धनं देयेत्र)॥

६. हे इन्द्र, बृहन्तः (=महान्तः) सधमादः (=त्वया सह माद्यन्तो) हरयः (=तव पीताश्वा) युजानाः (=रथे युज्यमानाः सन्तस्) त्वा अर्वाक् आ वहन्तु (=त्वाम् अत्रानयन्तु)। ये मूराः (=वेगवन्तो) वृषभस्य सुसंमृष्टासः (=शोभनं यथा तथा वीरस्य तव हस्ताभ्यां सुष्ठु स्पृष्टाः शोभनं यथा तथा स्पृष्टाः सन्तो) दिव आताः (=द्युलोकस्य दिशो) द्विता (=द्विप्रकाराभ्यां) प्र ऋञ्जन्ति (=प्रकर्षेण साधयन्ति प्रकृष्टं यथा तथा ताः प्रति धावन्ति)॥

तूं मला जनांचा
२. [illegible] मघवन्, हे सोमवन्,
न[illegible] [illegible] [कर]. मला पीत-
[illegible] कर ]. मला अक्षय

5. Do make me a protector of the people. Do [make me] a king, o Maghavan to whom soma is offered! Do make me a Rishi that has drunk the soma. Do bestow on me the immortal wealth.

इंद्रा, महान् आणि तुज
[illegible] सोमपानानें ] हर्ष पाव-
[illegible] पिवळे घोडे [ रथास ]
[illegible] जाऊन तुला इकडे आ-
[illegible]; जे [तुज] वीराच्या [हस्तां]-
[illegible] चांगले थापटलेले वेगवंत
[illegible] ] द्युलोकाच्या दिशांप्रत
[illegible] दोन प्रकारांनीं धावतात.

6. May the great golden horses that are exhilarated along with thee, o Indra, bring thee hither being yoked [to thy chariot]; [those] quick [horses] which, well-touched by thee the hero, extend in two ways straight in the directions of heaven.

---

५. 'पीतसोम ऋषि '=' पपिवां-[illegible] ऋषिं.' म्हणजे ज्याणें सोमपान केलें [illegible] असा ऋषि. या विशेषणाचा अ-[illegible] असा दिसतो कीं, जो ऋषि आ-[illegible] सोमपान करून सोमाची आहुति [illegible] अर्पण करितो असा ऋषि मला कर.

६. 'दोन प्रकारांनीं '=' द्विता.' दोन प्रकार कोणते ते आमच्यानें सांगवत नाहींत. परंतु दुसरा अर्थ संभवतो असा दिसत नाहीं.

इन्द्र पिब॒ वृष॑धूतस्य॒ वृष्ण॒ आ यं ते॑ श्ये॒न उ॑श॒ते ज॒भार॑ ।
यस्य॒ मदे॑ च्या॒वय॑सि॒ प्र कृ॒ष्टीर्यस्य॒ मदे॒ अप॑ गो॒त्रा व॒वर्थ॑ ॥
इन्द्र॑ । पिब॑ । वृष॑ऽधूतस्य । वृष्णः॑ । आ । यम् । ते॒ । श्ये॒नः । उ॒श॒ते । ज॒भार॑ ।
यस्य॑ । मदे॑ । च्य॒वय॑सि । प्र । कृ॒ष्टीः । यस्य॑ । मदे॑ । अप॑ । गो॒त्रा । व॒वर्थ॑ ॥ ७ ॥

शु॒नं हु॑वेम म॒घवा॑न॒मिन्द्र॑म॒स्मिन्भरे॒ नृत॑मं॒ वाज॑सातौ ।
शृ॒ण्वन्त॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नन्तं॑ वृ॒त्राणि॑ सं॒जितं॒ धना॑नाम् ॥८॥७॥
शु॒नम् । हु॒वेम॒ । म॒घऽवा॑नम् । इन्द्र॑म् । अ॒स्मिन् । भरे॑ । नृऽत॑मम् । वाज॑ऽसातौ ।
शृ॒ण्वन्त॑म् । उ॒ग्रम् । ऊ॒तये॑ । स॒मत्ऽसु॑ । घ्नन्त॑म् । वृ॒त्राणि॑ । स॒म्ऽजित॑म् । धना॑नाम् ॥ ८ ॥ ७ ॥

---

## भाषायाम्.

७. हे इन्द्र, वृषधूतस्य ( =वृषभिर्बलवद्भिर्ऋत्विग्भिरभिषुतस्य ) वृष्णः ( =बलवतः सोमस्य ) पिब ( =तादृशं सोमं पिब ) । यं [ सोमम् ] उशते ते ( =तं कामयमानाय तुभ्यं ) श्येनः आ जभार ( =आजहार ) । यस्य मदे ( =यस्य पानेन मदे जाते सति ) कृष्टीः प्र च्यावयसि ( =शत्रुभूतान् जनान् प्रकर्षेण पातयसि संग्रामे ) । यस्य [ च ] मदे गोत्रा अप ववर्थ ( =गोत्राणि पणिभिरपहृतानां गवां पिहितानि स्थानानि उद्घाटयसि ) ॥

८. अस्मिन् भरे वाजसातौ ( =संग्रामे युद्धे च ) मघवानं ( =धनवन्तं ) नृ[तमं] ( =शूरतमम् ) इन्द्रं शुनं ( =सुखमुद्दिश्य ) हुवेम ( =आह्वयेम ) । [ अस्मान् ] [शृ]ण्वन्तम् उग्रं ( =प्रबलं ) वृत्राणि घ्नन्तं ( =शत्रून् घ्नन्तं ) धनानां संजितं ( =स[म्य]ग्जेतारं ) [ तं ] समत्सु ( =युद्धेषु ) ऊतये ( =रक्षणाय ) [ हुवेम ] ॥

| | |
|---|---|
| [illegible], प्रबळ [वीरां]नीं [illegible] [ सोम ] तूं पी. [illegible] तुज प्राशनोत्सु- [illegible] [ पक्षी ] आणिता [illegible] मादांत तूं प्रबळ [illegible] पाडाव करितोस, ज्याच्या मादांत तूं गा- [illegible]घडून टाकितोस. | 7. Drink, o Indra, of the strong soma, prepared by the strong heroes; the soma which the eagle brought for thee that lovest [to drink it]; in the exhilaration of which thou dost overthrow the mighty enemies; in the exhilaration of which thou didst throw open the strongholds of the cows. |
| धनसमृद्ध [ आणि ] [illegible] शौर्यवान् इंद्राला सुखा- [illegible] लढाईंत [ आणि ] सम- [illegible] आम्ही बोलावूं. ऐकून [illegible]णारा, प्रबळ [ आणि ] शत्रूंला [illegible]णारा [आणि] लूट जिंकणारा असा जो इंद्र, त्या]ला आम्ही [illegible]ण्यासाठीं युद्धांमध्यें बोलावूं. | 8. Let us invoke for blessing in this fight, in [this] struggle, Indra possessed of wealth, [and] most brave—[invoke] in battles for protection mighty [Indra], who hears [our prayer], who slays the enemies, who conquers booties. |

[illegible] 'प्रबळ वीरांनीं '=' वृषधूतस्य.' [illegible] प्रबळ जे सोम काढणारे उपासक [illegible] ऋत्विज, त्यांहीं मंथन करून [illegible]केला. सायणाचार्य ' प्रबळ ग्राव्यांनीं' [illegible] अर्थ करतात.

[illegible] आणिता झाला.'=' श्येन आ जभार.' सू. ८० मं. २ आणि टीप पहा.

हें आणि या पुढचें २७८ अशा या दोन सूक्तांमध्यें ' हरि ' शब्दाची आवृत्ति पुष्कळ वेळ केली असून त्याच्या अर्था विषयीं बरेच श्लेष जाणविले आहेत.

समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके ।
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥ ७ ॥

समान्या । वियुते इति विऽयुते । दूरेअन्ते इति दूरेऽअन्ते । ध्रुवे । पदे । तस्थतुः । जागरूके इति ।
उत । स्वसारा । युवती इति । भवन्ती इति । आत् । ऊं इति । ब्रुवाते इति । मिथुनानि । नाम ॥ ७ ॥

विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते ।
एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम् ॥ ८ ॥

विश्वा । इत् । एते इति । जनिम । सम् । विविक्तः । महः । देवान् । बिभ्रती इति । न । व्यथेते इति ।
एजत् । ध्रुवम् । पत्यते । विश्वम् । एकम् । चरत् । पतत्रि । विषुणम् । वि । जातम् ॥ ८ ॥

## भाषायाम्.

७. समान्या वियुते (=समाने परस्परप्रीगनाख्येन कर्मणैकमत्यं गते अपि परस्परं वियुक्ते) दूरेअन्ते (=दूरप्रान्ते) जागरूके (=जाग्रत्यौ) [ते द्यावापृथिव्यौ] उत युवती स्वसारा भवन्ती (=नित्यतरुणे स्वसारौ भूत्वा) ध्रुवे पदे (=अविनाशिनि स्थले) तस्थतुः । आत् उ (=तदनन्तरं) मिथुना नाम ब्रुवाते (=द्वन्द्वानि नामानि उर्वी पृथिवी बहुले रोदसी पुरोहिते द्यावापृथिव्यावित्यादीनि उच्येते=तादृशैर्नामभिः स्तूयेते) ॥

८. एते [द्यावापृथिव्यौ] विश्वा इत् जनिमा (=सर्वाण्यपि भूतजातानि) सं विविक्तः (=सम्यग्धारयतः=स्वावकाशे वासयतः) । महो देवान् बिभ्रती न व्यथेते (=महतोपि देवान् धारयन्त्यौ न खिद्यते) । [तयोर्मध्ये द्यौष्पिता] एजत् ध्रुवं (=जङ्गमात्मकं स्थावरात्मकं च) विश्वमेकम् (=इदं सर्वं जगत्) चरत् पतत्रि विषुणं वि जातं (=चञ्चलम् उत्पतनशीलं च नानारूपं पक्षिजातं) पत्यते (=प्रभवति तेषां सर्वेषां पतिर्भवति) ॥

किं च एजज्जङ्गमात्मकं ध्रुवं स्थावरात्मकं च विश्वं जगदेकं स्थानं पृथिवीमेव पत्यते । अभिगच्छति । तथा चरच्चलं पशुजातं पतत्रि पक्षिजातं च विषुणं विष्वक् नानारूपमनयोर्मध्ये वितिष्ठते । योग्यक्रियाध्याहारः । इति सायणः ॥

७. परस्पर समान, वियुक्त, दूरप्रांत [ आणि ] जागरूक द्यावापृथिवी अचलपदीं राहिल्या आणि नित्य तरुण बहिणी झाल्या. नंतर त्यांस लोक जुळ्या नांवांनीं हाक मारूं लागले.

८. ह्या द्यावापृथिवी सर्व भूतांला आपणांमध्यें धारण करितात. मोठ्या देवांलाहि धारण करीत असतां त्या थकत नाहींत. [ द्यु ] ह्या चलाचल सर्व विश्वाचा आणि चालणारीं आणि उडणारीं जीं निरनिराळीं भूतें त्यांचा प्रभु होय.

7. United together [and yet] separated the watchful [Heaven and Earth], of distant boundaries, stood in the eternal place and became ever youthful sisters. Thence forward they were called by twin names.

8. They contain even all beings. Though supporting the great gods they do not tire. [Father Dyaus] is the lord of all the universe, that which moves [and] that which is fixed,—all different creation, walking and flying.

---

७. 'जागरूक.' म्हणजे सतत् जागृत राहणाऱ्या, विश्रांति कधींहि न घेणाऱ्या. हें विशेषण वेदांत बहुतकरून देवांला लागलेलें असतें. कारण सूर्यादिक जे देव ते सतत् चालणारेच असतात, विश्रांति घेत नाहींत, हें उघडच आहे. आणि द्यावापृथिवी यांजवर येथें देवत्वाचा आरोप केला असल्यामुळें त्यांलाहि जागरूक हें विशेषण लागलें आहे.

'जुळ्या नांवानीं '=' मिथुनानि नाम' उदाहरणार्थ द्यावापृथिवी, रोदसी इत्यादि.

सना पुराणमध्येम्याराम्महः पितुर्जनितुर्जामि तन्नः ।
देवासो यत्र पनितार एवैरुरौ पथि व्युते तस्थुरन्तः ॥ ९ ॥

सना । पुराणम् । अधि । एमि । आरात् । महः । पितुः । जनितुः ।
जामि । तत् । नः ।
देवासः । यत्र । पनितारः । एवैः । उरौ । पथि । विऽउते । तस्थुः ।
अन्तरिति ॥ ९ ॥

इमं स्तोमं रोदसी प्र ब्रवीम्यृदूदराः शृणवन्नग्निजिह्वाः ।
मित्रः सम्राजो वरुणो युवान आदित्यासः कवयः पप्रथानाः ॥
॥ १० ॥ २५ ॥

इमम् । स्तोमम् । रोदसी इति । प्र । ब्रवीमि । ऋदूदराः । शृणवन् ।
अग्निऽजिह्वाः ।
मित्रः । सम्ऽराजः । वरुणः । युवानः । आदित्यासः । कवयः । पप्रथानाः ॥ १० ॥ २९ ॥

---

## भाषायाम्.

९. महः पितुर्जनितुर्नस्तत् ( =महतो जनयितुः पितुर्दिवः पितुस्तत् प्रसिद्धम् अस्मत्संबन्धि ) सना पुराणं जामि ( =सनातनं पूर्वक्रमागतं बन्धुत्वम् ) आरात् अधि एमि ( =अधुनापि स्मरामि ) । यत्र अन्तः ( =यस्य दिवः पितुर्मध्ये=दिवि वर्तमानेवकाशे ) देवासः पनितारः ( =तेजस्विनः स्तोतारो मनुष्याः=देवत्वं प्राप्ता मनुष्या ) उरौ व्युते पथि ( =महति वियुक्ते मार्गे अन्तरिक्षरूपे) एवैस्तस्थुः ( =गमनैस्तिष्ठन्ति पृथिव्याः सकाशाद्गत्वा तिष्ठन्ति ) ॥

१०. हे रोदसी ( =द्यावापृथिव्यौ ), इमं स्तोमं प्र ब्रवीमि ( =इदं स्तोत्रं प्रकर्षेण वदामि ) । [ तम् ] ऋदूदराः ( =मृद्वन्तःकरणा ) अग्निजिह्वाः ( =अग्निना हविर्भक्षयन्तः ) सम्राजः ( =सम्यग्भ्राजमाना ) युवानः ( =नित्यतरुणाः ) कवयः ( =मेधाविनः ) पप्रथानाः ( =स्वानि कर्माणि प्रथयन्तः=विख्याता ) मित्रो वरुणः [ इतरे च ] आदित्यासः ( =अदितेः पुत्राः ) शृणवन् ( =शृण्वन्तु ) ॥

९. महान् पिता [ आणि ] जनिता [ जो द्यू त्या]चें आमचें पुरातन आणि प्राचीन काळापासून चालत आलेलें नातें मला अजून स्मरतें. ज्या [ द्यूच्या]ठायीं तेजस्वी स्तोते जन जाऊन विस्तीर्ण आणि रुंद मार्गावर उभे राहतात.

१०. हे द्यावापृथिवी हो, हें स्तोत्र मी उच्चारीत आहें. तें कोमलान्त:करण, अग्निजिव्ह, नित्यतरुण, महाप्रज्ञ आणि अतिविख्यात महाराजे अदितीचे पुत्र जे मित्र वरुण [आणि दुसरे] ते ऐकोत.

9. I remember at [this distance] our ancient [and] ancestral brotherhood of the great father and progenitor. [Dyaus], in whom the resplendent praisers [after death] go and stand in the broad [and] open path.

10. I chant this praise, o Heaven and Earth! May the sons of Aditi,—Mitra Varuṇa [and others],—of tender heart, eating through Agni, ruling supreme, ever-young, wise [and] renowned, hear [it].

---

९. 'ज्या द्यूच्या ठायीं' इ०. म्हणजे पृथिवीवर सत्कर्में करून देवत्वाप्रत पावलेले मनुष्य वर जाऊन द्युलोकीं राहत असतात.

हिरण्यपाणिः सविता सुजिह्वस्त्रिरा दिवो विदथे पत्यमानः ।
देवेषु च सवितः श्लोकमश्रेरादस्मभ्यमा सुव सर्वतातिम् ॥११॥

हिरण्यऽपाणिः । सविता । सुऽजिह्वः । त्रिः । आ । दिवः । विदथे ।
पत्यमानः ।
देवेषु । च । सवितरिति । श्लोकम् । अश्रेः । आत् । अस्मभ्यम् ।
आ । सुव । सर्वऽतातिम् ॥ ११ ॥

सुकृत्सुपाणिः स्ववाँ ऋतावा देवस्त्वष्टावसे तानि नो धात् ।
पूषण्वन्त ऋभवो मादयध्वमूर्ध्वग्रावाणो अध्वरमतष्ट ॥ १२ ॥

सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा । अवसे ।
तानि । नः । धात् ।
पूषण्ऽवन्तः । ऋभवः । मादयध्वम् । ऊर्ध्वऽग्रावाणः । अध्वरम् ।
अतष्ट ॥ १२ ॥

---

## भाषायाम्.

११. सविता हिरण्यपाणिः ( =सुवर्णहस्तः ) सुजिह्वः ( =शोभनजिह्वः) आ दिवो विदथे त्रिः पत्यमानः ( =द्युलोकाशाद् यज्ञे त्रिषु कालेषु शीघ्रमागच्छन् ) [ भवति ] । —हे सवितः, देवेषु च श्लोकम् अश्रेः (=स्तोत्रं धारय प्राप्नुहि) । आत् (=अनन्तरम् ) अस्मभ्यं सर्वतातिम् आ सुव ( =उदित्य सुखमानय ) ॥

१२. सुकृत् ( =जगदादेः सुष्ठु कर्ता ) सुपाणिः ( =सुहस्तः ) स्ववान् ( =स्ववो- वान् शोभनरक्षणवान् ) ऋतावा ( =सत्यवान् ) देवस्त्वष्टा अवसे तानि नो धात् ( =दीप्यमानस्त्वष्टा नाम देवो रक्षणाय अस्मभ्यं तानि तानि सर्वाण्यपेक्षितानि द- दातु ) । हे ऋभवः, [ यूयं ] पूषण्वन्तो मादयध्वं ( =पूष्णा सहिताः सोमपानेन हृष्टा भवत ) । ऊर्ध्वग्रावाणः ( =? सोमाभिषवार्थम् उद्यतग्रावाणो यूयम् ) अध्वरम् अतष्ट ( =यज्ञं संपादयत ) ॥

११. हे सविता, सुवर्णहस्त, सुजिह्व आणि द्युलोकाहून यज्ञामध्यें तीन वेळ उडत येणारा असा तूं सविता देवांमध्येंहि स्तोत्राप्रत पाव आणि नंतर तूं आम्हांला सुख प्राप्त करून देत देत उगव.

१२. सुकर्मा, सुहस्त, सुरक्षण आणि सत्यवान् देव त्वष्टा आम्हांला रक्षणासाठीं सर्व कांहीं देओ. हे ऋभूंनो, तुम्ही पूषा देवासहित हर्षित व्हा. कृतसोमयज्ञ तुम्ही [ आमचा ] यज्ञ संपादा.

11. Savitâ, the golden-handed, the good-tongued that flies thrice to the sacrifice from heaven—Be praised, o Savitâ, among the gods, and give us happiness by thy rising.

12. May the god Tvashṭâ, skilful, handy, able to protect well [and] possessed of Truth, give us all for protection. With Pûshâ be you delighted o Ṛibhus! Set up the soma-pressing stones and perform [our] sacrifice.

---

१२. 'कृतसोमयज्ञ'='ऊर्ध्वग्रावाणः.' म्हणजे जे पूर्वी मनुष्य असतांना सोमरस काढून देवांप्रीत्यर्थ यज्ञ करित असत असे.

विद्युद्रथा मरुत ऋष्टिमन्तो दिवो मर्या ऋतजाता अयासः ।
सरस्वती शृणवन्यज्ञियासो धाता रयिं सहवीरं तुरासः ॥ १३

विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमन्तः । दिवः । मर्याः । ऋतऽजाताः
अयासः ।
सरस्वती । शृणवन् । यज्ञियासः । धात । रयिम् । सहऽवीरम् । तुरास
॥ १३

विष्णुं स्तोमासः पुरुदस्ममर्का भगस्येव कारिणो यामनि ग्मन् ।
उरुक्रमः ककुहो यस्य पूर्वीर्न मर्धन्ति युवतयो जनित्रीः ॥ १४

विष्णुम् । स्तोमासः । पुरुऽदस्मम् । अर्काः । भगस्यऽइव । कारिणः
यामनि । ग्मन् ।
उरुऽक्रमः । ककुहः । यस्य । पूर्वीः । न । मर्धन्ति । युवतयः । ज
नित्रीः ॥ १४ ॥

---

## भाषायाम्.

१३. विद्युद्रथाः (=विद्युतो रथे येषां ते) ऋष्टिमन्तः (=ऋष्टिनामायुधविशे वन्तः) ऋतजाताः (=सत्यजाता) अयासः (=सततगमनशीला) यज्ञिया (=यज्ञार्हा) दिवो मर्या मरुतः (=दिवः पुत्रभूता मरुतः) सरस्वती शृणवन् (=स स्वत्या सहिताः सन्तोस्मान् शृण्वन्तु) । हे तुरासः (=वेगवन्तो मरुतः), सहवं रयिं धात (=वीर्योपेतपुत्रसहितं धनम् अस्मभ्यं प्रयच्छत) ॥

१४. भगस्य कारिण इव (=सुभागस्य कर्तार इव वर्तमानाः) स्तोमासः (=स त्राणि) अर्काः (=शस्त्राणि) [च] यामनि (=यज्ञे) पुरुदस्मं (=बहुकर्माणं विष्णुं ग्मन् (=गच्छन्तु) । [स] उरुक्रमः (=दीर्घक्रमो) [भवति] । य [कर्म] पूर्वीः (=पूर्व्यो) युवतयो जनित्रीः ककुहः (=दिग्रूपा युवतयो मातरो) मर्धन्ति (=न हिंसन्ति) ॥

१३. विद्युद्रथ, भाले धारण करणारे, सत्यजात [ आणि ] वेगवंत असे जे द्यूचे पुत्र यज्ञार्ह मरुत्, ते [आणि] सरस्वती [आमचें स्तोत्र ] ऐकोत.—हे वेगवंत [ मरुतांनो ], तुम्ही आम्हांला शूर पुत्रांसहित संपत्ति द्या.

13. May the Maruts with lightning on their chariots, and armed with javelins, the Truth-born and impetuous sons of Heaven, [and] worthy of a sacrifice, hear [us] with Sarasvatî.—O swift [Maruts], bestow [on us] wealth accompanied by brave sons.

१४. [या] यज्ञांत भाग्याचीं जणुं उत्पादकें अशीं जीं स्तोत्रें [ आणि ] गायनें तीं महापराक्रम विष्णूप्रत पोंहचोत. ज्या विस्तीर्णक्रम विष्णूच्या [ क्रमाला ] अनेक युवति माता ज्या दिशा, त्या प्रतिबंध करीत नाहींत.

14. May the praises [and] the songs [which are], as it were, the makers of good fortune, go in [this] sacrifice to Vishṇu the performer of exploits.—Vishṇu [is] of wide strides, whose [strides] the many quarters of the globe, [like] ever-young mothers, do not obstruct.

---

१३. 'भाले धारण करणारे'='ऋष्टिमन्तः.' सू. ३७ मं. २ पहा. 'सत्यजात' म्हणजे सत्यरूप जो [illegible] त्यांत प्रादुर्भूत होणारे.

'सरस्वती.' सू. ३ मं. १० पहा.

१४. 'विस्तीर्णक्रम'='उरुक्रमः.' विष्णु हा देव सूर्यरूप आहे ह्या गोष्टीला अनुलक्षून हें विशेषण त्याला लाविलें आहे. लांब पावलें टाकणारा असा या विशेषणाचा अर्थ आहे आणि तो आकाशांतून सर्व पृथिवीला दिवसा एकदा प्रदक्षिणा करणाऱ्या सूर्याला योग्य रीतीनें लागतो हें उघड आहे. सू. २२ मं. १६–२२ पहा.

**इन्द्रो विश्वैर्वीर्यैः पत्यमान उभे आ पप्रौ रोदसी महित्वा ।**
**पुरंदरो वृत्रहा धृष्णुषेणः संगृभ्या न आ भरा भूरि पश्वः ॥**
॥ १५ ॥ २६ ॥

इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ।
पुरम्ऽदरः । वृत्रऽहा । धृष्णुऽसेनः । सम्ऽगृभ्य । नः । आ । भर । भूरि । पश्वः ॥ १५ ॥ २६ ॥

**नासत्या मे पितरा बन्धुपृच्छा सजात्यमश्विनोश्चारु नाम ।**
**युवं हि स्थो रयिदौ नो रयीणां दात्रं रक्षेथे अकवैरदब्धा ॥१६॥**

नासत्या । मे । पितरा । बन्धुऽपृच्छा । सऽजात्यम् । अश्विनोः । चारु । नाम ।
युवम् । हि । स्थः । रयिऽदौ । नः । रयीणाम् । दात्रम् । रक्षेथे इति । अकवैः । अदब्धा ॥ १६ ॥

---

**भाषायाम्.**

१५. विश्वैर्वीर्यैः पत्यमानः (=? सर्वैर्वीरकर्मभिः संगम्यमान) इन्द्रो महित्वा (=महत्त्वेन) उभे रोदसी (=द्यावापृथिव्यौ) आ पप्रौ (=पूरयामास)। [हे इन्द्र], पुरंदरः (=शत्रुपुराणां विदारयिता) वृत्रहा (=वृत्रस्य हन्ता) धृष्णुसेनः (=शत्रुजयशीलसेनायुक्तस्) [त्वं] पश्वो भूरि [धनं] (=पशोः पशुरूपं प्रभूतं धनं) संगृभ्य न आ भर (=संगृह्यास्मदर्थमानय)॥

१६. हे नासत्या (=नासत्यौ), [युवां] बन्धुपृच्छा मे पितरा (=बन्धूनामस्माकं संबन्धिनीं पृच्छां कुर्वन्तौ=अस्मत्पालनकर्तारौ पितरौ) [भवथः]। [युवयोर्] अश्विनोः सजात्यं नाम चारु (=बन्धुत्वं तथैव कर्म वीरकर्म पराक्रमरूपं कमनीयं) [भवति]। युवं (=युवां) हि नः (=अस्मभ्यं) रयीणां रयिदौ (=धनानां दातारौ) स्थः। अदब्धा (=अदब्धौ=अविनाशिनौ) [युवां] दात्रं (=हविषां दातारं यजमानम्) अकवैः (=अकुत्सितै रक्षणै) रक्षेथे (=रक्षथः)॥

१५. सकल सामर्थ्यांनीं युक्त इंद्र आपल्या मोठेपणानें उभय द्यावापृथिवींस भरून टाकिता झाला.— हे इंद्रा, पुरभेत्ता, वृत्रहन्ता, विजयसेन असा तूं आम्हांप्रत पशुरूप पुष्कळ [धन] जमवून घेऊन ये.

15. Indra in whom all powers take shelter filled the two worlds with his greatness.—Breaker of the [enemies] fastnesses, killer of Vṛitra, leader of victorious armies, do thou, [o Indra], collect and bring unto us plenty of cattle wealth.

१६. हे नासत्य हो, तुम्ही भ्रात्यांची काळजी करणारे माझे आईबाप आहां. तुम्हां अश्वींचें बंधुत्व [आणि] पराक्रम सुंदर होत. कारण कीं, तुम्ही आम्हांला धनाचे धनदाते आहां. अविनाशी असे जे तुम्ही ते [हवि]र्दात्याला उत्कृष्ट [रक्षणां]नीं रक्षितां.

16. O Nâsatyas, you [are] my parents that enquire after your brother, beautiful is your relationship [and your] achievement. For you are to us the givers of wealth. You preserve the giver [of oblation] with uncontemptible helps.

**महत्तद्वः कवयश्चारु नाम यद्ध देवा भवथ विश्व इन्द्रे ।**
**सख ऋभुभिः पुरुहूत प्रियेभिरिमां धियं सातये तक्षता नः ॥१७॥**

महत् । तत् । वः । कवयः । चारु । नाम । यत् । ह । देवाः । भवथ । विश्वे । इन्द्रे ।
सखा । ऋभुऽभिः । पुरुऽहूत । प्रियेभिः । इमाम् । धियम् । सातये । तक्षत । नः ॥ १७ ॥

**अर्यमा णो अदितिर्यज्ञियासोऽदब्धानि वरुणस्य व्रतानि ।**
**युयोत नो अनपत्यानि गन्तोः प्रजावान्नः पशुमाँ अस्तु गातुः॥१८॥**

अर्यमा । नः । अदितिः । यज्ञियासः । अदब्धानि । वरुणस्य । व्रतानि । युयोत । नः । अनपत्यानि । गन्तोः । प्रजाऽवान् । नः । पशुऽमान् । अस्तु । गातुः ॥ १८ ॥

---

## भाषायाम्.

१७. हे कवयः ( =मेधाविनो ) देवाः, तद् वो महत् चारु नाम ( =तद्गुणमाकं महत्कमनीयं वीरकर्म भवति ) यत् ह विश्वे ( =सर्वेऽपि यूयम् ) इन्द्रे भवथ (=इन्द्र-समीपे स्थ=देवत्वं प्राप्य इन्द्रसमीपे तिष्ठथ ) । हे पुरुहूत ( =बहुभिराहूत ), सखा [ त्वं ] प्रियेभिर्ऋभुभिः ( =प्रियैर्ऋभुभिः ) [ सह ] इमां नो धियम् ( =इदमस्माकं स्तोत्रं ) सातये तक्षत ( =संपत्प्राप्तये कुरुत=धनोत्पादयित्रीं कुरुत ) ॥

१८. अर्यमा अदितिः [ यस्य ] वरुणस्य व्रतानि अदब्धानि, ( =कर्माण्यहिंसितानि भवन्ति ) [ स वरुणश्चेति ] यज्ञियासः ( =यज्ञार्हा ) [ यूयं देवा ] नो गन्तोः ( =अस्माकं मार्गात्प्रपश्चाद् ) अनपत्यानि ( =अनपत्यत्वानि ) युयोत (=पृथक्कुरुत ) । नो गातुः ( =अस्माकं लोकयात्रारूपो मार्गः ) प्रजावान् पशुमान् अस्तु ( =संतानयुक्तः पशुयुक्तश्च भवतु ) ॥

१७. हे मेधावी देव हो, हा तुमचा पराक्रम मोठा होय, कीं तुम्ही सर्वजण इंद्राच्या ठायीं आहां.—हे पुरुहूता [ इन्द्रा ], [आमचा ] सखा [ असा जो तूं तो ] प्रिय ऋभूंसहित [येऊन] हें आमचें स्तोत्र धन मिळवून देई असें कर.

१८. अर्यमा, अदिति, [आणि ] [ ज्या ] वरुणाचे नियम अविनाशी [ होत ] [तो वरुण ], असे यज्ञार्ह [ देव तुम्ही ] आमचा संसार अपत्यहीनतेपासून मुक्त करा. आमची लोकयात्रा प्रजेनें [ आणि ] पशूंनीं भरलेली असो.

17. Great is that your achievement, o wise gods, that you [are] all in the presence of Indra.—Do thou, o friend, with the dear Ribhus, make this our hymn productive of wealth.

18. And do you Aryamâ, Aditi, [and] Varuṇa whose laws are imperishable, you all worthy of a sacrifice, remove all want of progeny from our life. May our path be full of children, full of cattle.

१७. 'इंद्राच्या ठायीं आहां'=' इन्द्रे भवथ.' म्हणजे देवत्वाप्रत पावून इंद्राच्या सन्निध राहतां.

ऋभु यांविषयीं सू. २० मं. १ पहा.

देवानां दूतः पुरुध प्रसूतोऽनागान्नो वोचतु सर्वताता ।
शृणोतु नः पृथिवी द्यौरुतापः सूर्यो नक्षत्रैरुर्वन्तरिक्षम् ॥ १९ ॥
देवानाम् । दूतः । पुरुध । प्रऽसूतः । अनागान् । नः । वोचतु । सर्वऽताता ।
शृणोतु । नः । पृथिवी । द्यौः । उत । आपः । सूर्यः । नक्षत्रैः । उरु । अन्तरिक्षम् ॥ १९ ॥
शृण्वन्तु नो वृषणः पर्वतासो ध्रुवक्षेमास इळया मदन्तः ।
आदित्यैर्नो अदितिः शृणोतु यच्छन्तु नो मरुतः शर्म भद्रम् ॥ ॥ २० ॥
शृण्वन्तु । नः । वृषणः । पर्वतासः । ध्रुवऽक्षेमासः । इळया । मदन्तः । आदित्यैः । नः । अदितिः । शृणोतु । यच्छन्तु । नः । मरुतः । शर्म । भद्रम् ॥ २० ॥

---

## भाषायाम्.

१९. पुरुध प्रसूतः ( =हविर्ग्रहणाय बहुषु देशेषु प्रेरितो ) देवानां दूतः ( =अग्निर् ) नः सर्वताता अनागान् वोचतु ( =सर्वत्र पापरहितान् वदतु वयं तस्योपासकाः पापरहिताः स्म इति वदतु ) । पृथिवी द्यौरुत आपः ( =द्यावापृथिव्यावापश्च ) सूर्यो नक्षत्रैरुरु (=नक्षत्रैः पृथु ) अन्तरिक्षं [ च ] नः शृणोतु (=स्तोत्रवक्तृनस्मान् शृणोतु ) ॥

२०. वृषणः ( =वीर्यवन्तो ) ध्रुवक्षेमासः ( =निश्चलस्थाना ) इळा मदन्तः ( =हविरन्नेन हृष्यन्तः ) पर्वता नः शृण्वन्तु । आदित्यैः [ सहिता ] अदितिर्नः शृणोतु । मरुतो भद्रं शर्म (=कल्याणकरं सुखं ) नो यच्छन्तु (=अस्मभ्यं प्रयच्छन्तु ) ॥

१९. अनेक ठिकाणीं पाठविला [ जातो असा जो ] देवांचा दूत [ अग्नि, तो ] आम्ही सर्वत्र निष्पाप आहों असें म्हणो. पृथिवी, द्यू, आणि उदकें, सूर्य [ आणि] नक्षत्रांसहित विस्तीर्ण अंतरिक्ष [ हीं ] आमचें ऐकोत.

२०. वीर्यसंपन्न [ आणि ] अचलस्थान पर्वत, हवीनें हर्ष पावून आमचें ऐकोत. आदित्यांसहित अदिति आमचें ऐको. मरुत् आम्हांला कल्याणकारक सुख देओत.

19. May the messenger of the gods, sent to various places, commend us as being sinless everywhere. May Earth, Heaven and the Waters, the sun and the firmament wide with the stars, hear us.

20. May the mighty mountains with eternal seats and delighted with the offering, hear us. May Aditi with the Âdityas hear us. May the Maruts bestow on us propitious happiness.

सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः सं पिपृक्त ।
भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥२१॥

सदा । सुऽगः । पितुऽमान् । अस्तु । पन्थाः । मध्वा । देवाः । ओषधीः । सम् । पिपृक्त ।
भगः । मे । अग्ने । सख्ये । न । मृध्याः । उत् । रायः । अश्याम् । सदनम् । पुरुऽक्षोः ॥ २१ ॥

स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक्सं मिमीहि श्रवांसि ।
विश्वाँ अग्ने पृत्सु ताञ्जेषि शत्रूनहा विश्वा सुमना दीदिही नः ॥
॥ २२ ॥ ॥ २७ ॥

स्वदस्व । हव्या । सम् । इषः । दिदीहि । अस्मद्र्यक् । सम् । मिमीहि । श्रवांसि ।
विश्वान् । अग्ने । पृत्ऽसु । तान् । जेषि । शत्रून् । अहा । विश्वा । सुऽमनाः । दीदिहि । नः ॥ २२ ॥ २७ ॥

---

## भाषायाम्.

२१. [नः] पन्थाः सदा सुगः (=सुगम्यः) पितुमान् (=अन्नवांश्च) अस्तु । हे देवाः, ओषधीर्मध्वा (=माधुर्येण) सं पिपृक्त (=संपर्चयत)। हे अग्ने, भगः (=धनदाता त्वं) मे सख्ये (=अस्माकं मित्रत्वे वर्तमानः सन्) न मृध्याः (=मा मृध्याः=अस्मान् मा हिंसीः)। पुरुक्षो रायः (=बह्वन्नस्य धनस्य) सदनं (=स्थानम्) उद् अश्यां (=प्राप्नुयाम्) ॥

२२. [हे अग्ने], हव्या स्वदस्व (=हव्यानि हवींषि स्वादय भक्षय)। इषः सं दिदीहि (=अन्नानि सम्यक्प्रकाशस्व=वयमन्नानि यथा लभेमहि तथा संप्रकाशस्व)। श्रवांसि अस्मद्र्यक् सं मिमीहि (=अन्नानि यथास्मदभिमुखानि भवन्ति तथा कुरु)। हे अग्ने, तान् विश्वान् शत्रून् (=यान् कान् सर्वान् शत्रून्) पृत्सु जेषि (=संग्रामेषु जय)। विश्वा अहा (=सर्वाणि दिनानि=नित्यं) नः सुमना दीदिहि (=अस्मदर्थं शोभनमनस्कः प्रकाशस्व) ॥

२१. सदैव [आमचा] मार्ग सुगम [आणि] अन्नसंपन्न असो.— हे देव हो, तुम्ही वनस्पतींला माधुर्यानें भरून टाका. हे अग्नी, धनदायक [असा जो तूं तो माझ्या] मैत्रींत [ राहून माझें ] वाईट करूं नको. मी पुष्कळ अन्नानें भरलेल्या संपत्तीच्या स्थानाप्रत पावेन असें तूं कर.

२२. [ हे अग्नी ], तूं हविर्न्नें भक्षण कर. तूं प्रकाशून आम्हांला अन्नें दे. अन्नें आम्हांकडे येतील असें कर. हे अग्नी, [ जे जे म्हणून ] शत्रु त्या सर्वांस तूं संग्रामांत जिंक. तूं नित्य प्रसन्न मनानें आम्हांकरितां प्रकाशत जा.

21. May our path be ever easy and abounding in food. Sweeten, o gods, the plants with honey. Injure me not, o Agni, [ being ] in my friendship, thou the bounteous one. May I attain the seat of wealth abounding in food.

22. Eat the offerings. Shine wealth [upon us]. Render all food subservient to us. Conquer all those enemies in battles, o Agni! Shine all days for us, pleased in thy heart.

## सूक्तम् ५५–२८९.

प्रजापतिर्ऋषिः। स च विश्वामित्रपुत्रो वाक्पुत्रो वा। विश्वे देवा देवता।
तत्राद्योषस्या। ततः परं नवर्चोऽग्न्यादिदेवताकास्ततः पराह्नोरात्रदेव-
ताका। ततश्चतस्रो रोदस्योः। पञ्चदशी धुनिशोर्वा। षोडशी
दिग्देवताका। ततः षडृचो वर्षेत इन्द्रस्य। केचिदग्ने-
स्त्वष्टुश्चेति मन्यन्ते। त्रिष्टुप् छन्दः॥

**उषसः पूर्वा अध यद्व्यूषुर्महद्वि जज्ञे अक्षरं पदे गोः।**
**व्रता देवानामुप नु प्रभूषन्महद्देवानामसुरत्वमेकम्॥ १॥**

उषसः। पूर्वाः। अध। यत्। विऽऊषुः। महत्। वि। जज्ञे। अक्षरम्। पदे। गोः।
व्रता। देवानाम्। उप। नु। प्रऽभूषन्। महत्। देवानाम्। असुरऽत्वम्। एकम्॥ १॥

**मो षू णो अत्र जुहुरन्त देवा मा पूर्वे अग्ने पितरः पदज्ञाः।**
**पुराण्योः सद्मनोः केतुरन्तर्महद्देवानामसुरत्वमेकम्॥ २॥**

मो इति। सु। नः। अत्र। जुहुरन्त। देवाः। मा। पूर्वे। अग्ने। पितरः। पदऽज्ञाः।
पुराण्योः। सद्मनोः। केतुः। अन्तः। महत्। देवानाम्। असुरऽत्वम्। एकम्॥ २॥

---

### भाषायाम्.

१. अध यद् (=यदा खलु) पूर्वा उषसः (=सूर्योदयात्पूर्वंभूता उषसो) वि ऊषुः (=व्युच्छन्ति=उदित्य गच्छन्ति तदा) गोः पदे (=? " उदकस्य पदे स्थाने नभसि ") महत् अक्षरं (=महत् अविनाशि वस्तु सूर्यरूपं) वि जज्ञे (=उत्पद्यते)। व्रता देवानाम् उप नु प्रभूषन् (=देवानां वरुणादीनां कर्माणि अनुसरन्= अनुसरति च)। [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति]॥

२. केतुः (=सूर्यो) [यदा] पुराण्योः सद्मनोरन्तः (=पुराणयोः सदनयोर्द्यावापृथिव्योरन्तः) [प्रादुर्भवति] अत्र (=तदा) देवा मो षु नो जुहुरन्त (=अ-

## सूक्त ५५–२८९.

ऋषि–विश्वामित्राचा पुत्र प्रजापति किंवा वाक् याचा पुत्र प्रजापति. देवता–विश्वे देव; १ उषा, २-१० अग्नि, ११ अहोरात्र (दिवस आणि रात्र), १२-१५ रोदस्यौ (द्यू आणि पृथिवी); १५ रोदस्यौ किंवा द्युनिशौ (द्यावापृथिवी किंवा दिवस आणि रात्र), १६ दिशा, १७-२२ इंद्र पर्जन्यात्मा किंवा अग्नि आणि त्वष्टा. वृत्त–त्रिष्टुप्.

१. पूर्वी उषा प्रकाशून गेल्यानंतर अविनाशी [ सूर्य ] गाईच्या स्थानीं उत्पन्न होतो, आणि देवांचे जे नियम ते साधितो. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

२. जेव्हां पुरातन द्यावापृथिवीच्या पोटीं तेजःपुंज [ सूर्य ] उगवत आहे ], तेव्हां देव आम्हांस वाईट न करोत; हे अग्नी, पद जाणणारे जे पुरातन पितर ते वाईट न करोत. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

## Hymn 55-289.

To *Vis've Devas*: 1 *Ushas;* 2-10 *Agni;* 11 *Ahorâtrau* (*Day* and *Night*); 12-15 *Rodasyau*(*Heaven* and *Earth*); 15 *Rodasyau* or *Dyunis'au* (*Heaven* and *Earth* or *Day* and *Night*); 16 *Dis'as* (*quarters of the globe*); 17-22 *Indra Parjanyâtmâ* or *Agni* and *Tvashtâ*. By *Prajâpati*, son of *Vis'vâmitra* or *Prajâpati* son of *Vâk*. Metre—*Trishtubh*.

1. When the Ushases have risen and shone before, the great imperishable one is born in the seat of the cow, fulfilling the laws of the gods. That is one great act of the mighty gods.

2. May the gods never hurt us, may the ancient fathers that knew the footsteps, o Agni, never hurt us, when the light [comes] into the two ancient worlds. That is one great act of the mighty gods.

---

१. 'गाईच्या स्थानीं'='गोः पदे' म्हणजे अंतरिक्षांत. 'देवांचे नियम साधितो' म्हणजे सूर्यानें प्रतिदिनीं अमुक वेळीं अमुक दिशेला उगवावें आणि अमुक

वि मे पुरुत्रा पतयन्ति कामाः शम्यच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नावृतमिद्वदेम महद्देवानामसुरत्वमेकम् ॥ ३ ॥

वि । मे । पुरुऽत्रा । पतयन्ति । कामाः । शमि । अच्छ । दीद्ये । पूर्व्याणि ।
सम्ऽइद्धे । अग्नौ । ऋतम् । इत् । वदेम । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ३ ॥

समानो राजा विभृतः पुरुत्रा शये शयासु प्रयुतो वनानु ।
अन्या वत्सं भरति क्षेति माता महद्देवानामसुरत्वमेकम् ॥ ४ ॥

समानः । राजा । विऽभृतः । पुरुऽत्रा । शये । शयासु । प्रऽयुतः वना । अनु ।
अन्या । वत्सम् । भरति । क्षेति । माता । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ४ ॥

---

स्मान् मा हिंसिषुः ) । हे अग्ने, पदज्ञाः ( =पणिभिरपहृतानां गवां पदानि ज्ञातवन्तः ) पूर्वे पितरः ( =अङ्गिरसो ) मा [ जुहुरन्त ] । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

---

## भाषायाम्.

३. मे कामाः ( =मम मनोरथाः ) पुरुत्रा ( =बहुषु प्रदेशेषु ) वि पतयन्ति ( =विविधं गच्छन्ति ) । शमि अच्छ पूर्व्याणि दीद्ये ( =अस्माकं कर्मानुलक्ष्य पुरातनानि स्तोत्राणि प्रकाशयामि ) । समिद्धे अग्नौ ( =अग्नौ सम्यग्दीपिते सति ) ऋतमित् वदेम ( =सत्यमेव वदेम ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

४. समानः ( =सर्वेषां साधारणो ) राजा [ अग्निः ] पुरुत्रा विभृतः ( =बहुषु स्थलेषु अग्निहोत्रार्थे विहृतो भवति ) । प्रयुतः ( =प्रकर्षेण पृथक्कृतो विभक्तः स ) शयासु (=शय्यासु वेदिरूपासु) वना अनु शये (=समिधोनुलक्ष्य शेते=समित्सु शेते ) । अन्या [ माता ] वत्सं भरति अपरा माता [ तं ] क्षेति (=द्वयोर्मात्रोर्मध्ये एका तमग्निरूपं वत्सं पोषयति अपरा तं शय्यायां शाययति ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

३. माझे मनोरथ पुष्कळ ठिकाणीं धांवत आहेत. मी या कर्मांत पुरातन [ स्तोत्रें ] प्रकाशवीत आहें. चांगला पेटविलेला जो अग्नि त्यासमक्ष आपण खरेंच बोलूं. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

3. My desires fly in various directions. I have exhibited the ancient [hymns] for the purpose of [this] rite. Let us speak nothing but the truth in the presence of well-kindled Agni. That is one great act of the mighty gods.

४. सर्वसाधारण राजा [अग्नि ] बहुत ठिकाणीं नेला जातो. तो शेजांवरील काष्ठांवर निर्वेध निजतो. एक वत्साला पाजिते [ आणि ] [ दुसरी ] माता निजविते. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

4. The common king is distributed among many places. Divided he sleeps in the beds along the sticks. One [parent] feeds the calf, the [other] mother gives the place where to rest. That is one great act of the mighty gods.

---

शेकडे जावें इत्यादि विषयीं जे देवांनीं बांधून दिलेले नियम ते अमलांत आणितो.

'ऐश्वर्य होय'=' असुरत्वम्.' म्हणजे हें जें सर्व होतें तें देव या सर्व जगाचे नियामक आहेत म्हणून होत असतें. या प्रमाणेंच पुढील सर्व ऋचांचा अर्थ समजावा.

२. 'पदज्ञ पुरातन पितर'=' पूर्वे पितरः पदज्ञाः.' म्हणजे पणींनीं चोरून नेलेल्या गाईचा पत्ता लावणारे जे पूर्वऋषि अंगिरस ते. सू. ६२ मं. २ पहा.

४. 'शेजांवरील काष्ठांवर'=' शयु वना अनु.' म्हणजे ज्या ठिकाणीं अग्नीला पेटवितात त्या ठिकाणीं आंथरलेल्या समिधांवर.

'एक पाजिते.' म्हणजे ज्या वेदीवर अग्नीला आहुति देतात ती वेदि.

'दुसरी माता निजविते.' म्हणजे ज्या वेदीवर गार्हपत्य अग्नि रात्रंदिवस पडून राहिलेला असतो ती.

आक्षित्पूर्वास्वपरा अनूरुत्सद्यो जातासु तरुणीष्वन्तः ।
अन्तर्वतीः सुवते अप्रवीता महद्देवानामसुरत्वमेकम् ॥५॥२८॥

आऽक्षित् । पूर्वासु । अपराः । अनूरुत् । सद्यः । जातासु । तरुणीषु । अन्तरिति ।
अन्तःऽवतीः । सुवते । अप्रऽवीताः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ५ ॥ २८ ॥

शयुः परस्तादध नु द्विमाताबन्धनश्चरति वत्स एकः ।
मित्रस्य ता वरुणस्य व्रतानि महद्देवानामसुरत्वमेकम् ॥ ६ ॥

शयुः । परस्तात् । अध । नु । द्विऽमाता । अबन्धनः । चरति । वत्सः । एकः ।
मित्रस्य । ता । वरुणस्य । व्रतानि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ६ ॥

---

शेरते हविरादयः पदार्था अत्रेति शया वेद्यः । तासु शये । शेते । निवसति वनानु अनुवनं वनेष्वरणिरूपेषु काष्ठेषु प्रयुतो विभक्तोऽग्निर्वर्तते ।......तस्य द्वे मातरौ द्यावापृथिव्यौ । तयोरन्या द्यौरस्या भूमेर्जायमानतया वत्सभूतमग्निं ...... भरति । माता वसुधा क्षेति । केवलं निवासयति । इति सायणः ॥

---

## भाषार्थम्.

५. पूर्वासु (=जीर्णास्वोषधीषु) आक्षित् (=वर्तमानो) [भवति] । अपरा अनूरुत् (=नव्या ओषधीरनुरुन्धन् तासामनुरोधेन वर्तमानो) [भवति] । सद्यो जातासु (=जातमात्रासु) तरुणीषु अन्तः (=युवतिष्वोषधीष्वपि) [वर्तते] । अप्रवीताः (=केनापि पुरुषेणानिषिक्तरेतस्कास्ता) अन्तर्वतीः (=अन्तर्वत्न्यो गर्भवत्यो) [भूत्वा] सुवते (=तमुत्पादयन्ति) । [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

६. द्विमाता (=द्वयोर्मात्रोर्) एको वत्सः परस्तात् शयुः (=पश्चिमदिशि शयानः अस्तवेलायामव्याप्रियमाणो भवन्) अध नु (=पुनरपि प्रातःकाले) अबन्धनश्चरति (=बन्धनरहितः सन् नभसि संचरति) । ता मित्रस्य वरुणस्य व्रतानि (=तानि मित्रावरुणयोः कर्माणि=तत्सर्वं तयोः सामर्थ्याद्भवति) । [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

५. तो जीर्ण ओषधींत वास करणारा असून नव्यांच्या अनुरोधानें वागतो. नुकत्याच उपजलेल्या तरुणींमध्यें [हि तो वास करितो]. कुमारिका गरोदर होऊन त्याला जन्म देतात. हें एक मोठें देवांचें ऐश्वर्य [होय].

६. पश्चिमेकडे निजणारा दोन मातांचा वत्स बंधनाशिवाय पुनः संचार करितो. हे पराक्रम मित्राचे [आणि] वरुणाचे [होत]. हें एक मोठें देवांचें ऐश्वर्य [होय].

5. He lives with the old females and attends on those that are young. He is in the young females that are just born. The maidens become pregnant and give him birth. That is one great act of the mighty gods.

6. The calf of two mothers that sleeps in the west soon walks alone without a tie. Those are the laws of Mitra [and] of Varuna. That is one great act of the mighty gods.

५. 'नव्या' म्हणजे नव्या समिधा. कुमारिका म्हणजे ज्यांला फुलें फळें आलीं नाहींत अशा समिधा.

६. 'पश्चिमेकडे निजणारा' म्हणजे सूर्यरूपानें पश्चिमेकडे मावळणारा जो अग्नि तो पुनः दुसऱ्या दिवशीं आकाशांत फिरूं लागतो.

द्विमाता होता विदथेषु सम्राळन्वग्रं चरति क्षेति बुध्नः ।
प्र रण्यानि रण्यवाचो भरन्ते महद्देवानामसुरत्वमेकम् ॥ ७ ॥
द्विऽमाता । होता । विदथेषु । सम्ऽराट् । अनु । अग्रम् । चरति । क्षेति । बुध्नः ।
प्र । रण्यानि । रण्यऽवाचः । भरन्ते । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ७ ॥
शूरस्येव युध्यतो अन्तमस्य प्रतीचीनं ददृशे विश्वमायत् ।
अन्तर्मतिश्चरति निष्षिधं गोर्महद्देवानामसुरत्वमेकम् ॥ ८ ॥
शूरस्यऽइव । युध्यतः । अन्तमस्य । प्रतीचीनम् । ददृशे । विश्वम् । आऽयत् ।
अन्तः । मतिः । चरति । निःऽसिधम् । गोः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ८ ॥

---

## भाषायाम्.

७. [ स ] द्विमाता ( =द्वयोर्मात्रोर्द्यावापृथिव्योः पुत्रो ) विदथेषु सम्राट् ( =यज्ञेषु सम्यग्दीप्यमानो ) होता [ भवति ] । [ सः ] अनु अग्रं चरति ( =" अग्रे दिवि सूर्यभूतस्तत्र वर्तते ") । बुध्नः क्षेति ( =मूलभूतः सन् शेते " भूमौ वसति ") । रण्यवाचः ( =रमणीयवाचः स्तोतारो ) रण्यानि ( =रमणीयानि स्तोत्राणि ) प्र भरन्ते ( =प्रार्पयन्ति ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

८. युध्यतः शूरस्येव ( =युद्धं कुर्वतो वीरस्य ) आयत् ( =अभिमुखमागच्छत् यथा तथा ) अन्तमस्य ( =दावाग्निरूपेण समीपतमभूतस्याग्नेर् ) विश्वं प्रतीचीनं ददृशे पराङ्मुखं दृश्यते=पराङ्मुखं भवद्दृश्यते ) । मतिः ( =देवस्तोत्रकर्ताग्निर् ) गोर्निःषिधम् अन्तश्चरति ( =गोः शत्रुं संचरति=गोः शत्रौ संचरति ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

७. दोन माता असलेला [आणि] ांत चांगला प्रकाशणारा [जो] ता [अग्नि, तो] शिखरापर्यंत संर करितो [आणि नंतर] तवर राहून विश्रांति घेतो. आकारक स्तोत्रें म्हणणारे [स्तोत्याला] आह्लादकारक [स्तोअर्पण करितात. हें एक मोठें ं ऐश्वर्य [होय].

८. युद्ध करणाऱ्या शूराप्रमाणें अग्नि] समीप आला म्हणजे ाच्या संमुख येणारें विश्व परामुख झालेलें दृष्टीस पडतें. तो वि [अग्नि] गाईच्या शत्रूच्या ांगीं संचार करितो. हें एक मोठें ांचें ऐश्वर्य [होय].

7. The invoker born of two mothers, that shines resplendently in sacrifices, wanders on to the top. He rests, lying on the bottom. The worshippers that sing delightful hymns offer him delightful hymns That is one great act of the mighty gods.

8. Before him when close at hand, as before a fighting warrior, all creation that approaches is seen to turn back. He the poet enters into the enemy of the cow. That is one great act of the mighty gods.

---

७. 'शिखरापर्यंत संचार करितो' इ०. जे सूर्यरूपानें आकाशांत अत्युच्च ीं चढतो. आणि नंतर पश्चिमेला उन विश्रांति घेतो.

८अग्नि वणव्याच्या रूपानें चालूं म्हणजे सर्व जग त्या जवळून पळून जातें.

'गाईच्या शत्रूच्या आंगीं'=' गोर्निःषिधम् अन्तः.' म्हणजे विद्युद्रूपानें मेघमंडळांत संचार करितो असा भावार्थ दिसतो.

नि वेवेति पलितो दूत आस्वन्तर्महांश्चरति रोचनेन ।
वपूंषि बिभ्रदभि नो वि चष्टे महद्देवानामसुरत्वमेकम् ॥ ९ ॥

नि । वेवेति । पलितः । दूतः । आसु । अन्तः । महान् । चरति । रोचनेन ।
वपूंषि । बिभ्रत् । अभि । नः । वि । चष्टे । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ९ ॥

विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः ।
अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकम् ॥ १० ॥
॥ २९ ॥

विष्णुः । गोपाः । परमम् । पाति । पाथः । प्रिया । धामानि । अमृता । दधानः ।
अग्निः । ता । विश्वा । भुवनानि । वेद । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १० ॥ २९ ॥

---

## भाषायाम्.

९. पलितः (=वृद्धत्वाच्छुभ्रकेशो) [देवानां] दूतः [अग्निः] आसु [ओषधीषु] अन्तः नि वेवेति (=नितरां व्याप्य वर्तते)। महान् [स] रोचनेन (=प्रभया सह) चरति (=संचरति)। वपूंषि (=नानाविधानि रूपाणि) बिभ्रत् (=धारयन्) नः अभि वि चष्टे (=अस्मान् विशेषेण अनुग्रहदृष्ट्या पश्यति)। [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

१०. गोपाः (=पालको) विष्णुः परमं पाथः पाति (=उच्चैस्तमं स्थानम्=? अन्तरिक्षं रक्षति)। प्रिया अमृता धामानि दधानः (=प्रियाणि मरणरहितानि स्थानानि द्युलोकसंबन्धीनि धारयति च)। ता विश्वा भुवनानि अग्निर्वेद (=अग्निस्तानि सर्वाणि भूतजातानि जानाति)। [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

९. वृद्ध दूत [अग्नि] या ओषधीं]त वेगानें संचार करितो. तेजानें आंत संचार करितो. अनेक रूपें धारण करून आ- ांस पाहतो. हें एक मोठें देवांचें [होय].

9. The great gray messenger travels with light through the plants. Assuming many bodies he observes us. That [is] one great act of the mighty gods.

१०. पालक विष्णु अत्यंत स्थान रक्षितो, आणि प्रिय णरहित पदांचें पालन करितो. अग्नि ह्या सकळ विश्वाला जाणतो. हें एक मोठें देवांचें ऐश्वर्य [होय].

10. Vishṇu, the protector, preserves the highest world, sustaining the dear immortal seats. Agni knows the whole universe. That [is] one great act of the mighty gods.

---

१०. 'प्रिय मरणरहित पदें '=' प्रि- या धामानि अमृता.' म्हणजे जेथें मरण नाहीं तीं स्वर्गीचीं स्थानें, असा भावार्थ दिसतो.

नाना॑ चक्राते य॒म्या॒३ वपूं॑षि॒ तयो॑र॒न्यद्रोच॑ते कृ॒ष्णम॒न्यत् ।
श्यावी॑ च॒ यदरु॑षी च॒ स्वसा॑रौ म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ ११ ॥
नाना॑ । च॒क्रा॒ते॒ इति॑ । य॒म्या॑ । वपूं॑षि । तयोः॑ । अ॒न्यत् । रोच॑ते ।
कृ॒ष्णम् । अ॒न्यत् ।
श्यावी॑ । च॒ । यत् । अरु॑षी । च॒ । स्वसा॑रौ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ११ ॥

मा॒ता च॒ यत्र॑ दुहि॒ता च॑ धे॒नू स॑ब॒र्दुघे॑ धा॒पये॑ते स॒मीची॑ ।
ऋ॒तस्य॒ ते सद॒सीळे अ॒न्तर्म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १२ ॥
मा॒ता । च॒ । यत्र॑ । दु॒हि॒ता । च॒ । धे॒नू इति॑ । स॒ब॒र्दुघे॒ इति॑ स॒बः॒ऽदुघे॑ ।
धा॒पये॑ते॒ इति॑ । स॒मीची॒ इति॑ स॒म्ऽई॒ची ।
ऋ॒तस्य॑ । ते इति॑ । सद॑सि । ई॒ळे॒ । अ॒न्तरिति॑ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १२ ॥

---

## भाषायाम्.

११. याम्या (=मिथुनभूते अहश्च रात्रिश्चेत्येते) नाना वपूंषि (=भिन्नवर्णानि रूपाणि) चक्राते (=धारयतः) । तयोरन्यत् (=एकं) [दिनरूपं] रोचते (=शुक्लतया शोभते) । अन्यत् [रात्रिरूपं] कृष्णं [भवति] । श्यावी च यत् (=या कृष्णा) [या] च अरुषी (=दीप्तवर्णा दिवसरूपा) [ते उभे] स्वसारौ [भवतः] । [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

१२. यत्र (=ययोर्मध्ये) माता च दुहिता च (=मातृभूता या या च दुहितृभूतेति द्वे) धेनू (=पयसा प्रीणयित्र्यौ), सबर्दुघे (=अमृतस्य दोग्ध्र्यौ) समीची (=समीच्यौ=परस्परं संगते सत्यौ) धापयेते (=रसं पाययतस्) ते ऋतस्य सदसि अन्तः (=सत्यस्य गृहे=अन्तरिक्षे) [अहम्] ईळे (=स्तौमि) । [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

माता पृथिवी दुहिता द्यौरिति सायणः ॥

११. जुळीं दोघीं भिन्नभिन्न रूपें धारण करितात. त्यांपैकीं एक प्रकाशतें [ आणि ] दुसरें काळें आहे. जी काळी आणि जी लखलखीत, त्या दोघी बहिणी होत. मोठें देवांचें ऐश्वर्य [होय].

11. The twins assume various shapes. One of them [the twins] shines, the other [is] dark. Both she who is dark and she who is bright are sisters. That [is] one great act of the mighty gods.

. ज्यांपैकीं [ एक ] माता [दुसरी] दुहिता [ मिळून] घी दूध देणाऱ्या, अमृताचा सोडणाऱ्या, [ आणि ] पर संगत [ होत्सात्या ] पान वितात, त्यांस मी सत्याच्या गृहीं वितों. हें एक मोठें देवांचें ऐर्य [ होय ].

12. I praise in the home of Truth those two of whom both the mother and the daughter yield milk, are givers of nectar, [and] being joined each to the other, suckle as mothers. That [is] one great act of the mighty gods.

---

११. ही ऋचा दिवस आणि रात्र दोहोंविषयीं आहे.

१२. ही ऋचा द्यावापृथिवींविषयीं आहे. 'सत्याचें गृह' म्हणजे जेथें यज्ञरूप सत्य प्रादुर्भूत होतें, ती यज्ञमंडपांतील जागा. सायणाप्रमाणें माता म्हणजे येथें पृथिवी आणि दुहिता म्हणजे द्यू.

अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः ।
ऋतस्य सा पयसापिन्वतेळा महद्देवानामसुरत्वमेकम् ॥ १३ ॥

अन्यस्याः । वत्सम् । रिहती । मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः ।
ऋतस्य । सा । पयसा । अपिन्वत । इळा । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १३ ॥

पद्या वस्ते पुरुरूपा वपूंष्यूर्ध्वा तस्थौ त्र्यविं रेरिहाणा ।
ऋतस्य सद्म वि चरामि विद्वान्महद्देवानामसुरत्वमेकम् ॥ १४ ॥

पद्या । वस्ते । पुरुऽरूपा । वपूंषि । ऊर्ध्वा । तस्थौ । त्रिऽअविम् । रेरिहाणा ।
ऋतस्य । सद्म । वि । चरामि । विद्वान् । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १४ ॥

---

## भाषायाम्.

१३. अन्यस्या वत्सम् [ अन्या ] रिहती मिमाय ( =" पृथिव्या वत्समग्निं जिह्वया लिहन्ती द्यौर्ध्वनिं करोति ") । धेनुः (=सा बुरूपा गौः ) कया भुवा ( =जलवर्जितया भूम्या ) ऊधः नि दधे ( =मेघरूपं पोषयति=पूरयति ) । सा इळा ( =सा जलवर्जिता पृथिवी ) ऋतस्य पयसा ( =उदकेन ) अपिन्वत ( =सिक्ता भवति=पूरिता भवति ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

१४. पद्या (=भूमिः ) पुरुरूपा वपूंषि वस्ते (=बहुरूपाणि शरीराणि धारयति ) । त्र्यविं ( =सार्धसंवत्सरवयस्कं वत्सं ) रेरिहाणा ( =पुनः पुनर्लिहन्ती ) ऊर्ध्वा तस्थौ ( =उर्ध्वैस्तिष्ठति ) । विद्वान् ( =जानानोहम् ), ऋतस्य सद्म वि चरामि ( =यज्ञस्य स्थानं परिचरामि ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

पुरुरूपा नानाविधरूपाणि वपूंषि स्थावरजङ्गमात्मकानि रूपाणि वस्ते । आच्छादयति । सैषा भूमिरूर्ध्वोन्नतवेद्यात्मनोन्नता सती स्वसारभूतेन हविषा त्र्यविम् । सार्धसंवत्सरवयस्को वत्सस्त्र्यविरित्युच्यते । तत्प्रमाणमादित्यम् । त्रीन् लोकानवति स्व-

१३. एकीच्या वत्साला [ दुसरी ] चाटून ओरडते. दुभती गाय जलवर्जित भूमीच्या योगानें [ आपली ] कास भरून टाकिते. ती भूमि सत्याच्या दुधानें पुष्ट होते. हें एक मोठें देवांचें ऐश्वर्य [होय].

13. One lows, fondly licking again and again the calf of the other. The milch-cow fills [her] udder by the dry land. This land becomes fat with the milk of Truth. That [is] one great act of the mighty gods.

१४. भूमि अनेक रूपांचीं शरीरें धारण करिते. ती दीड वर्षाच्या वत्साला चाटीत चाटीत उंच उभी राहते. विद्वान् मी सत्याच्या स्थानामधून संचार करितों. हें एक मोठें देवांचें ऐश्वर्य [होय].

14. The ground wears multiform appearances. It stands high, fondly licking again and again the calf one and half years old. Knowing [this] I walk through the seat of Truth. That [is] one great act of the mighty gods.

---

१३. हीहि ऋचा द्यावापृथिवींविषयीं आहे.

'एकीच्या वत्साला.' म्हणजे पृथिवीचा वत्स जो अग्नि तो विद्युद्रूपानें असतो तेव्हां त्याला द्यू चाटिते.

'जलवर्जित' इ०. सायण म्हणतात याचा भावार्थ असा कीं, द्युलोक पृथिवीवरीलें प्रदेशांचें पाणी बाष्परूपानें हरण करितो तेव्हां ते प्रदेश जलवर्जित निरुदक होत असतात.

'सत्याच्या दुधानें'=' ऋतस्य पयसा.' म्हणजे मेघोदकरूप दुधानें असें सायण म्हणतात. तसेंच दिसतें. मेघोदक सत्यरूप यज्ञानें मिळतें अशा समजुतीस अनुसरून म्हणा अथवा तें बिनचूक नेमलेल्या वेळीं येतें म्हणून म्हणा, पण त्याला ऋत ही संज्ञा वेदांत आहे असें जें सायणाचें म्हणणें तें खरें दिसतें.

१४. ही ऋचा कठिण आहे. या सूक्तांतील दुसऱ्या बहुतेक ऋचांप्रमाणें सूक्तकर्त्यानेंच हिचाहि अर्थ गूढ ठेविला आहे. त्यामुळें तिच्या भावार्थाविषयीं तर्कच करणें आहे. सायणांनीं दिलेला अर्थ भाषेखालीं उतरून घेतला आहे. तो पहा.

**प॒दे इ॑व॒ निहि॑ते द॒स्मे अ॒न्तस्तयो॑र॒न्यद्गुह्य॑मा॒विर॒न्यत् ।**
**स॒ध्री॒ची॒ना प॒थ्या॑ सा विषू॑ची म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १५ ॥**
**॥ ३० ॥**

प॒दे इ॒वेति॑ प॒देऽइ॑व । निहि॑ते॒ इति॒ निऽहि॑ते । द॒स्मे । अ॒न्तरिति॑ ।
तयोः॑ । अ॒न्यत् । गुह्य॑म् । आ॒विः । अ॒न्यत् ।
स॒ध्री॒ची॒ना । प॒थ्या॑ । सा । विषू॑ची । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् ।
एक॑म् ॥ १५ ॥ ३० ॥

**आ धे॒नवो॑ धुनयन्ता॒मशि॑श्वीः सब॒र्दुघाः॑ शश॒या अप्र॑दुग्धाः ।**
**नव्या॑नव्या युव॒तयो॒ भव॑न्तीर्म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १६ ॥**

आ । धे॒नवः॑ । धु॒न॒य॒न्ता॒म् । अशि॑श्वीः । स॒बः॒ऽदु॒घाः॑ । श॒श॒याः॑ । अ॒प्र॑ऽदुग्धाः ।
नव्याः॑ऽनव्याः । यु॒व॒तयः॑ । भव॑न्तीः । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् ।
एक॑म् ॥ १६ ॥

---

तेजसा व्याप्नोतीति श्यविरिति वा । रेरिहाणा लिहन्ती तस्थौ । ऋतस्य......आदित्यस्य सद्म स्थानं विद्वान् जानानोहं विचरामि । हविर्भिस्तमादित्यं परिचरामि । इति सायणः ॥

---

## भाषायाम्.

१५. [ अहश्च रात्रिश्चेत्येते ] दस्मे अन्तः ( =सुन्दरेन्तरिक्षे ) निहिते पदे इव ( =स्थापिते स्थाने इव ) [ वर्तते ] । तयोरन्यद् गुह्यम् अन्यद् आविः ( =तयोर्मध्य एकं रात्रिरूपं गूढम् अन्यच्च दिवसरूपमाविर्भूतं ) [ भवति ] । सा पथ्या ( =स मार्गः ) सध्रीचीना विषूची ( =सहगमनवती सत्यपि भिन्ना ) [ भवति ] । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

१६. अशिश्वीः ( =शिशुरहिताः ) सबर्दुघाः ( =अमृतस्य दोग्ध्र्यः ) अप्रदुग्धाः ( =केनाप्यक्षीणरसा ) नव्यानव्या युवतयो भवन्तीः ( =पुनः पुनर्नवा युवतयो भवन्त्यो ) धेनवः ( =? " दिशो मेघा वा ") आ धुनयन्ताम् ( =आदुहन्तु ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

१५. तीं दोघीं जणें सुंदर [अंतरिक्षां]त ठेविलेल्या पावलां-प्रमाणें [होत]. त्यांपैकीं एक गूढ [आहे] [आणि] दुसरें प्रगट [आहे]. तो मार्ग एकच [असूनहि] निरनिराळा [आहे]. हें एक मोठें देवांचें ऐश्वर्य [होय].

15. The two are like two footsteps placed in the wonderful [sky]. One of them is mysterious, the other is manifest. The path, though united, [is yet] various. That [is] one great act of the mighty gods.

१६. वत्स नसलेल्या [आणि] अमृताचा पान्हा सोडणाऱ्या, निद्रिस्त, ज्यांचें दूध कोणीहि काढिलेलें नाहीं अशा, [आणि] नित्य नव्या तरुणी होणाऱ्या धेनु दुधाचा वर्षाव करोत. हें एक मोठें देवांचें ऐश्वर्य [होय].

16. May the cows, calf-less, yielding nectar, lying oblique, not exhausted of their milk, and becoming new and young again and again, be shaken [of their milk for us]. That [is] one great act of the mighty gods.

---

१५. ही ऋचा दोघींविषयीं आहे पण दोघी कोण त्याविषयीं प्राचीन काळापासूनहि संशय आहे. कारण कीं सर्वानुक्रमामध्यें या ऋचेची देवता द्यावापृथिवी अथवा अहोरात्र आहे असें सांगितलें आहे. यावरून हिचा अर्थ दुर्बोध आहे म्हणून सांगणें नकोच. आम्हीं अक्षरशः अर्थ केला आहे.

१६. ही ऋचा दिशांविषयीं आहे असें मानण्याचा संप्रदाय आहे. त्यावरून यांत सांगितलेल्या गाई म्हणजे दिशा होत. आणि त्यांचें दूध म्हणजे वृष्टिद्वारा आलेलें मेघोदक होय.

यदन्यासु वृषभो रोरवीति सो अन्यस्मिन्यूथे नि दधाति रेतः ।
स हि क्षपावान्त्स भगः स राजा महद्देवानामसुरत्वमेकम् ॥१७॥
यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि ।
दधाति । रेतः ।
सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् । देवानाम् ।
असुरऽत्वम् । एकम् ॥ १७ ॥
वीरस्य नु स्वश्व्यं जनासः प्र नु वोचाम विदुरस्य देवाः ।
षोळ्हा युक्ताः पञ्चपञ्चा वहन्ति महद्देवानामसुरत्वमेकम् ॥ १८ ॥
वीरस्य । नु । सुऽअश्व्यम् । जनासः । प्र । नु । वोचाम । विदुः ।
अस्य । देवाः ।
षोळ्हा । युक्ताः । पञ्चऽपञ्च । आ । वहन्ति । महत् । देवानाम् । असु-
रऽत्वम् । एकम् ॥ १८ ॥

---

## भाषायाम्.

१७. यद् (=यद्यपि) वृषभः (=" अपां वर्षकः पर्जन्यात्मेन्द्रः ") अन्यासु रोरवीति (=दिग्रूपासु गोषु मेघद्वारा भृशं कामशब्दं करोति) [तदपि] सः अन्यस्मिन् यूथे (=अन्यास्वेव गोषु) रेतो नि दधाति (=रेतः सिञ्चति)। स हि क्षपावान् (=पृथिवीपतिर्) [भवति] स भगः (=धनदाता) [भवति] स राजा [भवति]। [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

१८. हे जनासः (=जनाः), वीरस्य (=शूरस्येन्द्रस्य) स्वश्व्यं (=शोभनाश्वसमूहं) प्र नु वोचाम (=प्रवदेम किम्?) तस्य (=तत्) [स्वश्व्यं] देवा विदुः (=जानन्ति)। षोळ्हा पञ्चपञ्च (=षट् षट् पञ्च पञ्च च) युक्ताः (=रथे युक्ता) [अश्वास्तम्] आ वहन्ति (=आनयन्ति)। [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

षोळ्हा मासानां द्वन्द्वयोगकाले षोढा दृश्यमाना ऋतवोऽश्वा निरूप्यन्ते। ते च षट्संख्याका ऋतवो हेमन्तशिशिरयोः समासेन पञ्च पञ्च युक्ताः सन्तः कालात्मकमिन्द्रमावहन्ति। इति सायणः ॥

१७. तो कामी वीर कांहीं एक स्त्रियांकडे पाहून जरी कामनाद करितो तरी तो दुसऱ्याच [स्त्री]समूहाच्या ठायीं रेत घालितो. कारण तो पृथिवीचें पालन करणारा, तो उदार, तो राजा [ होय ]. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

१८. हे जन हो, [ ह्या ] वीराचे घोडे चांगले आहेत तें त्याचें भाग्य आपण वर्णूं. तें देव जाणतात. सहा सहा [ आणि ] पांच पांच जोडिलेले घोडे त्याला वाहतात. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

17. Though the bull roars for one [herd of] cows, he puts his semen in another herd. For he [is] a protector of the earth. He [is] bounteous. He [is] a king. That [is] one great act of the mighty gods.

18. Shall we describe, o people, his wealth of good horses? The gods know it. Yoked six at a time [and] five at a time [the horses] carry [him]. That [is] one great act of the mighty gods.

---

१७. येथपासून उरलेलें सूक्त 'पर्जन्यात्मक इंद्र, याविषयीं आहे, म्हणजे मेघरूपानें विद्यमान जो इंद्र त्याविषयीं आहे; किंवा अग्नीविषयीं; किंवा त्वष्ट्याविषयीं आहे, असें मानण्याचा संप्रदाय आहे. या वरूनच या शेवटच्या सहा ऋचांचा अर्थ उघड नाहीं हें सहज ध्यानांत येईल. ही ऋचा मेघरूप इंद्राविषयीं आहे. भावार्थ 'मेघ नाद करूं लागला म्हणजे जरी एका दिशेकडेस गर्जना होते, तरी तो वृष्टि दुसऱ्याच कोणत्या तरी ठिकाणीं करितो,' असा आहे.

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥ १९ ॥
देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोष । प्रऽजाः । पुरुधा ।
जजान ।
इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानाम् । असुरऽ-
त्वम् । एकम् ॥ १९ ॥
मही समैरच्चम्वा समीची उभे ते अस्य वसुना न्यृष्टे ।
शृण्वे वीरो विन्दमानो वसूनि महद्देवानामसुरत्वमेकम् ॥ २० ॥
मही इति । सम् । ऐरत् । चम्वा । समीची इति सम्ऽईची । उभे इति ।
ते इति । अस्य । वसुना । न्यृष्टे इति निऽऋष्टे ।
शृण्वे । वीरः । विन्दमानः । वसूनि । महत् । देवानाम् । असुरऽत्वम् ।
एकम् ॥ २० ॥

---

## भाषायाम्.

१९. सविता ( =प्रेरयिता ) विश्वरूपः ( =नानाविधरूपो ) देवस्त्वष्टा ( =दीप्यमानस्त्वष्टा नाम देवः ) प्रजाः पुरुधा जजान पुपोष [ च ] ( =बहुभिः प्रकारैरुत्पादयति पोषयति च ) । च ( =अपि च ) इमा विश्वानि भुवनानि ( =इमानि सर्वाणि भूतजातानि ) अस्य ( =तस्य स्वकीयभूतानि ) [ सन्ति ] । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

२०. [ स इन्द्रो ] मही ( =महती महत्यौ ) समीची उभे चम्वा सम् ऐरत् ( =परस्परं संगते उभे द्यावापृथिव्यौ सम्यक् प्रेरितवान्=संगमितवान् ) । ते [ द्यावापृथिव्यौ ] अस्य ( =तस्य ) वसुना ( =धनेन ) निऋष्टे ( =नितरां व्याप्ते पूर्णे ) [ भवतः ] । [ स ] वसूनि विन्दमानः शृण्वे ( =युद्धेषु शत्रूणां धनान्यपहरन् सन् श्रूयते गीतकीर्तिर्भवति ) । [ तद् ] एकं देवानां महद् असुरत्वं ( =तद्देवानां मुख्यं प्राबल्यं ) [ भवति ] ॥

१९. प्रेरक [ आणि ] विश्वरूप देव त्वष्टा प्रजांला अनेक प्रकारांनीं उत्पन्न करितो [ आणि] पोसितो. [ आणि ] हीं सकळ भूतें त्याचीं [ आहेत ]. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

२०. तो मोठ्या [ आणि ] परस्पर-संगत द्यावापृथिवींस एकत्र मिळविता झाला. त्या दोघीहि त्याच्या संपत्तीनें भरल्या आहेत. तो वीर [ शत्रूचीं ] धनें हरण करून प्रख्यात होतो. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

19. Divine Tvashṭâ, the omniform inspirer, created the people in various ways and feeds them. And all this creation [is] his. That [is] one great act of the mighty gods.

20. He joined the two great Cups (Earth and Heaven), joined each to the other. They [are] both filled with his wealth. The hero, taking possession of [the enemies] wealth, is famous. That [is] one great act of the mighty gods.

---

१९. त्वष्टा प्रजांला उत्पन्न करितो. | सू. १३ मं. १० पहा.

इमां च नः पृथिवीं विश्वधाया उप क्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा महद्देवानामसुरत्वमेकम् ॥ २१ ॥

इमाम् । च । नः । पृथिवीम् । विश्वऽधायाः । उप । क्षेति । हितऽमित्रः । न । राजा ।
पुरःऽसदः । शर्मऽसदः । न । वीराः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २१ ॥

निष्षिध्वरीस्त ओषधीरुतापो रयिं त इन्द्र पृथिवी बिभर्ति ।
सखायस्ते वामभाजः स्याम महद्देवानामसुरत्वमेकम् ॥२२॥३१॥ ॥ ३ ॥

निःऽसिध्वरीः । ते । ओषधीः । उत । आपः । रयिम् । ते । इन्द्र । पृथिवी । बिभर्ति ।
सखायः । ते । वामऽभाजः । स्याम । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २२ ॥ ३१ ॥ ३ ॥

---

## भाषायाम्.

२१. च (=अपि च) विश्वधायाः (=विश्वस्य धाता पोषयितेन्द्र) इमां नः पृथिवीं हितमित्रो राजा न (=हितोपदेष्टा राजेव) । उप क्षेति (=ईष्टे) [तस्य महतः] पुरःसदः (=युद्धार्थे पुरतो गच्छन्तः) शर्मसदः (=रक्षणाय समीपे तिष्ठन्तो) वीरा न (=शूरा इव) [भवन्ति] । [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

२२. [हे इन्द्र], ओषधीः (=औषधय) उत आपः (=उदकानि च) ते निष्षिध्वरीः (=तव निष्षिध्वर्यस्त्वत्कर्तृकसिद्धिमत्यो) [भवन्ति] । हे इन्द्र, पृथिवी तव रयिं बिभर्ति (=पृथिव्यां यानि वसूनि सन्ति तानि त्वद्दत्तानि भवन्ति) । ते सखायः (=तव सखायो) [वयं] वामभाजः स्याम (=तव धनस्य भागिनो यथा भवेम तथा कुरु) । [तद्] एकं देवानां महद् असुरत्वं (=तद्देवानां मुख्यं प्राबल्यं) [भवति] ॥

२१. आणि सकळांला पोसणारा तो ह्या आमच्या पृथिवीवर, हितोपदेष्ट्या राजाप्रमाणें, राज्य करितो. युद्धासाठीं पुढें असणाऱ्या [आणि] आश्रयासाठीं जवळ असणाऱ्या वीरांप्रमाणें [ त्याचे मरुत् होत ]. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

२२. हे इंद्रा, वनस्पति आणि आपो[देवी ] तुझ्या देणग्यांनीं भरलेल्या [आहेत]. पृथिवी तुझें धन धारण करिते. तुझे मित्र [जे आम्ही ते] संपत्तीचा उपभोग घेणारे होऊं असें कर. हें एक मोठें देवांचें ऐश्वर्य [ होय ].

21. And he who feeds all governs this our earth, like a king beneficent and friendly. [His Maruts are] like heroes that go before, that accompany for shelter. That [ is ] one great act of the mighty gods.

22. The plants and the waters are full of thy gifts. The Earth bears thy wealth, o Indra! May we, thy friends, be sharers of thy wealth. That [is] one great act of the mighty gods.

## सूक्तम् ५६–२९०.

विश्वामित्रस्य वाचो वा पुत्रः प्रजापतिर्ऋषिः। विश्वे देवा देवता।
त्रिष्टुप् छन्दः॥

**न ता मिनन्ति मायिनो न धीरा व्रता देवानां प्रथमा ध्रुवाणि।**
**न रोदसी अद्रुहा वेद्याभिर्न पर्वता निनमे तस्थिवांसः॥ १॥**

न। ता। मिनन्ति। मायिनः। न। धीराः। व्रता। देवानाम्। प्रथमा। ध्रुवाणि।
न। रोदसी इति। अद्रुहा। वेद्याभिः। न। पर्वताः। निऽनमे। तस्थिऽवांसः॥ १॥

**षड्भाराँ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः।**
**तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका॥ २॥**

षट्। भारान्। एकः। अचरन्। बिभर्ति। ऋतम्। वर्षिष्ठम्। उप। गावः। आ। अगुः।
तिस्रः। महीः। उपराः। तस्थुः। अत्याः। गुहा। द्वे इति। निहिते इति निऽहिते। दर्शि। एका॥ २॥

---

### भाषायाम्.

१. देवानां ता प्रथमा ध्रुवाणि व्रता (=लोके प्रसिद्धानि प्रथमभूतानि स्थिराणि लोकपालनादीनि कर्माणि) न मायिनो मिनन्ति (=कपटबुद्ध्युपेता असुरा न हिंसन्ति) न धीरा [मिनन्ति] (=न विद्वांसोपि हिंसन्ति)। अद्रुहा रोदसी (=अद्रुहौ द्रोहरहिते द्यावापृथिव्यौ) वेद्याभिर्न निनमे (=स्वकीयाभिः प्रवृत्तिभिः=स्वयमेव नमितुं न शक्ये भवतः) तस्थिवांसः पर्वता [वेद्याभिर्] न [निनमे=पृथिव्याम् ऊर्ध्वतराः स्थिराः पर्वता अपि स्वयमेवं नमितुं न शक्या भवन्ति]॥

२. एकः अचरन् षट् भारान् बिभर्ति (=अगतिमान् संवत्सर एकोपि सन् षट्संख्याकान् भारान् ऋतुरूपान् धारयति)। ऋतं (=सत्यमयं) वर्षिष्ठम् (=अतिशयेन वीर्यवन्तं "तमेव संवत्सरं") गावः (=रश्मिरूपा) उप आ अगुः (=प्राप्नुवन्ति)। तिस्रः अत्याः (=चञ्चला) महीः (=महत्यः=महान्तो लोका) उपरा·

## सूक्त ५६–२९०.

ऋषि–विश्वामित्राचा पुत्र प्रजापति अथवा वाक् याचा पुत्र प्रजापति. देवता–विश्वे देव. वृत्त–त्रिष्टुप्.

१. देवांचीं तीं अचल प्रथम-कर्मे कोणी मायावी अथवा कोणी विद्वान् जन भंगूं शकत नाहींत. द्रोहहीन द्यावापृथिवी आपणहून [वांकूं शकत ] नाहींत, उंच उंच पर्वत वांकूं शकत नाहींत.

२. एकला स्थायी होत्साता सहा भार धारण करितो. अत्यंत वीर्यवान् [ आणि ] सत्यभूत जो तो, त्याजप्रत पुष्कळ गाई येतात. चंचल मोठ्या तिघीजणी एकीवर एक [ आहेत] [ त्यांतून ] दोघीजणी अंतर्हित आहेत, आणि एक दृष्टिगोचर आहे.

## Hymn 56–290

To *Vis've Devas.* By *Prajâpati* son of *Vis'vâmitra* or *Prajâpati* son of *Vâk.* Metre—*Trishtubh.*

1. Neither the artful nor the wise can break those first eternal principles of the gods. Not the beneficent Heaven and Earth [can] of their own accord [bend], not the firm mountains can bend [of their own accord].

2. The single one without motion bears the six burdens. To him the most puissant one the cows approach. Three great unstable worlds stand one upon another: two are hidden, one is visible.

---

१. 'देवांचीं अचल प्रथम कर्में '= 'देवानां प्रथमा ध्रुवाणि व्रता.' म्हणजे सूर्यानें अमुक वेळीं उगवावें, अमुक वेळीं पर्जन्य पडावा, अमुक वेळीं रात्र यावी, इत्यादि जे नियम देवांनीं बांधून ठेविले आहेत ते.

२. या सूक्तांतहि बहुतेक मंत्र कूटार्थ आहेत. सायणांच्या मतें या मंत्रांत सांगितलेला पुरुष संवत्सर होय, आणि सहा भार म्हणजे सहा ऋतु होत आणि गाई म्हणजे किरणरूप गाई होत; आणि तिघीजणी सांगितल्या ते तीन लोक होत; त्यांतून दोन गुप्त म्हणून सांगितले ते अंतरिक्ष आणि द्यू हे होत, आणि दृष्टिगोचर सांगितली ती पृथिवी होय.

त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान् ।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम् ॥३॥

त्रिऽपाजस्यः । वृषभः । विश्वऽरूपः । उत । त्रिऽउधा । पुरुध । प्रजाऽवान् ।
त्रिऽअनीकः । पत्यते । माहिनऽवान् । सः । रेतःऽधाः । वृषभः । शश्वतीनाम् ॥ ३ ॥

---

स्तस्थुः (=उपर्युपरि वर्तमानास्तिष्ठन्ति)। द्वे गुहा निहिते (=तासां मध्ये द्वे अदृश्ये भवतः)। एका दर्शि (=दृग्गोचरा भवति)॥

अचरन् स्थायी एकः संवत्सरः षट् षट्संख्याकान् भारान्। भ्रियते पुष्पविकासादि येष्विति भारा ऋतवः। तान्वसन्तादीन् बिभर्ति। अवयवत्वेन धारयति। तथा ऋतं सत्यभूतं वर्षिष्ठं वृद्धतरमादित्यात्मकं तमेव संवत्सरं गावो रश्मय उपागुः। प्राप्नुवन्ति। किंच तस्मिन्नेव संवत्सरेऽत्या अतनशीला आगमापायधर्मोपेतास्तिस्रो महीस्त्रयो लोका उपरा उपर्युपरि वर्तमानास्तस्थुः। तिष्ठन्ति। लोकत्रयमेव दर्शयति। गुहा गुहायां स्वात्मनि द्वे भूमी द्यौश्चान्तरिक्षं चेत्येते निहिते। न दृश्येते। एका भूमिर्दर्शि। सर्वभूताधारतया दृश्यते। इति सायणः॥

---

## भाषायाम्.

३. त्रिपाजस्यः (=त्रीणि वक्षांसि यस्य तादृशो) विश्वरूपः (=सर्वरूपः) उत (=अपि च) त्र्युधः (=त्र्यूधस्कः) पुरुध प्रजावान् (=नानाविधदेशेषु प्रजा यस्य तादृशस्) त्र्यनीकः (=त्रिमुखो) माहिनावान् वृषभः पत्यते (=महिम्ना युक्तो वीर आगच्छति)। स वृषभः शश्वतीनां रेतोधाः (=स वीर्यवान् नहीषु रेतसः स्थापयिता) [भवति]॥

त्रिपाजस्यः ग्रीष्मवर्षाहेमन्तास्त्र्यैस्त्रिभिर्ऋतुभिः पाजस्यमुरो यस्य स त्रिपाजस्यः। त्र्युरस्क इत्यर्थः। उरोवचनश्च पाजस्यशब्दः। इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्। वाज. २५.८.। इत्यश्वमेधमन्त्र उरःपरतयाम्नानात् पाजसि बले साधुरिति व्युत्पन्नेश्च। सर्वेषामङ्गानां मध्य उरसो बलवत्त्वात्। वृषभः स्वावयवभूते वर्षतीवपां वर्षको विश्वरूपस्तत्तदृत्वसाधारणकार्यैः पुष्पविकासादिभिर्लिङ्गैर्नानारूप उतापि च त्र्युधा वसन्तशरद्धेमन्ताख्यैस्त्रिभिर्ऋतुभिरूधो यस्य स त्र्युधा। प्रजावान्। प्रकर्षेण जायन्त इति व्रीह्यादयः प्रजाः। पुरुध नानाप्रकारेण विद्यमानव्रीहियवादिरूपप्रजावान्।

३. तीन वक्षस्थळें असलेला, विश्वरूप आणि तीन कासांचा, अनेक ठिकाणीं ज्याची प्रजा आहे असा, तीन मुखांचा, [आणि] महिम्यानें युक्त असा तो वीर येतो. तो वीर पुष्कळजणींच्या ठायीं वीर्य घालणारा [ होय ].

3. The bull comes, being of three breasts [and] of all shapes, of three udders, and having his progeny in various places, of three faces, of great magnitude. He is a bull that impregnates many females.

---

३. हेंहि एक कूट आहे. सायण म्हणतात यांतला वीर म्हणजे संवत्सररूप होय आणि तीन वक्षःस्थळें म्हणजे ग्रीष्म, वर्षा आणि हेमंत हे ऋतु होत; आणि तीन कासा म्हणजे वसंत, शरद् आणि हेमंत हे होत, आणि प्रजा म्हणजे व्रीह्यादिक धान्यें होत; आणि तीन तोंडें म्हणजे उष्ण, वर्ष, आणि शीत हीं होत.

**अभीके आसां पदवीरबोध्यादित्यानामह्वे चारु नाम ।**
**आपश्चिदस्मा अरमन्त देवीः पृथग्व्रजन्तीः परि षीमवृञ्जन् ॥४॥**

अभीके । आसाम् । पदऽवीः । अबोधि । आदित्यानाम् । अह्वे । चारु ।
नाम ।

आपः । चित् । अस्मै । अरमन्त । देवीः । पृथक् । व्रजन्तीः । परि ।
सीम् । अवृञ्जन् ॥ ४ ॥

किंच त्र्यनीकस्त्रिभिरुष्णवर्षशीताख्यैरनीकैर्गुणैरुपेतो माहिनावान् महत्त्ववान् संवत्सराभिमानी देवः पत्यते । आगच्छति । वृषभः सेचनसमर्थः स संवत्सरः शश्वतीनां बह्वीनामोषधीनां पुष्पफलादिसंपत्तये रेतोधा रेतस उदकस्य धर्ता भवति ॥ त्र्युधा । बहुव्रीहेरूधसोऽनङित्यनङ् । सर्वविधीनां छन्दसि विकल्पितत्वात्पुंस्यपि भवति । ऊकारस्य ह्रस्वश्छान्दसः । उत्तरपदान्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानमित्युत्तरपदान्तोदात्तत्वम् । इति सायणः ॥

---

## भाषायाम्.

४. पदवीः (=नायकः "संवत्सर") आसाम् अभीके (=तासाम्=? "ओषधीनां समीपे") अबोधि (=आविरभूत्) । आदित्यानाम् (=अदितेः पुत्राणां) चारु (=प्रियं) नाम अह्वे (=आह्वयामि) । आपश्चिद् देवीः (=आपो देव्योपि) अस्मै अरमन्त (=विरमन्ति) । पृथग् व्रजन्तीः (=गच्छन्त्यस्ताः) सीम् (=एनं) परि अवृञ्जन् (=परिवर्जयन्ति) ॥

संवत्सर आसामोषधीनामभीके समीपे पदवीः । पदानि तत्तद्वनविशिष्टपुष्पफलादीनि वेति प्रजनयतीति पदवीः सन् अबोधि । बुध्यते । सावधानो वर्तते । तथादित्यानाम् । आदित्या मासाः संख्यासाम्यात् । यद्वा आदित्यसंक्रमणनिमित्तत्वादादित्या मासाः । मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रश्चैत्राद्यः स ज्ञेय इति स्मृतेः । तेषां चैत्रादीनां मासानां चारु नाम मधुश्च माधवश्चेत्यादि नामधेयमह्वे । आह्वयामि । उच्चारयामीत्यर्थः । किंच देवीर्द्योतनशीलाः पृथगितस्ततो व्रजन्तीर्गच्छन्त्य आपश्चित् आपोप्यस्मै संवत्सरायारमन्त । संवत्सरसंबन्धिमासचतुष्टये वृष्टिद्वारा रमन्ते । ता आपः सीमेनं संवत्सरं पर्यवृञ्जन् । अष्टसु मासेषु परिवर्जयन्ति । इति सायणः ॥

४. तो नायक त्यांच्या समीप आविर्भूत होतो. मी आदित्यांचें प्रिय नाम उच्चारितों. त्याजपुढें आपो-देवीहि स्तब्ध होतात. पृथक् जाणाऱ्या त्या [ आपो-देवी ] त्याला वर्जितात.

4. The leader has awoke in the presence of them. I invoke the dear name of the Âdityas. Even the divine waters bow to him. Going separately they avoided him.

४. हेंहि एक कूट आहे. आणि सायणांप्रमाणें त्यांतील नायक म्हणजे संवत्सरच होय; 'त्यांच्या समोर' म्हणजे ओषधींसमोर; 'वर्जितात' म्हणजे आठ महिन्यांत जी मेघवृष्टि होत नाही तें न होणें.

**त्री षधस्थां सिन्धवस्त्रिः कवीनामुत त्रिमाता विदथेषु सम्राट् ।**
**ऋतावरीर्योषणास्तिस्रो अप्यास्त्रिरा दिवो विदथे पत्यमानाः ॥५॥**

त्री । सधऽस्था । सिन्धवः । त्रिः । कवीनाम् । उत । त्रिऽमाता । विदथेषु । सम्ऽराट् ।

ऋतऽवरीः । योषणाः । तिस्रः । अप्याः । त्रिः । आ । दिवः । विदथे । पत्यमानाः ॥ ५ ॥

---

## भाषायाम्.

५. हे सिन्धवः (=आपः=अन्तरिक्ष), कवीनां (=? मेधाविनां देवानां) त्रि-त्री सधस्था (=त्रिगुणितानि त्रीणि स्थानानि भवन्ति)। उत (=अपि च) त्रि-माता (=? तिस्रो मातरो यस्य स) विदथेषु सम्राट् (=यज्ञेषु सम्यग्दीप्यमानो) [भवति]। ऋतावरीः (=सत्यवत्यः=यज्ञवत्यः) अप्याः (=उदकसंबन्धिन्यस्) तिस्रो योषणाः (=युवत्यः "इळासरस्वतीभारतीत्येवंरूपास्") त्रिरा दिवः (=दिवसस्य त्रिषु सवनेषु) विदथे पत्यमानाः (=यज्ञे आगच्छन्त्यो) [भवन्ति]॥

प्रजापतिः स्वविज्ञानं सिन्धूनां निवेदयति। हे सिन्धव आपः सर्वसाक्षिण्यो यू-यम्। त्री षधस्था त्रयो लोकाः। ते च प्रत्येकं त्रिर्भवन्ति। तथा त्रयो वा इमे त्रिवृतो लोका इति श्रुतिः। न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणं न विव्यचन्त भू-मयः। ऋग्वे. ८. ६. १५.। इति प्रत्येकं बहुवचनश्रवणात्। बहुवचनं च कपिञ्जल-न्यायेन त्रित्वे पर्यवसितम्। ते च लोकाः कवीनां देवानां निवासस्थानानि भवन्ति। उतापि च त्रिमाता त्रयाणाममीषां लोकानां निर्माता संवत्सरः सूर्यो वा विदथेषु यज्ञेषु सम्राट् यजनीयतया सम्यग्दीप्यमानो वर्तते। तथा ऋतावरीरुदकवत्योऽ-प्या नभस्या आप्तव्या वा तिस्रो योषणास्त्रिसंख्याका इळासरस्वतीभारतीत्येवं-रूपाः परस्परमिश्रणोपेता देवता विदथे यज्ञे दिवो दिवसस्य त्रिस्त्रिषु सवनेष्वाप-त्यमाना आगच्छन्त्यो भवन्ति। इति सायणः॥

५. हे सिंधूंनो, मेधावींची तिप्पट तीन स्थानें [ आहेत ]. आणि तीन मातांचा पुत्र यज्ञांमध्यें अति देदीप्यमान [ असतो ]. उदकसंबंधी पूज्य तरुण तिघीजणी यज्ञांत दिवसाला तीनवेळ येणाऱ्या [ होत ].

5. Thrice three are the seats of the wise ones, o Rivers! And the son of three mothers shines brilliantly in the sacrifices. The three aquatic holy young females come to the sacrifice three times a day.

५. हें एक दुसरें कूट. सायण म्हणतात कीं, 'मेधावी' म्हणजे देव; 'तीन मातांचा पुत्र' म्हणजे संवत्सर किंवा सूर्य होय; 'तिघीजणी' सांगितल्या त्या इळा, सरस्वती आणि भारती ह्या देवी होत. अशा कूटार्थ मंत्रांना अक्षरशः अर्थ असलेला सोपा असतो. तोच करणें इष्ट असल्यामुळें आम्ही केला आहे.

**त्रिरा दिवः सवितर्वार्याणि दिवेदिव आ सुव त्रिर्नो अह्नः ।**
**त्रिधातु राय आ सुवा वसूनि भग त्रातर्धिषणे सातये धाः ॥६॥**

त्रिः । आ । दिवः । सवितरिति । वार्याणि । दिवेऽदिवे । आ । सुव ।
त्रिः । नः । अह्नः ।
त्रिऽधातु । रायः । आ । सुव । वसूनि । भग । त्रातः । धिषणे ।
सातये । धाः ॥ ६ ॥

**त्रिरा दिवः सविता सोषवीति राजाना मित्रावरुणा सुपाणी ।**
**आपश्चिदस्य रोदसी चिदुर्वी रत्नं भिक्षन्त सवितुः सवाय ॥७॥**

त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा ।
सुपाणी इति सुऽपाणी ।
आपः । चित् । अस्य । रोदसी इति । चित् । उर्वी इति । रत्नम् ।
भिक्षन्त । सवितुः । सवाय ॥ ७ ॥

---

## भाषायाम्.

६. हे सवितः, त्रिरा दिवः ( =दिवसस्य त्रिषु सवनेषु ) दिवेदिवे ( =प्रत्यहम् ) अहस्त्रिः ( =दिवसस्य त्रिवारं ) नो वार्याणि आ सुव ( =अस्मदर्थं धनानि प्रेरय= उदित्य नो धनान्यानय ) । त्रिधातु ( =त्रिभिः प्रकारैः ) रायो वसूनि आ सुव ( =त-वागमनेन संपदो धनानि च प्रयच्छ ) । हे त्रातर्भग, हे धिषणे [ नाम देवि ], सातये धाः ( =धनलाभायास्मान् कुरु=वयं धनं यथा लभामहे तथा कुरु )॥

७. सविता त्रिरा दिवः सोसवीति ( =दिवसस्य त्रिवारमागत्यास्मभ्यं धनं प्रय-च्छतु ) । राजाना सुपाणी मित्रावरुणा ( =राजानौ शोभनहस्तौ मित्रावरुणौ ) आप-श्चित् ( =आपो देव्यावपि ) उर्वी रोदसी चित् ( =महत्यौ द्यावापृथिव्यावपि ) स-वितुः सवाय रत्नं भिक्षन्त ( =सवितुर्देवस्य सवेन आगमनेन धनं याचन्ते ) ॥

६. हे सवित्या, तूं येऊन दिवसाला तीनवेळ संपदा–प्रतिदिनीं, दिवसाला तीन वेळ आम्हांला [संपदा] आण. तूं तीन प्रकारांनीं संपत्ति [आणि] धनें दे. हे भगा, हे धिषणे, तूं [ आम्हांला ] धनलाभ होईल असें कर.

७. सविता आपल्या येण्यानें दिवसाला तीन वेळ धनप्राप्ति करून देओ. सुहस्त राजे मित्रावरुण, [ आणि ] उदकें देखील [आणि] महा द्यावापृथिवी देखील सवित्याच्या येण्यानें आपलें इष्ट सिद्धीस जाओ असें प्रार्थितात.

6. Three times a day, o Savitâ—daily three times a day, come and grant us wealth. Come and give riches and wealth in three ways. Lead us, o saviour Bhaga, to wealth, o Dhishaṇâ!

7. May Savitâ come three times a day. The good-handed kings Mitra and Varuṇa, even the Waters, even the vast Heaven and Earth, implore blessings of this Savitâ, when he comes.

६. 'भग' सू. १४ मं. ३ पहा. 'धिषणा' ही एक देवी आहे. सू. २२ मं. १० पहा.

त्रिरुत्तमा दूणशा रोचनानि त्रयो राजन्त्यसुरस्य वीराः ।
ऋतावान इषिरा दूळभासस्त्रिरा दिवो विदथे सन्तु देवाः ॥ ८॥
॥ १ ॥

त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजन्ति । असुरस्य । वीराः ।
ऋतऽवानः । इषिराः । दुःऽदभासः । त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥ ८ ॥ १ ॥

---

## भाषायाम्.

८. उत्तमा ( =उत्तमानि श्रेष्ठतमानि ) दूणशा ( =केनापि विनाशयितुमशक्यानि ) रोचनानि त्रिः ( =दीप्तिमन्ति स्थानानि त्रिवारं त्रीणि ) [ भवन्ति ] । असुरस्य ( =बलवतः=? ) वीरास्त्रयो राजन्ति ( =शोभन्ते ) । ऋतावानः ( =सत्यकर्मरूपयज्ञेन तद्वन्त ) इषिराः ( =शीघ्रगमना ) दूळभासः ( =केनापि हिंसितुमशक्या ) देवास्त्रिरा दिवः ( =दिवसस्य त्रिवारं ) विदथे सन्तु ( =यज्ञे तिष्ठन्तु ) ॥

---

## सूक्तम् ५७-२९१.

विश्वामित्र ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः ॥

प्र मे विविक्वाँ अविदन्मनीषां धेनुं चरन्तीं प्रयुतामगोपाम् ।
सद्यश्चिद्या दुदुहे भूरि धासेरिन्द्रस्तदग्निः पनितारो अस्याः ॥१॥

प्र । मे । विविक्वान् । अविदत् । मनीषाम् । धेनुम् । चरन्तीम् । प्रऽयुताम् । अगोपाम् ।
सद्यः । चित् । या । दुदुहे । भूरि । धासेः । इन्द्रः । तत् । अग्निः । पनितारः । अस्याः ॥ १ ॥

---

## भाषायाम्.

१. विविक्वान् ( =विवेकवान् ) [ इन्द्रः ] अगोपां ( =रक्षितृहीनां ) प्रयुतां ( =पृथक् कृताम् एकाकिनीं ) चरन्तीं ( =संचरन्तीं ) मे मनीषां धेनुं ( =मम स्तुति-

८. तीन अति उंच अविनाशी देदीप्यमान स्थानें आहेत. त्या प्रबळाचे तीन वीर पुत्र शोभायमान होत. पूज्य, शीघ्रगतिमंत, [ आणि ] अविनाश्य देव दिवसाला तीन वेळ यज्ञांत असोत.

8. There are three brilliant regions, highest and indestructible. Three brave sons of the mighty spirit shine. May the holy, swift, indestructible gods be in the sacrifice three times a day.

८. यांत जो 'प्रबळ' सांगितला तो संवत्सररूप होय, त्याचे तीन पुत्र म्हणजे अग्नि, वायु आणि सूर्य हे होत असें सायण म्हणतात.

---

## सूक्त ५७–२९१.

ऋषि–विश्वामित्र. देवता–विश्वे देव. वृत्त–त्रिष्टुप्.

१. राखणारा जिच्या समीप नाहीं अशी, एकटी फिरणारी गाय[च जशुं जी] माझी स्तुति, तिला [ बरें वाईट ] निवडणारा [ इन्द्र ] जाणो. जी [ स्तुति ] तत्क्षणीं विपुळ अन्नाचा पान्हा सोडिते. तर इंद्र, अग्नि, [ आणि दुसरे देव ] तिची प्रशंसा करणारे [होओत].

## Hymn 57–291.

To the *Vis've Devas.* By *Vis'vâmitra.* Metre—*Trishtubh.*

1. May [Indra], who distinguishes, know my praise [ that is like ] a milchcow wandering alone without a keeper, which instantly yields plenty of nourishment. May therefore Indra, Agni [and the other gods] be its commenders.

**इन्द्रः सु पूषा वृषणा सुहस्ता दिवो न प्रीताः शशयं दुदुह्रे ।**
**विश्वे यदस्यां रणयन्त देवाः प्र वोऽत्र वसवः सुम्नमश्याम् ॥२॥**

इन्द्रः । सु । पूषा । वृषणा । सुऽहस्ता । दिवः । न । प्रीताः । शशयम् ।
दुदुह्रे ।
विश्वे । यत् । अस्याम् । रणयन्त । देवाः । प्र । वः । अत्र । वसवः ।
सुम्नम् । अश्याम् ॥ २ ॥

**या जामयो वृष्ण इच्छन्ति शक्तिं नमस्यन्तीर्जानते गर्भमस्मिन् ।**
**अच्छा पुत्रं धेनवो वावशाना महश्चरन्ति बिभ्रतं वपूंषि ॥ ३ ॥**

याः । जामयः । वृष्णे । इच्छन्ति । शक्तिम् । नमस्यन्तीः । जानते ।
गर्भम् । अस्मिन् ।
अच्छ । पुत्रम् । धेनवः । वावशानाः । महः । चरन्ति । बिभ्रतम् ।
वपूंषि ॥ ३ ॥

---

रूपां गां ) प्र अविदत् (=प्रकर्षेण जानातु ) । या [ मनीषारूपा धेनुः ] सद्यश्चित् (=तत्क्षणमेव ) धारेर्भूरि (=अन्नस्य बहु फलं=प्रभूतमन्नं ) दुदुहे (=दुग्धे ) । तत् (=तस्मात् कारणाद् ) इन्द्रः अग्निर् [ इतरे च देवा ] अस्याः (=तस्या स्तुत्याः ) पनितारः (=स्तोतारो ) [ भवन्तु ] ॥

---

## भाषायाम्.

२. इन्द्रः पूषा [ इत्येतौ ] सुहस्ता वृषणा (=सुहस्तौ वीरौ ) [ इतरे च देवाः ] प्रीताः [ सन्तो ] न (=इदानीं ) शशयं (=मेघं ) दिवः (=द्युसकाशाद् ) दुदुह्रे (=दुहन्ति ) । यत् (=यस्माच्च कारणाद् ) विश्वे देवा अस्यां [ स्तुत्यां ] रणयन्त (=रमन्ते ) अत्र (=अतः कारणात् ) हे वसवः, वः सुम्नं प्र अश्यां (=युष्माकं सुखं प्राप्नुयाम् ) ॥

३. या जामयः (=स्वसारः=? ) वृष्णे शक्तिमिच्छन्ति (=वीर्यसेचनसमर्थाय वीराय सेचनसामर्थ्यमिच्छन्ति ) [ ता ] नमस्यन्तीः (=नमस्यन्त्यः=प्रह्वीभवन्त्यः सत्यः ) अस्मिन् (=तस्मिन् वीरे ) गर्भं जानते (=गर्भस्थापनशक्तिमनुभवन्ति ) । वावशानाः (=कामयमाना ) धेनवः महो वपूंषि (=महांसि महान्ति रूपाणि ) बिभ्रतं (=धारयन्तं ) पुत्रम् अच्छ चरन्ति (=पुत्रं प्रति गच्छन्ति ) ॥

२. सुहस्त जे वीर इंद्र आणि पूषा ते [आणि दुसरे देव] आतां संतुष्ट होऊन द्युलोकाहून मेघाला दोहतात. ज्यापेक्षां सर्व देव या [माझ्या स्तुतीच्या]ठायीं रममाण होतात त्यापेक्षां, हे वसूंनो, तुम्ही मला तुमचें सुख प्राप्त होईं असें करा.

2. Indra and Pûshâ, both puissant and goodhanded, [and the other gods], being pleased, now milk the cloud from the heaven. Inasmuch as the gods take delight in this [praise] may I, o Vasus, therefore, attain your blessing.

३. ज्या भगिनी वीराकारणें शक्ति इच्छितात, त्या नम्र होऊन त्याच्या आंगीं असलेलें गर्भसामर्थ्य अनुभवितात. कामयमान धेनु, महारूपें धारण करणारा जो पुत्र त्याप्रत जातात.

3. Those sisters who wish strength to the hero, become low and experience in him the power of inpregnating. The cows fondly go towards their calf that wears great forms.

३. या मंत्रांत एक कूट आहे. सायणांप्रमाणें 'भगिनी' सांगितल्या त्या ओषधिरूप होत, आणि 'वीर' सांगितला तो इन्द्र होय.

अच्छा विवक्मि रोदसी सुमेके ग्राव्णो युजानो अध्वरे मनीषा ।
इमा उ ते मनवे भूरिवारा ऊर्ध्वा भवन्ति दर्शता यजत्राः ॥ ४ ॥

अच्छ । विवक्मि । रोदसी इति । सुमेके इति सुऽमेके । ग्राव्णः । युजानः । अध्वरे । मनीषा ।
इमा । ऊं इति । ते । मनवे । भूरिऽवाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥ ४ ॥

या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची ।
तयेह विश्वाँ अवसे यजत्राना सादय पायया चा मधूनि ॥ ५ ॥

या । ते । जिह्वा । मधुऽमती । सुऽमेधाः । अग्ने । देवेषु । उच्यते । उरूची ।
तया । इह । विश्वान् । अवसे । यजत्रान् । आ । सादय । पायय । च । मधूनि ॥ ५ ॥

---

## भाषायाम्.

४. अध्वरे ग्राव्णो युजानः (=यज्ञे सोमाभिषवार्थं ग्राव्णः प्रयुञ्जानोहं) सुमेके रोदसी (=सुरूपे द्यावापृथिव्यौ) मनीषा (=मनीषया स्तुत्या) अच्छ विवक्मि (=आभिमुख्येन स्तौमि)। [हे अग्ने], इमा उ (=इमाश्च) ते (=तव) भूरिवाराः (=बहुधनोपेता) दर्शताः (=दर्शनीयाः सुन्दरा) यजत्राः (=यजनीया) [ज्वाला] मनवे ऊर्ध्वा भवन्ति (=मनुष्यार्थम् ऊर्ध्वमुखाः सिद्धा भवन्ति)॥

५. हे अग्ने, या ते (=तव) मधुमती (=माधुर्योपेता) सुमेधाः (=सुप्रज्ञा) जिह्वा देवेषु उरूची उच्यते (=बहुव्यापिनी स्तूयते) तया विश्वान् यजत्रान् (=सर्वान् पूजनीयान् देवान्) अवसे (=रक्षणाय) इह आ सादय (=अत्रानीय उपवेशय)। मधूनि पायय च (=मधुरान् सोमरसान् भक्षय च)॥

४. मी [सोम काढण्यासाठीं] ग्रावे जोडून [ या ] यज्ञांत सुरूप द्यावापृथिवींचा स्तुतीनें धांवा करितों. [ हे अग्नी], अनेक-संपत्ति-संपन्न, सुंदर, [ आणि ] पूजनीय [ अशा ज्या ] तुझ्या ह्या [ज्वाळा, या ] मानवासाठीं सिद्ध होतात.

५. हे अग्नी, जी तुझी गोड, सुप्रज्ञ जिह्वा देवांमध्यें बहुव्यापक म्हटली जाते, तिच्या योगानें सर्व यजनीय [देवां]ला येथें रक्षणासाठीं आणून बसीव आणि त्यांस मधुर पेयें पाज.

4. Joining the soma-pressing stone I celebrate with a hymn in [this] sacrifice the beautiful Heaven and Earth. These thy beautiful and adorable [ flames ] rise for man, o Agni!

5. With thy sweet and wise tongue which, o Agni, is called long-reaching among the gods, do thou seat here all the venerable [gods] for the oblation and make them drink the delicious juices.

५. 'बहुव्यापक'=' उरूची.' म्हणजे पुष्कळ ठिकाणीं पसरणारी.

**या ते अग्ने पर्वतस्येव धारासश्चन्ती पीपयद्देव चित्रा ।**
**तामस्मभ्यं प्रमतिं जातवेदो वसो रास्व सुमतिं विश्वजन्याम् ॥**
**॥ ६ ॥ २ ॥**

या । ते । अग्ने । पर्वतस्यऽइव । धारा । असश्चन्ती । पीपयत् । देव । चित्रा ।
ताम् । अस्मभ्यम् । प्रऽमतिम् । जातऽवेदः । वसो इति । रास्व । सुऽमतिम् । विश्वऽजन्याम् ॥ ६ ॥ २ ॥

## भाषायाम्.

६. हे देव अग्ने, या ते पर्वतस्य धारेव (=मेघवृष्टेर्धारा यथा तथा) असश्चन्ती (=असङ्गवती=संतता) चित्रा (=रमणीया) [प्रमतिः=अनुग्रहात्मिका बुद्धिः] पीपयत् (=पाययति पोषयत्युपासकान्) तां प्रमतिं हे जातवेदः (=जातानां वेदितरग्ने), हे वसो (=साधो), विश्वजन्यां सुमतिं (=विश्वेभ्यो जनेभ्यो हितां तव शोभनां मतिं च) अस्मभ्यं रास्व (=अस्मभ्यं देहि) ॥

## सूक्तम् ५८—२९२.

विश्वामित्र ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः ॥

**धेनुः प्रत्नस्य काम्यं दुहानान्तः पुत्रश्चरति दक्षिणायाः ।**
**आ द्योतनिं वहति शुभ्रयामोषसः स्तोमो अश्विनावजीगः ॥१॥**

धेनुः । प्रत्नस्य । काम्यम् । दुहाना । अन्तरिति । पुत्रः । चरति । दक्षिणायाः ।
आ । द्योतनिम् । वहति । शुभ्रऽयामा । उषसः । स्तोमः । अश्विनौ । अजीगरिति ॥ १ ॥

## भाषायाम्.

१. धेनुः (=उषोरूपा) प्रत्नस्य काम्यं दुहाना [भवति] (=सनातनेनाग्निना यद्वाञ्छितं तस्य दात्री भवति)। दक्षिणायाः पुत्रः (=उषसः सूनुः सूर्यरूपोऽग्निर्) अन्तश्चरति (=अन्तरिक्षे संचारं करोति)। शुभ्रयामा (=शुभ्ररथा) [उषा]

६. हे देदीप्यमान अग्नी, जी तुझी नानारूप [ आणि ] सतत चालणारी उपकारबुद्धि मेघवृष्टीच्या धारेप्रमाणें [ लोकांला ] पुष्ट करिते, ती उपकारबुद्धि, हे जातवेदा, [ आणि ] हे वसू, सर्वजनांचें कल्याण करणारी चांगली मति तूं आम्हांला दे.

6. Give us, o omniscient Agni, that multiform benevolence of thine o brilliant one, which, fattens like a continuous stream of rainwater. O good [ Agni], give us thy favour which benefits all people.

---

## सूक्त ५८-२९२.

ऋषि-विश्वामित्र. देवता-अश्वी. वृत्त-त्रिष्टुप्.

१. धेनु, सनातन जो त्याणें वांछिलेल्या वस्तूचा पान्हा सोडणारी [ होय ]. उषेचा पुत्र आंत फिरतो. शुभ्ररथ [ उषा ] प्रकाशाला आणिते. उषेचें स्तोत्र अश्वींला जागृत करितें.

## Hymn 58-292.

To the *As'vins.* By *Vis'vâmitra.* Metre—*Trishṭubh.*

1. The milch-cow yields the desire of the ancient one. The son of the Dawn walks within her. She who has a white chariot brings light. The hymn of Ushas awakens the As'vins.

---

१. ह्या मंत्राच्या आरंभीं एक कोडें आहे. सायणानुमतें 'धेनु' सांगितली ती उषा आणि 'सनातन' सांगितला तो अग्नि होय.

'उषेचें स्तोत्र.' म्हणजे उषःकाळीं उषेच्या प्रेरणेनें झालेलें जें उपासकाचें स्तोत्र तें. अश्वी उषःकाळीं येतात असें वेदांत प्रसिद्ध आहे.

सुयुग्वहन्ति प्रति वामृतेनोर्ध्वा भवन्ति पितरेव मेधाः ।
जरेथामस्मद्वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक् ॥ २ ॥
सुऽयुक् । वहन्ति । प्रति । वाम् । ऋतेन । ऊर्ध्वाः । भवन्ति । पितराऽइव । मेधाः ।
जरेथाम् । अस्मत् । वि । पणेः । मनीषाम् । युवोः । अवः । चकृम । आ । यातम् । अर्वाक् ॥ २ ॥

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥
सुयुक्ऽभिः । अश्वैः । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् । श्लोकम् । अद्रेः ।
किम् । अङ्ग । वाम् । प्रति । अवर्तिम् । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥ ३ ॥

---

द्योतनिम् आ वहति (=ज्योतिरानयति) । उषसः स्तोमः (=उषसो देव्याः स्तोत्रम्) अश्विनौ अजीगः (=अश्विनौ जागरयति) ॥

---

## भाषायाम्.

२. [हे अश्विनौ], सुयुग् (=सुयुजः सुष्ठु रथे योजिता अश्वा) ऋतेन (=सत्यभूतेन रथेन) वां प्रति वहन्ति (=यज्ञं प्रापयन्ति) । मेधाः पितरेव ऊर्ध्वा भवन्ति (=मातापितरावभिलक्ष्य तयोरादरार्थं यथा पुत्राः सिद्धा भवन्ति तथा युवयोरादरार्थं यज्ञाः सिद्धा भवन्ति) । अस्मद् वि पणेर्मनीषां जरेथां (=हविषोऽदातुर्मनुष्यस्य याञ्चां विनाशयतं निष्फलां कुरुतं न त्वस्माकम्) । [वयं] युवोरवश्चकृम (=युवयोरर्थे हविः कृतवन्तः स्मः) । अर्वाग् आ यातं (=युवाम् अत्रागच्छतम्) ॥

३. दस्रौ (=शत्रूणामुपक्षपयितारौ) [युवां] सुयुग्भिरश्वैः (=रथे सुष्ठु योजितैरश्वैः) सुवृता रथेन (=सुचक्रेण रथेन) [आगत्य] अद्रेरिमं श्लोकं शृणुतं (=ग्राव्ण एतं नादं शृणुतम्) । अङ्ग अश्विना (=हे अश्विनौ), पुराजा विप्रासः (=पुरातनकाले जाता ऋषयो) वाम् अवर्तिं प्रति गमिष्ठा किम् आहुः (=युवाम् उपासकानां दुःखं प्रति=तत्परिहर्तुम् अतिशयेन गन्तारौ स्थ इति किं कथयन्ति)? यतः कथयन्ति अतः कारणाद् अस्माकं दुःखं परिहर्तुं युवां क्षिप्रमागच्छतम् इति भावः॥

२. [ हे अश्वी हो ], चांगले जोडिलेले [ अश्व ] सत्यरूप रथांत तुम्हांला आणितात. पित्यांप्रमाणें तुम्हांस [ अनुलक्षून ] यज्ञ सिद्ध होतात. आमची स्तुति निष्फळ न करितां कृपणाची [स्तुति] निष्फळ करा. आम्हीं तुम्हांकरितां हविरन्न सिद्ध केलें आहे. तुम्ही इकडे या.

३. चांगल्या जोडिलेल्या घोड्यांनीं चांगल्या चाकांच्या रथानें महापराक्रमकारी तुम्ही येऊन ग्राव्याचा हा ध्वनि ऐका. कारण कीं हे अश्वी हो, तुम्ही संकटाला उत्तम रीतीनें पावणारे आहां असें पुरातन विद्वान् कां म्हणतात?

2. The well-yoked horses bring you in the truthful chariot. Sacrifices stand up as for two parents. Disappoint the prayer rather of the miser than ours. We have prepared your oblation. Come you hither.

3. By well-yoked horses [and] an easy-rolling chariot, do you hear, o performers of wonderful deeds, the noise of the stone-press. Why, o As'vins, do the ancient sages say [ that] you most readily go to [ help ] distress ?

आ मन्येथामा गतं कच्चिदेवैर्विश्वे जनासो अश्विना हवन्ते ।
इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो अग्रे ॥
॥ ४ ॥

आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे । जनासः । अश्विना । हवन्ते ।
इमा । हि । वाम् । गोऽऋजीका । मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥ ४ ॥

तिरः पुरू चिदश्विना रजांस्याङ्गूषो वां मघवाना जनेषु ।
एह यातं पथिभिर्देवयानैर्दस्राविमे वां निधयो मधूनाम् ॥५॥३॥

तिरः । पुरु । चित् । अश्विना । रजांसि । आङ्गूषः । वाम् । मघऽवाना । जनेषु ।
आ । इह । यातम् । पथिऽभिः । देवऽयानैः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥ ५ ॥ ३ ॥

---

## भाषायाम्.

४. आ मन्येथां कच्चिद् एवैरा गतम् (=अस्माकं स्तुतिं जानीतं क्षिप्रैरश्वैरागच्छतं कच्चित्?=अवश्यं शृणुतं वेगवद्भिरश्वैरागच्छतं च)। हे अश्विना (=अश्विनौ), विश्वे जनासः (=जना) [वां] हवन्ते (=आह्वयन्ति)। [तदपि युवामस्मानेवागच्छतम्]। हि (=यस्मात्कारणाद्) इमा गोऋजीका मधूनि (=इमान् पयोमिश्रान् सोमरसान्) [ऋत्विजो] मित्रासो न (=सखाय इव) उस्रो अग्रे (=दिवसस्याग्रभागे) वां प्र ददुः (=युवाभ्यां प्रार्पयामासुः)॥

५. हे मघवाना (=मघवन्तौ धनवन्तावश्विनौ), जनेषु वाम् आङ्गूषः (=यद्यपि बहुषु जनेषु युवयोरर्थं स्तोत्रं वर्तते तदपि) हे अश्विना (=अश्विनौ), पुरू चिद् रजांसि तिरः (=बहून्यपि स्थानानि तिरस्कृत्य=बहूनुपासकान् अतिक्रम्य) देवयानैः पथिभिः (=देवगमनैर्मार्गैर्) इह आ यातम् (=अत्रागच्छतम्)। हे दस्रौ (=शत्रूणामुपक्षपयितारौ), इमे मधूनां निधयो वाम् (=इमानि मधुराणां सोमरसानां पात्राणि युवयोरर्थं भवन्ति)॥

४. तुम्ही लक्ष द्याल काय, आणि घोड्यांनीं याल काय? तुम्हां अश्वींला सकळ जन बोलावितात. कारण उषेच्या पूर्वीं गोरसमिश्रित हे सोमरस तुम्हांला [हे ऋत्विज्] मित्रांप्रमाणें अर्पण करीत आहेत.

५. हे अश्वी हो, देवांनीं संचार करण्याच्या मार्गांनीं अनेक लोक ओलांडून तुम्ही येथें या. हे धनसंपन्न [अश्वी हो], जनांमध्यें तुम्हांकरितां स्तोत्र [म्हटलें जातें]. हे महापराक्रमकारी [अश्वी] हो, हीं सोमरसांचीं पात्रें तुम्हांस अर्पण केलीं आहेत.

4. Will you mind us, will you come hither with horses? All people invoke you As'vins. For these sweet juices mixed with milk are yours. The priests have offered them like friends, before dawn.

5. Come over many regions, o As'vins,—there is praise for you, rich As'vins, among all people—come you hither by the paths along which the gods go. Here are cups of sweet juices for you, o conquering heroes!

४. 'उषेच्या पूर्वीं'=' उस्रो अग्रे.' म्हणजे प्रातःकाळच्या पूर्वीं, मोठ्या पहांटेस. 'उस्' शब्दाचा हा अर्थ योग्य आहे याविषयीं ऋ. ५. ३१. ८ आणि त्यावरील सायणभाष्य पहा.

५. 'अनेक लोक ओलांडून'='तिरः पुरू रजांसि.' म्हणजे दुसरे उपासक तुम्हांला बोलावितील, त्यांस टाकून तुम्ही आम्हांप्रत या.

**पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।**
**पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥ ॥ ६ ॥**

पुराणम् । ओकः । सख्यम् । शिवम् । वाम् । युवोः । नरा । द्रविणम् । जह्नाव्याम् ।
पुनरिति । कृण्वानाः । सख्या । शिवानि । मध्वा । मदेम । सह । नु । समानाः ॥ ६ ॥

**अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना ।**
**नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू ॥ ७ ॥**

अश्विना । वायुना । युवम् । सुऽदक्षा । नियुत्ऽभिः । च । सऽजोषसा । युवाना ।
नासत्या । तिरःऽअह्न्यम् । जुषाणा । सोमम् । पिबतम् । अस्रिधा । सुदानू इति सुऽदानू ॥ ७ ॥

---

## भाषायाम्.

६. वां पुराणम् ओकः सख्यं शिवं (=युवयोः पुरातनोनुग्रहः सख्यं च कल्याणकरं भवति) । हे नरा (=शूरावश्विनौ), युवोर्द्रविणं जह्नाव्यां [भवति] (=युवयोर्धनं युवाभ्यां दत्तं धनं जह्नुकुलजायां प्रजायां भवति) । शिवानि सख्या पुनः कृण्वानाः (=अस्माकं सुखकराणि परस्परसख्यानि पुनर्नवीकुर्वाणा वयं) समानाः (=परस्परसखायः सन्तो) मध्वा नु सह मदेम (=इदानीं मधुरस्य सोमरसस्य पानेन युगपद्धृष्टा भवेम) ॥

७. हे सुदक्षा (=शोभनबलौ) युवाना (=नित्यतरुणौ) हे सुदानू (=शोभनदानौ) नासत्या अश्विना (=नासत्यावश्विनौ), अस्रिधा (=अविनाशिनौ) युवं (=युवां) वायुना नियुद्भिश्च सजोषसा (=वायुना वायोर्वडवाभिश्च संगतौ सन्तौ) जुषाणा तिरोअह्न्यं सोमं पिबतं (=सेवमानौ ह्यस्तनं सोमं पिबतं=प्रीत्या पिबतम्) ॥

६. तुमचा पुरातन अनुग्रह [ आणि ] सख्य कल्याणकारक [ होय ]. हे शूर हो, तुमची संपत्ति जह्नुकुळांत [ आहे ]. आतां कल्याणकारक मैत्री पुनः ताजी करून परस्पर मित्र होत्साते आपण एकत्र सोमरसानें हर्ष पावूं.

6. Your ancient pleasure [and] friendship is blissful. Your wealth, o heroes, is in the family of Jahnu. Renewing [our] blissful friendships let us, [as] mutual friends, together be exhilarated with the sweet soma.

७. हे सुबल [ आणि ] सदातरुण अश्वी हो, हे महोदार नासत्य हो, अक्षय जे तुम्ही ते वायूसहित आणि [ त्याच्या ] नियुतांसहित [ येऊन ] पूर्व दिवशीं काढिलेला सोम प्रीतीनें प्या.

7. O As'vins, of great power [and] ever young, do you the uninjured ones, o bounteous Nâsatyas, drink with pleasure in company with Vâyu and his teams, the soma kept over night.

६. 'जह्नुकुळांत'='जाह्नव्याम्.' जह्नूच्या कुळांत अश्वींची उपासना प्रिय असून अश्वींला तें प्रिय असे. सू. ११६ मं. १९

७. 'नियुत्.' सू. १३६ मं. १

**अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।**
**रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥८॥**

अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीःऽभिः । यतमानाः । अमृध्राः ।
रथः । ह । वाम् । ऋतऽजाः । अद्रिऽजूतः । परि । द्यावापृथिवी इति । याति । सद्यः ॥ ८ ॥

**अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे ।**
**रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः ॥९॥४॥**

अश्विना । मधुसुत्ऽतमः । युवाकुः । सोमः । तम् । पातम् । आ । गतम् । दुरोणे ।
रथः । ह । वाम् । भूरि । वर्पः । करिक्रत् । सुतऽवतः । निःऽकृतम् । आऽगमिष्ठः ॥ ९ ॥ ४ ॥

---

## भाषायाम्.

८. हे अश्विना (=अश्विनौ), पुरूचीरिषः (=बह्व्यो हविष आहुतय उपासकैर्दत्ता) गीर्भिर्यतमानाः (=उपासकैः कृताभिः स्तुतिभिः स्पर्धमानाः सत्यः) अमृध्राः (=अहिंसिताः=अश्रान्ताः सत्यो) वां परि ईयुः (=वां परिवेष्टयन्ति)। ऋतजाः (=सत्यरूपाय यज्ञाय प्रादुर्भूतः) अद्रिजूतः (=अद्रिणा ग्राव्णा प्रेरितः= ग्राव्णो ध्वनिं श्रुत्वा सत्वरम् आगच्छन्) वां (=युवयो) रथः सद्यो द्यावापृथिवी परि याति (=तत्क्षणमेव द्यावापृथिव्योः परितो गच्छति) ॥

९. हे अश्विना (=अश्विनौ), [अयं] युवाकुः (=युवयोः) सोमो मधुसुत्तमः (=मधुरसम् अत्यन्तं प्रेरयन् माधुर्योपेतो) [भवति]। तं पातं (=पिबतम्)। दुरोणे आ गतम् (=अस्माकं गृह आगच्छतम्)। भूरि वर्पः करिक्रत् (=प्रभूतं रूपं पुनःपुनः कुर्वत्=बहूनि रूपाणि धारयन्) वां रथः सुतवतो निष्कृतं (=सोमम् अभिषुण्वतो यजमानस्य गृहम्) आगमिष्ठो ह (=अतिशयेन आगच्छन् भवति खलु) ॥

८. हे अश्वी हो, [ उपासकांनीं अर्पिलेलीं ] अनेक अन्नें तुम्हांला वेष्टितात; स्तुतींनीं युक्त [ अनेक अन्नें ] न थकतां [ तुम्हांला वेष्टितात]. सत्यजात [आणि ] पाषाणप्रेरित [ असा जो ] तुमचा रथ, [तो] तत्क्षणीं द्यावापृथिवी सभोंतालीं भ्रमण करितो.

8. O As′vins, numerous offerings accompanied by hymns untiringly surround you. Your chariot, truth-born, [and] hastened by the stone-press, at once goes round Heaven and Earth.

९. हे अश्वी हो, [ हा ] अत्यंत मधुर सोम तुम्हांकरितां [ आहे ]. तो तुम्ही प्या. [ आमच्या ] घरीं या. महा स्वरूप प्रगट करणारा तुमचा रथ सोम काढणाऱ्या उपासकाच्या घरीं अत्यंत आदरानें येणारा [ होय ].

9. O As′vins, [ this ] your soma [ is ] full of sweetness. Drink it. Come into the house. Your chariot that assumes many forms most readily goes to the house of him who has extracted the soma [ for you ].

---

८. 'वेष्टितात.' म्हणजे उपासकांनीं म्हटलेली सूक्तें आणि अर्पिलेल्या आहुति जाऊन अश्वींसमोर उभ्या राहतात आणि पुष्कळ असल्यामुळें त्याला घेरितात.

'पाषाणप्रेरित'='अद्रिजूतः.' म्हणजे माव्यांचा नाद ऐकून धांवत आलेला.

तात्पर्य. मोठ्या पहांटेस माव्यांचा आवाज ऐकून अश्वी रथारूढ होतात आणि नित्याप्रमाणें पृथिवीप्रदक्षिणा करण्याला आरंभ करितात.

## सूक्तम् ५९–२९३.

विश्वामित्र ऋषिः । मित्रो देवता । त्रिष्टुप् छन्दः । अन्त्याश्वतस्रो गायत्र्यः ॥

**मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।**
**मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥ १ ॥**

मित्रः । जनान् । यातयति । ब्रुवाणः । मित्रः । दाधार । पृथिवीम् । उत । द्याम् ।
मित्रः । कृष्टीः । अनिऽमिषा । अभि । चष्टे । मित्राय । हव्यम् । घृतऽवत् । जुहोत ॥ १ ॥

**प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन ।**
**न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥२॥**

प्र । सः । मित्र । मर्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य । शिक्षति । व्रतेन ।
न । हन्यते । न । जीयते । त्वाऽऊतः । न । एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् ॥ २ ॥

---

### भाषायाम्.

१. मित्रो ब्रुवाणो जनान् यातयति (=अनुग्रहबुद्ध्या वदन् जनान् स्वस्वकर्मसु व्यापृतान् करोति)। मित्रः पृथिवीम् उत द्यां दाधार (=पृथिवीं द्यां च धारयति)। मित्रः अनिमिषा (=सततं) कृष्टीरभि चष्टे (=सर्वजनान् आभिमुख्येन पश्यति)। मित्राय [हे ऋत्विजः], घृतवत् (=घृतयुक्तं) हव्यं जुहोत (=हविः प्रयच्छत) ॥

२. आदित्य (=अदितेः पुत्र) हे मित्र, यो [मर्त्यस्] ते व्रतेन शिक्षति (=कर्मणा यज्ञरूपेण तुभ्यं हविर्ददाति=त्वां भजते) स मर्तः (=मर्त्यः) प्रयस्वान् अस्तु (=अन्नवान् भवतु)। त्वोतः (=त्वया रक्षितो जनः) [कैरपि] न हन्यते न [वा] जीयते। एनम् अंहः (=दुःखं) नान्तितो न दूरात् अश्नोति (=न समीपदेशात् नापि दूरदेशात् प्राप्नोति) ॥

## सूक्त ५९-२९३.

ऋषि-विश्वामित्र. देवता-मित्र. वृत्त-पहिल्या पांच त्रिष्टुप्; उरलेल्या चार गायत्री.

१. मित्र बोलून जनांकडून प्रयत्न करवितो. मित्र पृथिवीला आणि द्यूला धारण करितो. मित्र लोकांला सदैव पाहत असतो. [ हे ऋत्विजांनो ], तुम्ही मित्राला घृतयुक्त हव्य अर्पण करा.

२. हे मित्रा, अदितीच्या पुत्रा, जो मर्त्य कर्मानें तुला [हवि] अर्पण करितो तो विशेषें करून अन्नसमृद्ध होओ. त्वां ज्याला रक्षिलें तो मारिला जात नाहीं अथवा जिंकिला जात नाहीं. त्याला दुःख जवळून प्राप्त होत नाहीं, आणि दूरूनहि प्राप्त होत नाहीं.

## HYMN 59-293.

To *Mitra*. By *Vis'vâmitra*. Metre—*Trishṭubh* 1-5; *Gâyatrî*, 6-9.

1. Mitra speaking kindly makes people active. Mitra supports the earth and the heaven. Mitra unceasingly observes the people. To Mitra offer [o priests], the oblation mixed with clarified butter.

2. May that mortal, o Mitra, who offers oblation to thee, o son of Aditi, by a sacrifice, be rich in food. He who is supported by thee is not killed, is not conquered. Him distress reaches not from near, nor from afar.

---

१. 'प्रयत्न करवितो '='यातयति.' म्हणजे सर्व प्राण्यांस आपापल्या कामीं व्यापृत करितो. 'मित्र' या देवाविषयीं सू. २ मं. ७ आणि सू. ११५ मं. ५ पहा.

अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ ३ ॥
अनमीवासः । इळया । मदन्तः । मितऽज्ञवः । वरिमन् । आ । पृथिव्याः ।
आदित्यस्य । व्रतम् । उपऽक्षियन्तः । वयम् । मित्रस्य । सुऽमतौ ।
स्याम ॥ ३ ॥
अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ४ ॥
अयम् । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः । अजनिष्ट ।
वेधाः ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥४

---

### भाषायाम्.

३. अनमीवासः (=रोगरहिता) इळया मदन्तः (=हविरन्नेन माद्यन्तः) पृथिव्या वरिमन् आ मितज्ञवः (=पृथिव्या विस्तीर्णे प्रदेशे तले संकुचितजानुकाः) आदित्यस्य व्रतं (=कर्म) उपक्षियन्तः (=आचरन्तो) वयं मित्रस्य सुमतौ स्याम (=शोभनायामनुग्रहबुद्ध्यां वर्तेमहि) ॥

४. अयं मित्रो नमस्यः (=संभजनीयः) सुशेवः (=शोभनसुखकारी) सुक्षत्रः (=शोभनबलो) वेधाः (=मेधावी) राजा अजनिष्ट (=जातोस्ति)। वयं यज्ञियस्य (=यज्ञार्हस्य) तस्य सुमतौ (=शोभनमतौ) भद्रे सौमनसे अपि (=कल्याणकारिणि सौमनस्ये) [च] स्याम (=वर्तेमहि) ॥

अपिः सप्तमीद्योतनः ॥

३. रोगरहित, अन्नानें हर्ष पावणारे, पृथिवीच्या तळावर गुडघे टेकणारे, अदितीच्या पुत्राची आज्ञा आचरणारे, असे जे आम्ही ते मित्राच्या कृपेमध्यें राहूं असें घडो.

४. हा मित्र नमस्कारयोग्य, चांगलें सुख देणारा, चांगला बळवान् आणि मेधावी राजा उत्पन्न झाला. त्या यजनीय [ मित्रा]च्या कृपेमध्यें [ आणि ] कल्याणकारक प्रसादामध्यें आम्ही राहूं असें घडो.

3. Free from disease, exhilarated by the sacrificial food [and] kneeling on the surface of the earth [and] performing the rite of the Âditya, may we be in the good grace of Mitra.

4. This Mitra was born a king worthy of adoration, giving happiness, mighty, wise. May we be in the good grace [and] in the blessed friendship of him the adorable one.

---

३. 'गुडघे टेंकणारे'=' मितज्ञवः.' प्रयोगान्तरें पाहून हा अर्थ दिला आहे. या वरून प्राचीन आर्य आधुनिक किती एक ( ख्रिस्तानुयायी इत्यादिक) उपासक जनांप्रमाणें उपासनेच्या वेळीं गुडघे टेंकीत असत असें दिसतें. ऋ. ७. ८२. ४ यांत ऋषि म्हणतो कीं, 'हे इंद्रावरुण हो, 'संग्रामप्रसंगीं आम्ही हवि अर्पण करून तुमचाच धांवा करितों, क्षेम मिळवावयाचें असलें तर गुडघे टेकून आम्ही तुमचाच धांवा करितों' ( युवामिद्युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः...हवामहे )·असें सांगितलें आहे. ऋ. ६. ३२. ३ आणि ७. ९५. ४ आणि त्यांवरील सायणभाष्य पहा.

महाँ आदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः ।
तस्मा एतत्पन्यतमाय जुष्टमग्नौ मित्राय हविरा जुहोत ॥ ५ ॥५॥
महान् । आदित्यः । नमसा । उपऽसद्यः । यातयत्ऽजनः । गृणते ।
सुऽशेवः ।
तस्मै । एतत् । पन्यंऽतमाय । जुष्टम् । अग्नौ । मित्राय । हविः ।
आ । जुहोत ॥ ५ ॥ ५ ॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि ।
द्युम्नं चित्रश्रवस्तमम् ॥ ६ ॥
मित्रस्य । चर्षणिऽधृतः । अवः । देवस्य । सानसि ।
द्युम्नम् । चित्रश्रवःऽतमम् ॥ ६ ॥

अभि यो महिना दिवं मित्रो बभूव सप्रथाः ।
अभि श्रवोभिः पृथिवीम् ॥ ७ ॥
अभि । यः । महिना । दिवम् । मित्रः । बभूव । सऽप्रथाः ।
अभि । श्रवःऽभिः । पृथिवीम् ॥ ७ ॥

---

## भाषायाम्.

५. महान् आदित्यो नमसा ( =स्तोत्रेण ) उपसद्यः ( =उपासनीयो ) [ भवति ] । यातयज्जनः ( =जनानां स्वस्वकर्मणि प्रेरयिता स ) गृणते सुशेवः ( =स्तोत्रे सुसुखकारी भवति ) । तस्मै पन्यतमाय (=स्तुत्यतमाय ) मित्राय एतत् जुष्टं हविः (=प्रियं हविर् ) अग्नौ आ जुहोत ( =अग्नौ प्रक्षिपत ) ॥

६. चर्षणीधृतः ( =मनुष्याणां धारयितुर् ) देवस्य मित्रस्य अवः ( =प्रीतिः ) सानसि ( =जयशीला=जयस्य दात्री ) [ भवति ] । [ तस्य ] द्युम्नं चित्रश्रवस्तमं ( =धनं च शोभनकीर्तेरतिशयेन दातृ ) [ भवति ] ॥

७. यः सप्रथाः ( =कीर्तिमान् ) मित्रो महिना (=महिम्ना ) अभि बभूव (=जितवान्=परिरिचे ) [ स ] पृथिवीं श्रवोभिरभि [ बभूव ] ( =स्वकीर्तिभिः पृथिवीं जितवान्=पृथिव्या अपि तस्य यशो भूयो भवति ) ॥

५. [ हा ] महान् आदित्य नमस्कारानें उपास्य, जनांला [कर्ममध्यें] प्रवृत्त करणारा, [आणि] स्तोत्याला चांगलें सुख देणारा [ होय ]. त्या अत्यंत स्तवनीय मित्राप्रीत्यर्थ प्रिय हवि अग्नीमध्यें तुम्ही अर्पण करा.

६. जनांतें धारण करणारा असा जो देदीप्यमान मित्र, त्याचा संतोष जयदायक [ होय ], [आणि] त्याचें वैभव अत्यंत सुंदरकीर्तिसंपन्न [ होय ].

७. जो कीर्तिमान् मित्र आपल्या महिम्यानें द्युलोकाला मागें टाकिता झाला, त्यानें आपल्या कीर्तीच्या योगानें पृथिवी मागें टाकिली.

5. Great is the Âditya, worthy of being worshipped with obeisance, the inspirer of people, giver of happiness to the poet. To that Mitra, most deserving of praise, offer this dear oblation in Agni.

6. The gratification of divine Mitra, the supporter of men, [is] the source of victory. [ His ] wealth [is] most highly renowned.

7. Renowned Mitra who surpassed the heaven by his greatness surpassed the earth by his glory.

---

७. मित्राचा महिमा इतका मोठा आहे कीं, तो द्युलोकांत मावत नाहीं, आणि त्याचीं यशें इतकीं मोठीं आहेत कीं तीं सगळ्या पृथिवींत मावत नाहींत.

मित्राय पञ्च येमिरे जना अभिष्टिशवसे ।
स देवान्विश्वान्बिभर्ति ॥ ८ ॥

मित्राय । पञ्च । येमिरे । जनाः । अभिष्टिऽशवसे ।
सः । देवान् । विश्वान् । बिभर्ति ॥ ८ ॥

मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे ।
इष इष्टव्रता अकः ॥ ९ ॥ ६ ॥

मित्रः । देवेषु । आयुषु । जनाय । वृक्तऽबर्हिषे ।
इषः । इष्टऽव्रताः । अकरित्यकः ॥ ९ ॥ ६ ॥

---

**भाषायाम्.**

८. अभिष्टिशवसे ( =शत्रूणामभिगन्तृबलाय ) मित्राय पञ्च जना येमिरे ( =आत्मानं यच्छन्ति=तेन नियम्यन्ते ) । स विश्वान् देवान् बिभर्ति ( =धारयति=तेषामीश्वरो भवति ) ॥

९. मित्रो देवेषु ( =तेजस्विषु ) आयुषु ( =मनुष्येषु यजमानेषु मध्ये ) वृक्तबर्हिषे जनाय ( =यज्ञार्थमास्तृतदर्भाय जनाय ) इष्टव्रता इषः ( =इष्टानि कल्याणानि कर्माणि याभिः सिध्यन्ति तादृशीरन्नसंपदः ) अकः ( =करोति ) ॥

---

## सूक्तम् ६०–२९४.

विश्वामित्र ऋषिः । ऋभवो देवता । जगती छन्दः ॥

इहेह वो मनसा बन्धुता नर उशिजो जग्मुरभि तानि वेदसा ।
याभिर्मायाभिः प्रतिजूतिवर्पसः सौधन्वना यज्ञियं भागमानश ॥ १ ॥

इहऽइह । वः । मनसा । बन्धुता । नरः । उशिजः । जग्मुः । अभि । तानि । वेदसा ।
याभिः । मायाभिः । प्रतिजूतिऽवर्पसः । सौधन्वनाः । यज्ञियम् । भागम् । आनश ॥ १ ॥

---

**भाषायाम्.**

१. हे नरः ( =शूरा ऋभवः ), उशिजः ( =हविः कामयमाना ) वो बन्धुता

८. विजयकारक बल असलेला जो मित्र त्याच्या अधिकाराखालीं पंच जन आहेत. तो मित्र सकळ देवांनां धारण करितो.

९. मित्र तेजस्वी उपासकजनांमध्यें दर्भ आंथरणाऱ्या जनांसाठीं मनोरथ सिद्धीस नेणाऱ्या अन्नसंपदा प्राप्त करून देतो.

8. To Mitra who has overpowering strength the five peoples are subject. He supports all the gods.

9. Mitra bestows foods that accomplish all acts on him who has spread the [kus'a]-grass among wealthy worshippers.

८. 'पंच जन.' म्हणजे सर्व जगत्. | सू. ८९ मं. १० पहा.

## सूक्त ६०–२९४.

ऋषि–विश्वामित्र. देवता–ऋभु; शेवटच्या तीन ऋचा इंद्राविषयींहि आहेत. वृत्त–जगती.

१. हे शूर [ऋभूंनो], शत्रूचा परिहार करण्याजोगें तेज धारण करणारे सुधन्वपुत्र तुम्ही ज्या चमत्कारिक कृत्यांनीं यज्ञहवीच्या भागाला पावलां, तीं [कृत्यें] तुम्ही उत्सुक बंधु चातुर्यानें [आणि] ज्ञानानें येथेंच संपादिते झालां.

## Hymn 60-294.

To the *Ribhus;* the last three verses are about the *Ribhus* and *Indra.* By *Vis'vâmitra.* Metre—*Jagatî.*

1. Here, here, o brave [Ribhus], did your anxious brotherhood with skill [and] with knowledge accomplish those feats, by means of which [you] the sons of Sudhanvan, [who are] possessed of power able to defeat [the enemy], attained a portion of the sacrifice.

१. 'ऋभु.' सू. २० मं. १ पहा. 'यज्ञहवीचा भाग पावलां.' म्हणजे देव झालां असें तात्पर्य.

'येथेंच'='इहेह.' म्हणजे या पृथिवीवर. 'चमसांला विभागिते झालां.' सू. २० मं. ६

याभिः शचीभिश्चमसाँ अपिंशत यया धिया गामरिणीत चर्मणः ।
येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥ २ ॥

याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया । गाम् । अरिणीत । चर्मणः ।
येन । हरी इति । मनसा । निःऽअतक्षत । तेन । देवऽत्वम् । ऋभवः । सम् । आनश ॥ २ ॥

इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे ।
सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥ ३ ॥

इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः । नपातः । अपसः । दधन्विरे ।
सौधन्वनासः । अमृतऽत्वम् । आ । ईरिरे । विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥ ३ ॥

---

( =युष्माकं बन्धुसमूहः=परस्परं बन्धुभूता यूयम् ) इहेह ( =इह पृथिव्यामेव ) मनसा वेदसा ( =प्राज्ञया कौशलेन च ) तानि [ कर्माणि ] अभि जग्मुः ( =प्रापुः=कृतवन्तः स्थ ) याभिर्मायाभिः ( =यैः कर्मभिः ) प्रतिजूतिवर्पसः ( =प्रतिपक्षाभिभवनशीलतेजोयुक्ताः ) सौधन्वनाः ( =सुधन्वनः पुत्राः ) [ यूयं ] यज्ञियं भागम् आनश ( =यज्ञसंबन्धिनं भागं प्राप=देवभूयं गत्वा यज्ञार्हत्वं प्राप्तवन्तः स्थ ) ॥

---

## भाषायाम्.

२. हे ऋभवः, याभिः शचीभिः ( =शक्तिभिश् ) चमसान् अपिंशत ( =विभक्तवन्तः स्थ ) यया धिया गां चर्मणः ( =चर्मणः सकाशाद् ) अरिणीत ( =निरगमयत ) येन मनसा (=प्रज्ञानेन ) हरी निरतक्षत (=इन्द्रस्य सुवर्णावश्वौ निर्मितवन्तः स्थ ) तेन देवत्वं सम् आनश ( =प्राप=यस्माद्यूयं तानि तान्याश्चर्यजनकानि कर्माणि कृतवन्तः स्थ अतः कारणाद्यूयं देवा बभूव ) ॥

३. ऋभव इन्द्रस्य सख्यं सम् आनशुः ( =देवभूयं गत्वेन्द्रस्य सखायो बभूवुः ) । मनोर्नपातः ( =मनोः पुत्रा मानवाः सन्तोपि ) अपसः ( =कौशलकारिणः सन्तो )

२. तुम्हीं ज्या शक्तींनीं चमसांला विभागिते झालां, ज्या युक्तीनें तुम्ही गाईला चामड्यांतून कांढिते झालां, ज्या चातुर्यानें तुम्ही दोन पिवळे घोडे उत्पन्न करिते झालां, त्याच्या योगानें हे ऋभूंनो, तुम्ही देवत्वाप्रत पावलां.[२]

३. ऋभु इन्द्राचें मित्रत्व पावले. कर्मकारी ते मानव मृत्यूपासून तरले. सुधन्व्याचे सुचरित पुत्र, कौशल्याच्या योगानें [आणि] सुकृत्याच्या योगानें अमरत्वाप्रत पावले.

2. Inasmuch as you divided the bowls with [your] powers, inasmuch as you produced the cow from the hide by [your] skill, inasmuch as you created the pair of golden horses by [your] wisdom, therefore, o Ribhus, you attained to immortality.

3. The Ribhus attained to the friendship of Indra. [Though] sons of man the skilful ones were saved [from death]. The righteous sons of Sudhanvan, having worked through feats [and] through skill, attained to immortality.

---

२. 'गाईला.' सू. ११० मं. ८ 'पिवळे घोडे.' इंद्राचे. सू. १६१ मं. ६

इन्द्रेण याथ सरथं सुते सचाँ अथो वशानां भवथा सह श्रिया ।
न वः प्रतिमै सुकृतानि वाघतः सौधन्वना ऋभवो वीर्याणि च ॥
॥ ४ ॥

इन्द्रेण । याथ । सऽरथम् । सुते । सचा । अथो इति । वशानाम् ।
भवथ । सह । श्रिया ।
न । वः । प्रतिऽमै । सुऽकृतानि । वाघतः । सौधन्वनाः । ऋभवः ।
वीर्याणि । च ॥ ४ ॥

इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।
धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥
॥ ५ ॥

इन्द्र । ऋभुऽभिः । वाजवत्ऽभिः । सम्ऽउक्षितम् । सुतम् । सोमम् ।
आ । वृषस्व । गभस्त्योः ।
धिया । इषितः । मघऽवन् । दाशुषः । गृहे । सौधन्वनेभिः । सह ।
मत्स्व । नृऽभिः ॥ ५ ॥

---

दधन्विरे (=मरणाद्रक्षिताः=अमरणा बभूवुः) । सुकृतः (=सुचरिताः) सौधन्वनासः (=सुधन्वनः पुत्रा ऋभवः) शमीभिः सुकृत्यया (=कर्मभिः शोभनकृत्या च) विष्ट्वी (=व्यापृता भूत्वा) अमृतत्वम् आ ईरिरे (=प्रापुः) ॥

---

## भाषायाम्.

४. [हे ऋभवः], सुते सचा (=सोमेभिषुते सति) [यूयम्] इन्द्रेण सरथं याथ (=इन्द्रेण सह समानं रथमारूढा गच्छथ) । अथो (=तथा कृत्वा च) वशानां श्रिया सह भवथ (=युष्मदिच्छानां विषयभूताभिः संपद्भिर्युक्ता भवथ) । हे वाघतः (=पूर्वमुपासकभूताः) सौधन्वनाः (=सुधन्वनः पुत्राः), वः सुकृतानि (=शोभनानि चरितानि) वीर्याणि च (=वीरकर्माणि च) न प्रतिमै (=प्रतिमातुं न शक्यन्ते) ॥

५. हे इन्द्र, वाजवद्भिः (=वाजेन नाम ऋभूणामेकतमेन युक्तैः) ऋभुभिः [सहितस्त्वं] समुक्षितं (=सम्यक्पात्रेष्वासिक्तं) सुतम् (=अभिषुतं) सोमं गभस्त्योः (=उभाभ्यां हस्ताभ्यां गृहीत्वा) आ वृषस्व (=उदरे सिञ्च) । हे मघवन्, धिये-

४, [ हे ऋभूंनो ], सोमरस काढिला म्हणजे तुम्ही इंद्राच्या रथांत बसून येतां आणि तुम्हांला मनोरथांप्रमाणें भोग प्राप्त होतात. हे उपासक हो, हे सुधन्व्याचे पुत्र ऋभू हो, तुमच्या सुकृतांचें अथवा वीरचरितांचें अनुकरण करितां येत नाहीं.

५. हे इन्द्रा, वाजासहित [जे] ऋभु [ त्यां]सह तूं येऊन [ पात्रांत ] ओतलेला [ जो ] पिळून काढिलेला सोमरस [ तो ] दोन्ही हातांनीं [आपल्या पोटांत ] ओत. हे मघवन्, स्तुतीनें [ आळवून ] आणिलेला [ असा जो ] तूं [तो] हविर्दात्या उपासकाच्या घरीं शूर सुधन्वपुत्रांसहित हर्ष पाव.

4. When the soma is extracted, you go in the same chariot with Indra. And you obtain the honour of your wishes. It is not possible, o worshippers, o Ribhus, sons of Sudhanvan, to imitate either your good deeds or your exploits.

5. Accompanied by the Ribhus with Vâja among them, do thou quaff, o Indra, from both thy hands the extracted soma well poured [out into the cups]. Hastened by [our] praise do thou, o Indra with the brave sons of Sudhanvan, be exhilarated in the house of the sacrificer.

---

४. 'उपासक.' ऋभु पूर्वी उपासक होते. मागाहून देव झाले. म्हणून त्यांस 'उपासक' हें पद येथें लाविलें आहे.

इन्द्र॑ ऋ॒भुमा॑न्वाज॑वान्मत्स्वे॒ह नो॒ऽस्मिन्त्सव॑ने॒ शच्यां॑ पुरुष्टुत ।
इ॒मानि॒ तुभ्यं॒ स्वस॑राणि येमिरे व्र॒ता दे॒वानां॒ मनु॑षश्च॒ धर्म॑भिः ॥६॥

इन्द्र॑ । ऋ॒भुऽमा॑न् । वाज॑ऽवान् । म॒त्स्व॒ । इ॒ह । नः॒ । अ॒स्मिन् । सव॑ने ।
शच्या॑ । पु॒रु॒ऽस्तु॒त॒ ।
इ॒मानि॑ । तुभ्य॑म् । स्वस॑राणि । ये॒मि॒रे॒ । व्र॒ता । दे॒वाना॑म् । मनु॑षः । च॒ ।
धर्म॑ऽभिः ॥ ६ ॥

इन्द्र॑ ऋ॒भुभि॑र्वा॒जिभि॑र्वा॒जय॑न्नि॒ह स्तोमं॑ जरि॒तुरुप॑ याहि य॒ज्ञिय॑म् ।
श॒तं केते॑भिरिषि॒रेभि॑रा॒यवे॑ स॒हस्र॑णीथो अध्व॒रस्य॒ होम॑नि ॥७॥७॥

इन्द्र॑ । ऋ॒भुऽभिः॑ । वा॒जिऽभिः॑ । वा॒जय॑न् । इ॒ह । स्तोम॑म् । ज॒रि॒तुः ।
उप॑ । या॒हि॒ । य॒ज्ञिय॑म् ।
श॒तम् । केते॑भिः । इ॒षि॒रेभिः॑ । आ॒यवे॑ । स॒हस्र॑ऽनीथः । अ॒ध्व॒रस्य॑ ।
होम॑नि ॥ ७ ॥ ७ ॥

---

षितः (=स्तुत्या प्रेरितः=अस्माकं स्तुत्याऽऽनीतस्त्वं) नृभिः (=शूरैः) सौधन्वेभिः सह (=सुधन्वपुत्रैर्ऋभुभिः सह) दाशुषः (=हविर्दत्तवतो यजमानस्य) गृहे मत्स्व (=माद्य=हृष्टो भव) ॥

---

## भाषायाम्.

६. हे इन्द्र, ऋभुमान् (=ऋभुभिर्युक्तो) वाजवान् (=वाजेन युक्तस्त्वं) हे पुरुष्टुत (=पुरुभिः बहुभिः स्तुत), अस्मिन् सवने (=यज्ञे) शच्या (=तव शक्तया सह) इह मत्स्व (=हृष्टो भव)। इमानि स्वसराणि (=दिनानि) [धर्मभिः=स्वप्रवृत्त्यैव=स्वभावत एव] तुभ्यं येमिरे (=त्वदर्थमात्मानं यच्छन्ति=त्वया नियम्यन्ते)। देवानां मनुषश्च व्रता धर्मभिः (=देवानां मनुष्याणां च कर्माणि स्वप्रवृत्त्यैव) [तुभ्यं येमिरे=त्वदर्थमात्मानं यच्छन्ति] ॥

७. हे इन्द्र, वाजयन् (=अश्व इवाचरन् क्षिप्रमागच्छंस्त्वम्) ऋभुभिर्वाजिभिः (=वाजेन युक्तैर्ऋभुभिः सह) इह जरितुर्यज्ञियं स्तोमम् उप याहि (=अत्र यज्ञयोग्यं स्तोतुः स्तोत्रमागच्छ)। सहस्रनीथः (=सहस्रनयन) इषिरेभिः शतं केतेभिः (=वेगवद्भिः शतसंख्याकैरश्वैः) आयवे (=उपासकाय) अध्वरस्य होमनि (=सोमस्य होमे) [उप याहि=आगच्छ] ॥

६. हे इन्द्रा, हे बहुतांनीं स्तविलेल्या, तूं ऋभूंसहित [आणि] वाजासहित येथें आमच्या सवनांत शक्तीसहित हर्ष पाव. हे दिवस [ आणि ] देवांचीं आणि मानवाचीं कर्में स्वभावतः तुझे आज्ञेला पात्र आहेत.

७. हे इन्द्रा, वाजासहित [जे] ऋभु [ त्यां]सह त्वरा करून तूं स्तोत्याच्या यज्ञयोग्य स्तोत्राप्रत येथें ये. सहस्रनयन असा जो तूं तो वेगवान् शंभर घोड्यांसह उपासकासाठीं यज्ञाच्या होमांत [ये].

6, O Indra, praised by many, be thou exhilarated in this our soma-sacrifice, with Ribhu [and] with Vâja [ and ] with [ thy ] power. These days, [these] acts of the gods [and] of man are naturally subject to thee.

7. With the Ribhus having Vâja among them come thou, o Indra, quickly hither to the poet's song worthy of a sacrifice. Guiding in a hundred ways [come thou] with a hundred swift horses to the worshipper in the offering of the sacrifice.

## सूक्तम् ६१-२९५.

विश्वामित्र ऋषिः । उषा देवता । त्रिष्टुप् छन्दः ॥

उषो वाजेन वाजिनि प्रचेताः स्तोमं जुषस्व गृणतो मघोनि ।
पुराणी देवि युवतिः पुरंधिरनु व्रतं चरसि विश्ववारे ॥ १ ॥

उषः । वाजेन । वाजिनि । प्रऽचेताः । स्तोमम् । जुषस्व । गृणतः । मघोनि ।
पुराणी । देवि । युवतिः । पुरम्ऽधिः । अनु । व्रतम् । चरसि । विश्वऽवारे ॥ १ ॥

उषो देव्यमर्त्या वि भाहि चन्द्ररथा सूनृता ईरयन्ती ।
आ त्वा वहन्तु सुयमासो अश्वा हिरण्यवर्णां पृथुपाजसो ये ॥२॥

उषः । देवि । अमर्त्या । वि । भाहि । चन्द्रऽरथा । सूनृताः । ईरयन्ती ।
आ । त्वा । वहन्तु । सुऽयमासः । अश्वाः । हिरण्यऽवर्णाम् । पृथुऽपाजसः । ये ॥ २ ॥

---

### भाषायाम्.

१. वाजेन वाजिनि (=अन्नेनान्नवति) मघोनि (=धनवति) हे उषः, प्रचेता (=प्रकर्षेण ज्ञानवती त्वं) गृणतः स्तोमं जुषस्व (=स्तोतुः स्तोत्रं सेवस्व)। हे देवि विश्ववारे (=सर्वप्रिये), पुराणी युवतिः (=पुरातना सत्यपि सदा तरुणी) पुरंधि (=बहुस्तोत्रवती) [त्वम्] अनु व्रतं चरसि (=कर्मानुलक्ष्य गच्छसि=कर्मानुलक्ष्य=यज्ञादिकर्मसाधनायागच्छसि) ॥

२. हे देवि उषे, अमर्त्या [त्वं] चन्द्ररथा (=सुवर्णरथमारूढा) सूनृता ईरयन्ती (=स्तुतिवाचः प्रातरुदयेन प्रेरयन्ती सती) वि भाहि (=विशेषेण प्रकाशस्व) सुयमासः सुष्ठु नियन्तुं शक्याः) पृथुपाजसः (=प्रभूतबलयुक्ता) ये अश्वास् [ते] हिरण्यवर्णां (=सुवर्णवर्णां) त्वा आ वहन्तु (=आनयन्तु) ॥

## सूक्त ६१–२९५.

ऋषि–विश्वामित्र. देवता–उषा. वृत्त–त्रिष्टुप्.

१. हे उषे, हे अन्नानें अन्नसंपन्ने, हे धनवती, प्रज्ञानयुक्त [ अशी जी तूं ती ] स्तोत्याचें स्तोत्र सेवन कर. हे सर्वप्रिय देवी, सदा तरुण [ आणि ] बहु स्तुतियुक्त [ अशी जी ] पुरातन [ तूं ती ] कर्मांच्या मागून जातेस.

२. हे देवी उषे, सुवर्णरथवती [ आणि ] मधुर वाणींतें प्रेरणारी [अशी] मरणरहित [ जी तूं ती ] प्रकाश. जे महाबळवान् [ होत ] ते [ तुझे ] आज्ञाधारक अश्व तुज हिरण्यवर्णेला येथें आणोत.

## HYMN 61–295.

To *Ushas.* By *Viśvâmitra.* Metre—*Trishṭubh.*

1. O Ushas, rich in food, do thou full of intelligence, enjoy the praise of the poet, o wealthy one! O brilliant Ushas, loved of all, thou, the ancient [yet] ever youthful one, full of praise, comest for the rite.

2. O brilliant Ushas, do thou the immortal one possessed of a golden chariot, shine forth, inspiring sweet songs. May [thy] obedient horses which [are] full of great strength, bring thee hither—thou of golden colour.

---

१. 'कर्मांच्या मागून '=' अनु व्रतम्.' म्हणजे ज्या ज्या वेळी देवोपासना करावयाची, त्या त्या वेळीं पहांटेस कर्माला अनुलक्षून, म्ह. कर्म करितां यावें म्हणून.

२. ' मधुर वाणींतें प्रेरणारी '=' सूनृता ईरयन्ती.' म्हणजे उषा आल्या बरोबर कविता करण्याची स्फुरणा होते. हें प्रसिद्धच आहे.

उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः ।
समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व ॥ ३ ॥
उषः । प्रतीची । भुवनानि । विश्वा । ऊर्ध्वा । तिष्ठसि । अमृतस्य । केतुः ।
समानम् । अर्थम् । चरणीयमाना । चक्रम्ऽइव । नव्यसि । आ । ववृत्स्व ॥ ३ ॥
अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।
स्वर्जनन्ती सुभगा सुदंसा आन्ताद्दिवः पप्रथ आ पृथिव्याः ॥४॥
अव । स्यूमऽइव । चिन्वती । मघोनी । उषाः । याति । स्वसरस्य । पत्नी ।
स्वः । जनन्ती । सुऽभगा । सुऽदंसाः । आ । अन्तात् । दिवः । पप्रथे । आ । पृथिव्याः ॥ ४ ॥

---

### भाषायाम्.

३. हे उषः, अमृतस्य केतुः ( =अमरणत्वस्य प्रज्ञापयित्री त्वं ) विश्वा भुवनानि प्रतीची (=सर्वस्य जगत आभिमुख्येनागच्छन्ती ) ऊर्ध्वा तिष्ठसि (=उन्नता तिष्ठसि ) । हे नव्यसि, ( =नवीयसि=नित्यनूतने ) समानमर्थं चरणीयमाना ( =नित्यमेकमेव गन्तव्यं स्थलं प्रति गच्छन्ती त्वं ) चक्रमिव आ ववृत्स्व ( =यथा चक्रं पुनः पुनरावर्तते तथा त्वमावर्तस्व ) ॥

४ स्वसरस्य पत्नी ( =दिवसस्य भार्या ) मघोनी ( =धनोपेता ) उषाः स्यूम ( =अन्धकाररूपं वस्त्रम् ) अव चिन्वती इव ( =अपाकुर्वतीव ) याति ( =अन्तरिक्षे गच्छति ) । सुभगा ( =सौभाग्यवती ) सुदंसाः ( =सदाचरणवती ) [ सा ] स्वर्जनन्ती ( =प्रकाशं जनयन्ती सती ) दिवोन्ताद् आ ( =द्युलोकप्रान्तपर्यन्तम् ) आ पृथिव्या [ अन्ताच ] ( =पृथिवीप्रान्तपर्यन्तं च ) पप्रथे ( =प्रथते प्रकाशते ) ॥

३. हे उषे, अमरत्वाचा झेंडा [ अशी जी तूं ती ] सकळ भुवनाच्या तोंडासमोर येऊन उंच उभी राहतेस. हे नित्यनूतन [उषे], नित्य एकच स्थानाप्रत जाणारी [ अशी जी तूं ती ] चक्राप्रमाणें फिर.

3. O Ushas, coming opposite all creation, thou the banner of immortality, standest high [in heaven]. Daily going to the same goal do thou, o ever new one, turn round like a wheel.

४. [ अंधकाररूप ] पडद्याला काढून टाकीत टाकीत जी सूर्याची पत्नी धनसंपन्न, सौभाग्यवती [ आणि ] सुचरित उषा प्रकाशाला प्रगट करीत करीत जाते, ती द्यूच्या सीमेपर्यंत [आणि] पृथिवीच्या सीमेपर्यंत पसरते.

4. Rich Ushas, the consort of the day, comes removing [darkness] like a shroud. The fortunate and righteous [Ushas] producing the light spreads to the end of the heaven to the end of the earth.

